and the Ganges, the Kâverî and the Indus rivers. In the 6th Canto, on the occasion of describing the various kings assembled in Kuṇḍina, the capital of the Vidarbhas in Central India, the principal provinces of India have naturally been mentioned; these are Magadha, Aṅga, Avanti, Anûpa, Śúrasena, Kaliṅga, Pâṇḍya and Uttara-Kosala. As all the chief princes were expected to have come there, it is almost certain, as observed by Mark Collins,[27] that "we may see in this list a reflex of the principal kingdoms of India in the times of Kâlidâsa." The 13th Canto supplies some additional names of places lying in a straight line between Ceylon and Ayodhyâ; *e. g.* the mountain Mályavat, the lake Pampâ, the river Godávarî, the mountain Chitrakûṭa and the rivers Yamunâ and Sarayû. The description of many of these places is far from being conventional or traditional; it very often reads like such as would be given by an eye-witness, and it is pretty certain that our poet must have travelled widedly with an observant eye. No other poet in classical Sanskrit literature has described the country in such a familiar and vivid manner.

---

## (6) MALLINATHA.

There exist a large number of commentaries on this poem, but none of them is so well-known or so often studied as that of Mallinâtha, who enjoys a supreme position as the standard authority in the interpretation of Kálidása's poems. While writing about Kálidása we had to remark above that he says absolutely nothing about himself in his writings, and the same is true his great scholiast, Mallinâtha. Pandit Vámanácharya Zalktîkar, the editor of the Kâvyaprakáśa, wrote that Mallinátha was a Bráhmaṇa of the Kâśyapa gotra, and that his descendants were still living at Gajendragad in the Sâtara District. But the learned Pandit was hasty in his identification; for Mr. M. S. Śâstrî (in his "Second Report on the Search of Sanskrit MSS.") has shown that Mallinátha was a native of Tailangaṇa (Ândhra), which fact is now accepted as established. He had a son named Kumárasvámin, who was also an erudite scholar, and wrote a commentary on the Pratáparndrîya. In addition to his three commentaries on the three poems of Kálidása, Mallinátha is credited to have written (*a*) commentaries on अमरकोश, एकावली, काव्यादर्श, किरातार्जुनीय, तन्त्रवार्तिक, तार्किकरक्षा, नलोदय, नैषधीयचरित, प्रशस्तपादभाष्य, भट्टिकाव्य,

27 *The Geographical Data of the Raghuvaṃs'a and Das'akumâra-charita* (1907), p. 17.

लघुशब्देन्दुशेखर, शिशुपालवध, and सारमञ्जरी ; and (*b*) independently, these works—उदारकाव्य, रघुवीरचरितकाव्य, वैद्यकल्पतरु, and वैद्यरत्नमाला. It is possible that some of these productions belong to some other Mallinátha than our commentator ; for there have been many Mallinâthas, just as there have been many Kālidâsas.

The date of Mallinātha can be fixed with tolerable certainty. He has written a com. on the Ekâvalî, a work on alaṃkâra which frequently refers to King Vîra–Narasiṃha, whose reign extended up to 1314 A. D. Mallinâtha also often quotes the Pratâparudrîya, another work on alaṃkāra, which mentions King Pratâparudra who reigned from 1295 to 1323 A.D. Sir Dr. Bhándarkar has shown (p. xxi of his Preface to his 2nd ed. of the Mâl.–Mādh.) that Mallinâtha must be placed before the lexicographer Medinikara, the latest limit for whose date is 1431 A. D. Hence it is clear that the date of Mallinâtha approximately falls somewhere between 1325 and 1425 A. D. Most probably he belongs to the latter half of the 14th century.

Mallinâtha is a commentator of great merit and literary acumen. He was a profound grammarian, well versed in the Nyâya and Vaiśeshika philosophies, and thoroughly acquainted with Pauraṇic as well as secular literature, as he himself tells us in his introductory ślokas to the commentary on the Ragh. ; and the extreme popularity of his commentaries shows that this is not an idle boast. His commentaries are pre-eminently adapted to the needs of the advanced general reader. They are sufficiently expressive without being prolix. He never makes an unnecessary display of his knowledge, but strictly follows the principle he himself lays down, *viz.*, नामूलं लिख्यते किंचिन्नानपेक्षितमुच्यते. He is perhaps the only commentator on the poems of Kálidâsa who shows a critical appreciation of poetry and endeavours to preserve, as far as possible, the genuine readings of the poet, studiously rejecting the spurious substitutions of single words and phrases, and the occasional interpolations of whole ślokas. To his commentaries on the three poems of Kálidása he has given the title सञ्जीवनी, meaning thereby that his commentaries *re-inspire with life* the words of Kâlidâsa "that lay in a swoon under the effect of the poison of bad commentaries." Every student of Kâlidâsa now recognizes that this was no vain presumption ; Malli.'s commentaries have eclipsed all others, and he stands unrivalled as *the* commentator of Kâlidâsa's poetical works.

---

# Important Abbreviations.

———:o:———

A. G.—Apte's Guide to Sanskrit Composition.
AK., AMAR.—Amarakośa.
ATH.-V.—Atharva-Veda.
BA'L.—RA'M.—Bála-Râmâyaṇa (play).
BG.—Bhagavadgîtâ
BHAR.—Bhartrihari's Śatakas (N. and V.).*
BHATTI.—Bhaṭṭi-Kāvya.*
BH.-P.—Bhâgavata-Purâṇa.
BṚIH.-SAM.—Bṛihatsaṃhitâ.
BṚIH.-UP.—Bṛihadâraṇyakopanishad.
CHH.-UP.--Chhândogyopanishad.
D.-K.—Daśakumâracharita.*
D.-R.—Daśarūpaka.
GI'T.—Gîtagovinda.
H.-CH.—Harshacharita.
HEM.—Hemâdri.
HITOP.—Hitopadeśa.*
H. S. GR.—Higher Sanskrit Grammar (by M. R. Kâle).
HV.—Harivaṃśa.
KA'D.—Kâdambarî.*
KA'M. N.—Kâmandaka's Nîtisâra.
KA'S'.—Kâśikâ of Vâmana.
KA'S'-KH.—Káśîkhaṇḍa.
KATHA'S.—Kathásaritsâgara.
KA'V., K.-D.—Kâvyâdarśa of Daṇḍin.
KIR.—Kirâtârjunîya.*
K.-P.—Kāvya-Prakâśa.
KUM.—Kumârasaṃbhava.*
MAH.-BH.—Mahá-Bhárata.
MA'LAV.—Mâlavikâgnimitra.*
MALLI.—Mallinâtha.
MA'L.-MA'DH.—Mâlatî-Mâdhava.*
MA'RK.-P.—Mârkaṇḍeya-Purâṇa.
MEGH.—Meghadûta.*
MṚICH.—Mṛichchhakaṭika.
MUD.—Mudrârâkshasa.*
MV.—Mahâvîracharita.
M.-W.—Monier-Williams.
NA'G.—Nâgânanda.*
N.-CH.—Naishadhîya-Charita.
PA'N.—Pâṇini's Ashṭâdhyâyî.
PT.—Pañchatantra.*
RAGH.—Raghuvaṃśa.*
RA'M.—Râmâyaṇa of Vâlmîki.
RATN.—Ratnâvalî.*
ṚIG.-V.—Ṛig-Veda.
ṚITU'S.—Ṛitusaṃhâra.*
ŚA'K.—Śâkuntala.*
SA'M.-K.—Sāṃkhya-Kârikâ.
S.-D.—Sâhitya-Darpaṇa.
S.-D.-S.—Sarvadarśanasaṃgraha.
SID.-K.—Siddhāntakaumudî.
ŚIS'.—Śiśupâlavadha.
TARK.—Tarkasaṃgraha.
UP.—Upanishad.
UTTAR.—Uttararâmacharita.*
VALL.—Vallabhadeva.
VA'RT.—Vârttika.
VENI'.—Veṇîsaṃhâra.*
VIKR.—Vikramorvaśîya.*
VISH.-P.—Vishṇu-Purâṇa.
YOG.-S.—Yogasûtras.
&c. &c. &c.

* Annotated by the Editor.

॥ श्रीः ॥

# रघुवंशः ।

## संजीवन्या समेतः ।

### प्रथमः सर्गः ।

मातापितृभ्यां जगतो नमो वामार्धजानये[1] ।
सद्यो दक्षिणदृक्पातसंकुचद्वामदृष्टये ॥

अन्तरायतिमिरोपशान्तये शान्तपावनमचिन्त्यवैभवम् ।
तन्नरं वपुषि कुञ्जरं मुखे मन्महे किमपि तुन्दिलं महः[2] ॥

शरणं करवाणि शर्मदं ते चरणं वाणि चराचरोपजीव्यम् ।
करुणामसृणैः कटाक्षपातैः कुरु मामम्ब कृतार्थसार्थवाहम्[3] ॥

वाणीं काणभुजीमजीगणदवाशासीच्च वैयासकी-
मन्तस्तन्त्रमरंस्त पन्नगगवीगुम्फेषु चाजागरीत् ।
वाचामाकलयद्रहस्यमखिलं यश्चाक्षिपादस्फुरां
लोकेऽभूद्यदुपज्ञमेव विदुषां सौजन्यजन्यं यशः ॥

मल्लिनाथकविः सोऽयं मन्दात्मानुजिघृक्षया ।
व्याचष्टे कालिदासीयं काव्यत्रयमनाकुलम् ॥

कालिदासगिरां सारं कालिदासः सरस्वती ।
चतुर्मुखोऽथ वा साक्षाद्विदुर्नान्ये तु मादृशाः ॥

तथापि दक्षिणावर्तनाथाद्यैः क्षुण्णवर्त्मसु ।
वयं च कालिदासोक्तिष्ववकाशं लभेमहि ॥

भारती कालिदासस्य दुर्व्याख्याविषमूर्छिता ।
एषा संजीवनी टीका तामद्योज्जीवयिष्यति ॥

इहान्वयमुखेनैव सर्वं व्याख्यायते मया ।
नामूलं लिख्यते किंचिन्नानपेक्षितमुच्यते ॥

इह खलु सकलकविशिरोमणिः कालिदासः 'काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।

---

१ कथंभूताय मातापितृस्वरूपाय । वामार्धजानये वामार्धं जाया यस्य तस्मै । पुनः कीदृशाय दक्षिणदृक्पातेन शिवस्य दृष्टिपातेनेत्यर्थः संकुचन्ती वामा पार्वत्या इत्यर्थः दृष्टिः यस्य । २ गजाननाख्यं तेजः मन्महे इ० । ३कृतार्थसार्थवाहम्-साधुनिर्व्यूढटीकाकरणभारमिति श्लिष्टोऽर्थः। ४ वाणीं काणभुजीं-कणभुक्प्रणीतं वैशेषिकदर्शनम् । वैयासकीं-व्यासकृतानि अष्टादश पुराणानि । अन्तस्तन्त्रं तन्त्रशास्त्रे । पन्नगगवीगुम्फेषु पातञ्जलमहाभाष्ये इत्यर्थः । अक्षपादस्फुरां वाचां गौतमप्रणीतन्यायदर्शनस्य इ० । यदुपज्ञं-उपज्ञा आद्यज्ञानं यस्य उपज्ञा यदुपज्ञं । उपज्ञोपक्रमं तदाद्याचिख्यासायाम् ( २।४।२१ ) इति सूत्रेण तत्पुरुषस्य नपुंसकत्वम् । यस्मादुपज्ञा यस्य इति वा ।

सद्यः परनिर्वृतये कान्तासंमिततयोपदेशयुजे ॥ ' इत्याद्यालंकारिकवचनप्रामाण्यात्काव्यस्यानेकश्रेयःसाधनताम् ' काव्यालापांश्च वर्जयेत् ' इत्यस्य निषेधशास्त्रस्यासत्काव्यविषयतां च पश्यन् रघुवंशाख्यं महाकाव्यं चिकीर्षुः चिकीर्षितार्थाविघ्नपरिसमाप्तिसंप्रदायाविच्छेदलक्षणफलसाधनभूतविशिष्टदेवतानमस्कारस्य शिष्टाचारपरिप्राप्तत्वात् ' आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम् । ' इत्याशीर्वादाद्यन्यतमस्य प्रबन्धमुखलक्षणत्वात्काव्यनिर्माणस्य विशिष्टशब्दार्थप्रतिपत्तिमूलकत्वेन विशिष्टशब्दार्थयोश्च ' शब्दजातमशेषं तु धत्ते शर्वस्य वल्लभा । अर्थरूपं यदखिलं धत्ते मुग्धेन्दुशेखरः ॥ ' इति वायुपुराणसंहितावचनबलेन पार्वतीपरमेश्वरायत्तत्वदर्शनात्तत्प्रतिपित्सया तावेवाभिवादयते—

**वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये ।**
**जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ॥ १ ॥**

वागर्थाविवेत्येकं पदम् । इवेन सह समासो[3] विभक्त्यलोपश्च पूर्वपदप्रकृतिस्वरत्वं चेति वक्तव्यम् । एवमन्यत्रापि द्रष्टव्यम् । **वागर्थाविव** शब्दार्थाविव **संपृक्तौ** नित्यसंबद्धावित्यर्थः । नित्यसंबद्धयोरुपमानत्वेनोपादानात् । ' नित्यः शब्दार्थसंबन्धः ' इति मीमांसकाः । **जगतः** लोकस्य **पितरौ** । माता च पिता च पितरौ । ' पिता मात्रा ' इति द्वन्द्वैकशेषः । ' मातापितरौ पितरौ मातरपितरौ प्रसूजनयितारौ । ' इत्यमरः । एतेन शर्वशिवयोः सर्वजगज्जनकतया वैशिष्ट्यमिष्टार्थप्रदानशक्तिः परमकारुणिकत्वं च सूच्यते । पर्वतस्यापत्यं स्त्री पार्वती । ' तस्यापत्यम ' इत्यण् । ' टिड्ढाणञ्- ' इत्यादिना ङीप् । पार्वती च परमेश्वरश्च **पार्वतीपरमेश्वरौ** । परमशब्दः सर्वोत्तमत्वद्योतनार्थः । मातुरभ्यर्हितत्वादल्पाक्षरत्वाच्च पार्वतीशब्दस्य पूर्वनिपातः । **वागर्थप्रतिपत्तये** शब्दार्थयोः सम्यग्ज्ञानार्थम् । **वन्दे** अभिवादये । अत्रोपमालंकारः स्फुट एव । तथोक्तम्- ' स्वतःसिद्धेन भिन्नेन संपन्नेन च धर्मतः । साम्यमन्येन वर्ण्यस्य वाच्यं चेदेकगोपमा ॥ ' इति । प्रायिकश्चोपमालंकारः कालिदासोक्तकाव्यादौ । भूदेवताकस्य सर्वगुरोर्मगणस्य प्रयोगाच्छुभलाभः सूच्यते । तदुक्तम्- ' शुभदो मो भूमिमयः ' इति । वकारस्यामृतबीजत्वात्प्रचयगमनादिसिद्धिः ॥

संप्रति कविः स्वाहंकारं परिहरति ' क्व सूर्य- ' इत्यादिश्लोकद्वयेन—

**क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः ।**
**तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम् ॥ २ ॥**

प्रभवत्यस्मादिति प्रभवः कारणम् । ' ऋदोरप् । ' ' अकर्तरि च कारके संज्ञायाम् । ' इति साधुः । सूर्यः प्रभवो यस्य स **सूर्यप्रभवो वंशः क्व** । अल्पो विषयो ज्ञेयोऽर्थो यस्याः सा [ **अल्पविषया** ] मे **मतिः** प्रज्ञा **च क्व** । द्वौ क्वशब्दौ महदन्तरं सूचयतः । सूर्यवं-

१ का० प्र० १, २, २ का० द० १, १४. आशीर्वस्तुनमस्कारनिर्देशात्प्रथमं कविः । काव्यं कुर्वन्नविघ्नेन कीर्तिं प्रीतिं च विदन्ति ॥ इति सरस्वतीकण्ठाभरणम् । ३ अत्र नित्यसमास इति पाठो दृश्यते किं तु स प्रामादिक इव भाति महाभाष्ये नित्यशब्दरहितस्यैव पाठस्योपलम्भात् । अन्यथा उद्वाहुरिव वामनः इत्यादि प्रयोगाणामसाधुत्वापत्तेः । ४ अभ्यर्हितत्वात् पूज्यत्वात् । " अल्पाच्तरम् । " पा० २. २. ३४; अभ्यर्हितं च । वार्ति० । मातुरभ्यर्हितत्वे याज्ञवल्क्यः । ** एते मान्या यथापूर्वमेभ्यो माता गरीयसी ॥ उक्तं च-पितृतोऽपि गुरुर्माता नास्ति मातृसमो गुरुः । पतिता गुरवस्त्याज्या नैव माता कदाचन । गर्भधारणपोषाभ्यां तेन माता गरीयसी ॥ तथा च-उपाध्यायान् दशाचार्य आचार्याणां शतं पिता । सहस्रं तु पितॄन्माता गौरवेणातिरिच्यते॥ इति । पार्वत्या जगन्मातृत्वात् श्रेष्ठत्वं ज्ञेयम् ।

शमाकलयितुं न शक्नोमीत्यर्थः । तथा च तद्विषयप्रबन्धनिरूपणं तु दूरापास्तमिति भावः । तथा हि । **दुस्तरं** तरितुमशक्यम् । 'ईषद्दुःसुषु–' इत्यादिना खल्प्रत्ययः । **सागरं मोहाद्** अज्ञानाद् **उडुपेन** प्लवेन । 'उडुपं तु प्लवः कोलः' इत्यमरः । अथ वा चर्मावनद्धेन पानपात्रेण । 'चर्मावनद्धमुडुपं प्लवः काष्ठं करण्डवत्' इति सज्जनः । **तितीर्षुः** तरीतुमिच्छुः **अस्मि** भवामि । तरतेः सन्नन्तादुप्रत्ययः । अल्पसाधनैरधिकारम्भो न सुकर इति भावः । इदं च वंशोत्कर्षकथनं स्वप्रबन्धमहत्त्वार्थमेव । तदुक्तम् 'प्रतिपाद्यमहिम्ना च प्रबन्धो हि महत्तरः' इति ॥

**मन्दः कवियशःप्रार्थी गमिष्याम्युपहास्यताम् ।**
**प्रांशुलभ्ये फले लोभादुद्बाहुरिव वामनः ॥ ३ ॥**

किं च **मन्दः** । मूढः । 'मूढाल्पापटुनिर्भाग्या मन्दाः स्युः' इत्यमरः । तथापि **कवियशःप्रार्थी** । कवीनां यशः काव्यनिर्माणेन जातं तत्प्रार्थनाशीलोऽहं प्रांशुना उन्नतपुरुषेण लभ्ये प्राप्ये [ **प्रांशुलभ्ये** ] **फले** फलविषये **लोभाद् उद्बाहुः** फलग्रहणायोच्छ्रितहस्तः **वामनः** खर्वः **इव** । 'खर्वो ह्रस्वश्च वामनः' इत्यमरः । **उपहास्यताम्** उपहासविषयताम् । 'ऋहलोर्ण्यत्' इति ण्यत्प्रत्ययः । **गमिष्यामि** प्राप्स्यामि ॥

मन्दश्चेत्तर्हि त्यज्यतामयमुद्योग इत्यत आह—

**अथ वा कृतवाग्द्वारे वंशेऽस्मिन्पूर्वसूरिभिः ।**
**मणौ वज्रसमुत्कीर्णे सूत्रस्येवास्ति मे गतिः ॥ ४ ॥**

**अथ वा** पक्षान्तरे पूर्वैः सूरिभिः [ **पूर्वसूरिभिः** ] कविभिर्वाल्मीकादिभिः **कृतवाग्द्वारे** कृतं रामायणादिप्रबन्धरूपा या वाक्सैव द्वारं प्रवेशो यस्य तस्मिन् । **अस्मिन्** सूर्यप्रभवे **वंशे** कुले । जन्मनैकलक्षणः संतानो वंशः । वज्रेण मणिवेधकसूचीविशेषेण । 'वज्रं त्वस्त्री कुलिशशस्त्रयोः । मणिवेधे रत्नभेदे' इति केशवः । समुत्कीर्णे विद्धे [ **वज्रसमुत्कीर्णे** ] **मणौ** रत्ने **सूत्रस्य इव मे** मम **गतिः** संचारः **अस्ति** । वर्णनीये रघुवंशे मम वाक्प्रसरोऽस्तीत्यर्थः ॥

एवं रघुवंशे लब्धप्रवेशस्तद्वर्णनां प्रतिजानानः 'सोऽहम्' इत्यादिभिः पञ्चभिः श्लोकैः कुलकेनाह—

**सोऽहमाजन्मशुद्धानामाफलोदयकर्मणाम् ।**
**आसमुद्रक्षितीशानामानाकरथवर्त्मनाम् ॥ ५ ॥**

**सोऽहम्** । रघूणामन्वयं वक्ष्ये ( १ । ९ ) इत्युत्तरेण संबन्धः । किंविधानां रघूणा-

---

१ अत्र उडुपेन सागरतरणवन्मन्मत्या सूर्यवंशवर्णनमसंभावितमित्युपमायां पर्यवसानान्निदर्शनालंकारः । उद्धृतश्चायं श्लोकः काव्यप्रकाशकृता वाक्यार्थनिदर्शनोदाहरणत्वेन ।

२ यथा मन्दः शनैश्चरः कवेः शुक्रस्य यशःप्रार्थी उपहास्यतां याति । इति केचित् छायाथ प्रदर्शयन्ति । केचित् फले कार्यसिद्धौ उपहास्यतां गमिष्यामीति योजयन्ति । केचित् मन्दः काकः कस्य ब्रह्मणः वेः पक्षिणः हंसस्य इति व्याख्यान्ति । एतत्सर्वं च सहृदयानामहृदयंगमत्वादुपेक्ष्यम् ।

३ अत्र भिन्नलिङ्गत्वेन औपम्यं न दुष्टम् । तथा च वामनः " इष्टः ( लिङ्गभेदः ) पुंनपुंसकयोः प्रायेण " अ. सू० ४. २. १३. इह मणिशब्दोपादानेन वंशस्य अनर्घ्यत्वं निर्मलत्वं च दर्शितं इति केचित् । केचित्तु सूत्रोपमानेन आत्मनः सूक्ष्मबुद्धित्वं कविना सूचितमित्याहुः ।

४ एकान्वयी पञ्चान्यूनश्लोकसंघातः कुलकम् । तदुक्तं—द्वाभ्यां युग्ममिति प्रोक्तं त्रिभिः श्लोकैर्विशेषकम् । कलापकं चतुर्भिः स्यात्तदूर्ध्वं कुलकं स्मृतम् ॥

मित्यत्रोत्तराणि विशेषणानि योज्यानि । आ जन्मनः । जन्मारभ्येत्यर्थः । 'आङ्मर्यादाभिविध्योः' इत्यव्ययीभावः । शुद्धानाम् । **आजन्मशुद्धानाम्** । सुप्सुपेति समासः । एवमुत्तरत्रापि द्रष्टव्यम् । निषेकादिसर्वसंपन्नानामित्यर्थः । [ **आफलोदयकर्मणाम्** ] आफलोदयमाफलसिद्धेः कर्म येषां ते तथोक्तास्तेषाम् । प्रारब्धान्तगामिनामित्यर्थः । [ **आसमुद्रक्षितीशानाम्** ] आसमुद्रं क्षितेरीशानाम् । सार्वभौमाणामित्यर्थः । [ **आनाकरथवर्त्मनाम्** ] आनाकं रथवर्त्म येषां तेषाम् । इन्द्रसहचारिणामित्यर्थः । अत्र सर्वत्राङोऽभिविध्यर्थत्वं द्रष्टव्यम् । अन्यथा मर्यादार्थत्वे जन्मादिषु शुद्ध्यभावप्रसङ्गात् ॥

**यथाविधिहुताग्नीनां यथाकामार्चितार्थिनाम् ।**
**यथापराधदण्डानां यथाकालप्रबोधिनाम् ॥ ६ ॥**

विधिमनतिक्रम्य यथाविधि । ' यथासादृश्ये ' इत्यव्ययीभावः । तथा हुतशब्देन सुप्सुपेति समासः । एवं ' यथाकामार्चित–' इत्यादीनामपि द्रष्टव्यम् । यथाविधि हुताः अग्नयो यैस्तेषां [ **यथाविधिहुताग्नीनाम्** ] यथाकाममभिलाषमनतिक्रम्यार्चितार्थिनाम् [ **यथाकामार्चितार्थिनाम्** ] यथापराधमपराधमनतिक्रम्य दण्डो येषां तेषाम् [ **यथापराधदण्डानाम्** ] । यथाकालं कालमनतिक्रम्य प्रबोधिनां प्रबोधनशीलानाम् [ **यथाकालप्रबोधिनाम्** ] । चतुर्भिर्विशेषणैर्देवतायजनार्थिसत्कारदण्डधरत्वप्रजापालनमयजागरूकत्वादीनि विवक्षितानि ॥

**त्यागाय संभृतार्थानां सत्याय मितभाषिणाम् ।**
**यशसे विजिगीषूणां प्रजायै गृहमेधिनाम् ॥ ७ ॥**

**त्यागाय** सत्पात्रे विनियोगस्त्यागस्तस्मै । ' त्यागो विहापितं दानम् ' इत्यमरः । **संभृतार्थानां** संचितधनानाम् । न तु दुर्व्यापाराय । **सत्याय मितभाषिणां** मितभाषणशीलानाम् । न तु पराभवाय । **यशसे** कीर्तये । ' यशः कीर्तिः समज्ञा च ' इत्यमरः । **विजिगीषूणाम्** विजेतुमिच्छूनाम् । न त्वर्थसंग्रहाय । **प्रजायै** संतानाय **गृहमेधिनाम्** दारपरिग्रहाणाम् । न तु कामोपभोगाय । अत्र ' त्यागाय ' इत्यादिषु ' चतुर्थी तदर्थ—' इत्यादिना तादर्थ्ये चतुर्थीसमासविधानज्ञापकाच्चतुर्थी । गृहैर्दारैर्मेधन्ते संगच्छन्त इति गृहमेधिनः । ' दारेष्वपि गृहाः ' इत्यमरः । ' जाया च गृहिणी गृहम् ' इति हलायुधः । ' मेधृ संगमे ' इति धातोर्णिनिः । एभिर्विशेषणैः परोपकारित्वं सत्यवचनत्वं यशःपरत्वं पितॄणां शुद्धत्वं च विवक्षितानि ॥

---

१ एतेन तेषामग्निहोत्रत्वं सूचितम् । यथाह मनुः–" वैवाहिकेऽग्नौ कुर्वीत गृह्यं कर्म यथाविधि । पञ्चयज्ञविधानं च पक्तिं चान्वाहिकीं गृही ॥" इ०. २ " अपराधानुरूपं च दण्डं दण्ड्येषु दापयेत् " इति विष्णुस्मृतेः । अत्र कामन्दकः–" उद्वेजयति तीक्ष्णेन मृदुना परिभूयते । दण्डेन नृपतिस्तस्माद्युक्तदण्डः प्रशस्यते ॥ त्रिवर्गं वर्धयत्याशु राज्ञो दण्डो यथाविधि । प्रणीतो वाऽसमञ्जस्याद्वनस्थानपि कोपयेत् ॥" इ०. ३ यथाकालं शास्त्रोक्तकाले । ब्राह्मे मुहूर्ते इत्यर्थः । प्रबोधः शयनादुत्थानं येषामिति वा । तथा च मनुः– ' उत्थाय पश्चिमे यामे कृतशौचः समाहितः । हुताग्निर्ब्राह्मणांश्चार्च्य प्रविशेत्स शुभां सभाम् ॥ ' इ०. ४ बहुभाषणे असत्यमपि स्यादिति हेतोः इत्य० । उक्तं च मनुना–" सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम् । प्रियं च नानृतं ब्रूयादेष धर्मः सनातनः ॥" इ०. ५ "पुत्रार्थं क्रियते भार्या पुत्रः पिण्डप्रयोजनः ।" इति स्मरणात् । केचित् गृहमेधः विवाहः अस्त्येषामिति व्याचक्षते । गृहे गृहस्थधर्मे मेधा येषामिति वा ।

**शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणाम् ।**
**वार्द्धके मुनिवृत्तीनां योगेनान्ते तनुत्यजाम् ॥ ८ ॥**

[ **शैशवे** ] शिशोर्भावः शैशवं बाल्यम् । 'प्राणभृज्जातिवयोवचनोद्गात्र–' इत्यञ्प्रत्ययः । 'शिशुत्वं शैशवं बाल्यम्' इत्यमरः । तस्मिन्वयसि **अभ्यस्तविद्यानाम्** । एतेन ब्रह्मचर्याश्रमो विवक्षितः । [ **यौवने** ] यूनो भावो यौवनं तारुण्यम् । युवादित्वादण्प्रत्ययः । 'तारुण्यं यौवनं समम्' इत्यमरः । तस्मिन्वयसि **विषयैषिणां** भोगाभिलाषिणाम् । एतेन गृहस्थाश्रमो विवक्षितः । वृद्धस्य भावो वार्द्धकं वृद्धत्वम् । 'द्वन्द्वमनोज्ञादिभ्यश्च' इति वुञ्प्रत्ययः । 'वार्द्धकं वृद्धसंघाते वृद्धत्वे वृद्धकर्मणि' इति विश्वः । संघातार्थेऽत्र 'वृद्धाच्च' इति वक्तव्यात्सामूहिको वुञ् । तस्मिन् **वार्द्धके** वयसि मुनीनां वृत्तिरिव वृत्तिर्येषां तेषाम् [ **मुनिवृत्तीनाम्** ] । एतेन वानप्रस्थाश्रमो विवक्षितः । **अन्ते** शरीरत्यागकाले **योगेन** परमात्मध्यानेन । 'योगः संनहनोपायध्यानसंगतियुक्तिषु ।' इत्यमरः । तनुं देहं त्यजन्तीति 'कायो देहः क्लीबपुंसोः स्त्रियां मूर्तिस्तनुस्तनूः ।' इत्यमरः । 'अन्येभ्योऽपि दृश्यते' इति क्विप् । तेषां [ **तनुत्यजां** ] देहत्यागिनाम् । एतेन भिक्ष्वाश्रमो विवक्षितः ॥

**रघूणामन्वयं वक्ष्ये तनुवाग्विभवोऽपि सन् ।**
**तद्गुणैः कर्णमागत्य चापलाय प्रचोदितः ॥ ९ ॥**

सोऽहं लब्धप्रवेशः **तनुवाग्विभवोऽपि** स्वल्पवाणीप्रसारोऽपि **सन्** । तेषां रघूणां गुणैः **तद्गुणैः** आजन्मशुद्ध्यादिभिः । कर्तृभिः **कर्णं** मम श्रोत्रं **आगत्य चापलाय** चापलं चपलकर्माविमृश्यकरणरूपं कर्तुम् । युवादित्वात्कर्मण्यण् । 'क्रियार्थोपपदस्य–' इत्यादिना चतुर्थी । **प्रचोदितः** प्रेरितः सन् । **रघूणामन्वयं** तद्विषयप्रबन्धं **वक्ष्ये** ॥ कुलकम् ॥

संप्रति स्वप्रबन्धपरीक्षार्थं सतः प्रार्थयते–

**तं सन्तः श्रोतुमर्हन्ति सदसद्व्यक्तिहेतवः ।**
**हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकापि वा ॥ १० ॥**

**तं** रघुवंशाख्यं प्रबन्धं सदसतोर्गुणदोषयोर्व्यक्तेर्हेतवः [ **सदसद्व्यक्तिहेतवः** ] कर्तारः **सन्तः श्रोतुमर्हन्ति** । तथा हि । **हेम्नः विशुद्धिः** निर्दोषस्वरूपं **श्यामिकापि**

---

१ यथाह मनुः–गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः । अपत्यस्यैव चापत्यं तदारण्यं समाश्रयेत् ॥ संत्यज्य ग्राम्यमाहारं सर्वं चैव परिच्छदम् । पुत्रेषु भार्यां निक्षिप्य वनं गच्छेत्सहैव वा ॥ २ अत्र मनुः–इन्द्रियाणां निरोधेन रागद्वेषक्षयेण च । अहिंसया च भूतानाममृतत्वाय कल्पते ॥...प्रियेषु स्वेषु सुकृतमप्रियेषु च दुष्कृतम् । विसृज्य ध्यानयोगेन ब्रह्माप्येति सनातनम् ॥ इ०. रघूणां आजन्मशुद्ध्यादयो गुणाः अस्मिन्नेव ग्रन्थे कविना वर्णिताः तेषां क्रमेण दिग्दर्शनम्— ( १ ) आजन्म०–तृ० स० १०, १८ श्लो० (२) आफलोदय०–अ० स० २२ श्लो०(३)आसमुद्र०–प्र० स० ३० श्लो० ( ४ ) आनाक०–पं० स० २७ श्लो० ( ५ ) यथाविधि०–पं० स० १५, अ० स० २५, पं० स० ८९ श्लो० (६)यथाकामा०–पं०सर्गे कौत्सोपाख्यानं, ए०स० २ श्लो०(७)यथापराध०–च० स० ८ श्लो० (८) यथाकाल०–प्र० स० ९५ श्लो० (९) त्यागाय–च० स० ८६ श्लो० ( १० ) सत्याय–प्र० स० २९ श्लो० द्वा० सर्गे दशरथस्य प्रतिज्ञापालनवर्णनं च । ( ११ ) यशसे–च० स० ४३ श्लो०. ( १२ ) प्रजायै०–प्र० स० २५ श्लो० ( १३ ) शैशवे० तृ० स० २८, २९ श्लो० ( १४ ) यौवने–प्र० स० २१ श्लो० अ० स० अजविलासवर्णनं च ( १५ ) वार्द्धके–तृ० स० ७० श्लो० अ० स० ११ श्लो० ( १६ ) योगेन–अ० स० १० श्लो०

लोहान्तरसंसर्गात्मको दोषोऽपि **वा अग्नौ संलक्ष्यते**। नान्यत्र। तद्वदत्रापि सन्त एव गुणदोषविवेकाधिकारिणः। नान्य इति भावः॥

वर्ण्यं वस्तूपक्षिपति—

**वैवस्वतो मनुर्नाम माननीयो मनीषिणाम्।**
**आसीन्महीक्षितामाद्यः प्रणवश्छन्दसामिव॥ ११॥**

मनस ईषिणो मनीषिणो धीराः। विद्वांस इति यावत्। पृषोदरादित्वात्साधुः। तेषां [ **मनीषिणां** ] **माननीयः** पूज्यः। **छन्दसां** वेदानाम्। 'छन्दः पद्ये च वेदे च' इति विश्वः। **प्रणवं** ओंकार **इव**। महीं क्षियन्तीशत इति महीक्षितः क्षितीश्वराः। क्षिधातेरैश्वर्यार्थात्क्विप् तुगागमश्च। तेषां [ **महीक्षिताम्** । ] **आद्यः** आदिभूतः। विवस्वतः सूर्यस्यापत्यं पुमान्**वैवस्वतो नाम** वैवस्वत इति प्रसिद्धो **मनुरासीत्**॥

**तदन्वये शुद्धिमति प्रसूतः शुद्धिमत्तरः।**
**दिलीप इति राजेन्दुरिन्दुः क्षीरनिधाविव॥ १२॥**

शुद्धिरस्यास्तीति शुद्धिमान्। तस्मिन् **शुद्धिमति तदन्वये** तस्य मनोरन्वये वंशे। 'अन्ववायोऽन्वयो वंशो गोत्रं चाभिजनं कुलम्' इति हलायुधः। अतिशयेन शुद्धिमान् **शुद्धिमत्तरः**। 'द्विवचनविभज्योप–' इत्यादिना तरप्। **दिलीप इति** प्रसिद्धो राजा इन्दुरिव **राजेन्दुः** राजश्रेष्ठः। उपमितं व्याघ्रादिना समासः। **क्षीरनिधौ इन्दुः इव प्रसूतः** जातः॥

'व्यूढ–' इत्यादित्रिभिः श्लोकैर्दिलीपं विशिनष्टि–

**व्यूढोरस्को वृषस्कन्धः शालप्रांशुर्महाभुजः।**
**आत्मकर्मक्षमं देहं क्षात्रो धर्म इवाश्रितः॥ १३॥**

व्यूढं विपुलमुरो यस्य स **व्यूढोरस्कः**। 'उरःप्रभृतिभ्यः कप्'। 'व्यूढं विपुलं भद्रं स्फारं समं वरिष्ठं च।' इति यादवः। वृषस्य स्कन्ध इव स्कन्धो यस्य स [ **वृषस्कन्धः** ]। 'सप्तम्युपमान–' इत्यादिनोत्तरपदलोपी बहुव्रीहिः। शालो वृक्ष इव प्रांशुरुन्नतः **शालप्रांशुः**। 'प्राकारवृक्षयोः शालः शालः सर्जतरुः स्मृतः।' इति यादवः। 'उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुङ्गे' इत्यमरः। **महाभुजो** महाबाहुः **आत्मकर्मक्षमं** स्वव्याप-

१ उपदेशं विदुः शुद्धं सन्तस्तमुपदेशिनः। श्यामायते न युष्मासु यः काञ्चनमिवाग्निषु॥ इति मालविकाग्निमित्रे द्वि० अं० समानार्थः श्लोकांशः। २ दीक्षितादीनां मते 'शकन्ध्वादिषु पररूपं वाच्यं' इति वार्तिकेन साधुः। ३ प्रकृष्टं यथा तथा स्तूयते अनेन इति प्रणवः। अत्र मनुः–ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा। स्रवत्यनोंकृतं पूर्वं परस्ताच्च विशीर्यते॥ इ० प्रणवः सर्ववेदेषु...इ० भगवद्गीता। ४ ( १ ) स्वायंभुवः ( २ ) स्वारोचिषः ( ३ ) उत्तमः ( ४ ) तामसः ( ५ ) रैवतः ( ६ ) चाक्षुषः ( ७ ) वैवस्वतः ( ८ ) सावर्णिः ( ९ ) दक्षसावर्णिः ( १० ) ब्रह्मसावर्णिः ( ११ ) धर्मसावर्णिः ( १२ ) रुद्रसावर्णिः ( १३ ) देव ( रौच्य ) सावर्णिः ( १४ ) इन्द्रसावर्णिः इत्येते चतुर्दश मनवः। तेषां वैवस्वतः सप्तमः। ५ ततः शतसहस्रांशुर्मथ्यमानात्तु सागरात्। प्रसन्नात्मा समुत्पन्नः सोमः शीतांशुरुज्ज्वलः॥ इति महाभारतम्। ६ यद्वा—" यः पद्मलोचनश्छत्रध्वजवज्राङ्किताङ्घ्रिकः। चतुर्हस्तः स्वहस्तेन शालप्रांशुः स उच्यते॥" इत्युक्तलक्षणोपेतः।

रानुरूपं **देहमाश्रितः** प्राप्तः **क्षात्रः** क्षत्रसंबन्धी **धर्म इव** स्थितः । मूर्तिमान्पराक्रम इव स्थित इत्युत्प्रेक्षा ॥

**सर्वातिरिक्तसारेण सर्वतेजोभिभाविना ।**
**स्थितः सर्वोन्नतेनोर्वीं क्रान्त्वा मेरुरिवात्मना ॥ १४ ॥**

**सर्वातिरिक्तसारेण** सर्वेभ्यो भूतेभ्योऽधिकबलेन । 'सारो बले स्थिरांशे च' इत्यमरः । सर्वाणि भूतानि तेजसाभिभवतीति सर्वतेजोभिभावी तेन [ **सर्वतेजोभिभाविना** ]। सर्वेभ्यः उन्नतेन **सर्वोन्नतेन आत्मना** शरीरेण । 'आत्मा देहे धृतौ जीवे स्वभावे परमात्मनि ' इति विश्वः । **मेरुरिव उर्वीं क्रान्त्वा** आक्रम्य **स्थितः** । मेरावपि विशेषणानि तुल्यानि । 'अष्टाभिश्च सुरेन्द्राणां मात्राभिर्निर्मितो नृपः । तस्मादभिभवत्येष सर्वभूतानि तेजसा ॥' इति मनुवचनाद्राज्ञः सर्वतेजोभिभावित्वं ज्ञेयम् ।

**आकारसदृशप्रज्ञः प्रज्ञया सदृशागमः ।**
**आगमैः सदृशारम्भ आरम्भसदृशोदयः ॥ १५ ॥**

आकारेण मूर्त्या सदृशी प्रज्ञा यस्य सः [**आकारसदृशप्रज्ञः**]। **प्रज्ञयासदृशागमः** प्रज्ञानुरूपशास्त्रपरिश्रमः। **आगमैः** सदृश आरम्भः कर्म यस्य स [**सदृशारम्भः** ] तथोक्तः । आरभ्यत इत्यारम्भः कर्म । तत्सदृश उदयः फलसिद्धिर्यस्य स[**आरम्भसदृशोदयः**]तथोक्तः॥

**भीमकान्तैर्नृपगुणैः स बभूवोपजीविनाम् ।**
**अधृष्यश्चाभिगम्यश्च यादोरत्नैरिवार्णवः ॥ १६ ॥**

भीमैश्च कान्तैश्च [ **भीमकान्तैः** ] **नृपगुणैः** राजगुणैस्तेजःप्रतापादिभिः कुलशीलदाक्षिण्यादिभिश्च **स** दिलीपः **उपजीविनाम्** आश्रितानाम् । यादोभिर्जलजीवैः । 'यादांसि जलजन्तवः' इत्यमरः । रत्नैश्च [ **यादोरत्नैः** ] **अर्णवं इव अधृष्यः** अनभिभवनीयः **च अभिगम्यः** आश्रयणीयः **च बभूव** ॥

**रेखामात्रमपि क्षुण्णादामनोर्वर्त्मनः परम् ।**
**न व्यतीयुः प्रजास्तस्य नियन्तुर्नेमिवृत्तयः ॥ १७ ॥**

**नियन्तुः** शिक्षकस्य सारथेश्च **तस्य** दिलीपस्य संबन्धिन्यो नेमीनां चक्रधाराणां

---

१ अत्र उपमेयस्य दिलीपस्य उपमानेन क्षात्रधर्मेण सह एकरूपतया संभावनात् उत्प्रेक्षालंकारः । इयं च इवशब्दप्रयोगात् वाच्या । तदुक्तं साहित्यदर्पणे—भवेत्संभावनोत्प्रेक्षा प्रकृतस्य परात्मना । वाच्या प्रतीयमाना सा प्रथमा द्विविधा मता । वाच्येवादिप्रयोगे स्यादप्रयोगे परा पुनः। इ० २ मेरोरपि सौवर्णत्वात्सर्वतेजोभिभावित्वम् । मिनोति क्षिपति उच्चत्वाज्ज्योतींषि इति मेरुः ३ आगमलक्षणं यथा—सर्ववेदः क्रियामूलमृषिभिर्बहुधोदितः । कालो देशः क्रिया कर्ता कारणं कार्यमागमः ॥ सिद्धं सिद्धैः प्रमाणैस्तु हितं वात्र परत्र वा । आगमः शास्त्रमाप्तानामाप्तास्तत्त्वार्थवेदिनः ॥ शृण्वतां जायते भक्तिस्ततो गुरुमुपासते । स च वियागमान्वक्ति वियायुक्त्वाश्रितो नृपः । इ० ४ अर्णांसि अत्र सन्ति इति अर्णवः । अर्णसो लोपश्च । पा. ५. २. १०९(वा) इति वः सलोपश्च । ५ तेजोबलं सत्ववत्ता प्रभावः प्राप्तकालता । अधृष्यस्य गुणानेतान्नृपस्य मुनयो विदुः ॥ इति बृहस्पतिः । कुलं सत्त्वं वयः शीलं दाक्षिण्यं क्षिप्रकारिता । असंविवादिता सत्य वृद्धसेवा कृतज्ञता ॥ दैवसंपन्नता बुद्धिरक्षुद्रपरिचारिता । शक्यसामन्तता चैव तथा च दृढभक्तिता ॥ दीर्घदर्शित्वमुत्साहः शुचिता स्थूललक्ष्यता । विनीतता धार्मिकता गुणाः साध्याभिगामिकाः ॥ इति कामन्दकः.

वृत्तिरिव वृत्तिर्व्यापारो यासां ताः [ **नेमिवृत्तयः** ]। ' चक्रधारा प्रधिर्नेमिः ' इति यादवः । 'चक्रं रथाङ्गं तस्यान्ते नेमिः स्त्री स्यात्प्रधिः पुमान्। ' इत्यमरः । **प्रजाः** । **आ मनोः** मनुमारभ्येत्यभिविधिः । पदद्वयं चैतत् । समासस्य विभाषितत्वात् **क्षुण्णाद्** अभ्यस्तात्प्रहताच्च **वर्त्मनः** आचारपद्धतेरध्वनश्च **परं** अधिकम् । इतस्ततः इत्यर्थः । रेखा प्रमाणमस्येति **रेखामात्रं** रेखाप्रमाणम्। ईषदपीत्यर्थः। 'प्रमाणे द्वयसज्–' इत्यादिना मात्रच्प्रत्ययः। परशब्दविशेषणं चैतत् । [ **अपि** ] **न व्यतीयुः** नातिक्रान्तवत्यः । कुशलसारथिप्रेरिता रथनेमय इव तस्य प्रजाः पूर्वक्षुण्णमार्गं न जहुरिति भावः ॥

**प्रजानामेव भूत्यर्थं स ताभ्यो बलिमग्रहीत् ।**
**सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रविः ॥ १८ ॥**

**स** राजा **प्रजानां** भूत्या अर्थाय **भूत्यर्थं** वृद्ध्यर्थं **एव** । अर्थेन सह नित्यसमासः सर्वलिङ्गता च वक्तव्या । ग्रहणक्रियाविशेषणं चैतत् । **ताभ्यः** प्रजाभ्यो **बलिं** षष्ठांशरूपं करं **अग्रहीत्** । 'भागधेयः करो बलिः' इत्यमरः । तथा **हि रविः** सहस्रं गुणा यस्मिन्कर्मणि तद्यथा तथा **सहस्रगुणं** सहस्रधा **उत्स्रष्टुं** दातुम् । उत्सर्जनक्रियाविशेषणं चैतत् । **रसं** अम्बु **आदत्ते** गृह्णाति[३] । ' रसो गन्धे रसे स्वादे तिक्तादौ विषरागयोः । शृङ्गारादौ द्रवे वीर्ये देहधात्वम्बुपारदे ॥ ' इति विश्वः ॥

संप्रति बुद्धिशौर्यसंपन्नस्य तस्यार्थसाधनेषु परानपेक्षत्वमाह—

**सेना परिच्छदस्तस्य द्वयमेवार्थसाधनम् ।**
**शास्त्रेष्वकुण्ठिता बुद्धिर्मौर्वी धनुषि चातता ॥ १९ ॥**

**तस्य** राज्ञः **सेना** चतुरङ्गबलम् । परिच्छाद्यतेऽनेनेति **परिच्छदः** उपकरणं बभूव । छत्रचामरादितुल्यमभूदित्यर्थः । ' पुंसि संज्ञायां घः प्रायेण । ' इति घप्रत्ययः । ' छादेर्घेऽद्व्युपसर्गस्य ' इत्युपधाह्रस्वः। अर्थस्य प्रयोजनस्य तु साधनं [**अर्थसाधनं**] **द्वयमेव**। **शास्त्रेष्वकुण्ठिता** अव्याहता **बुद्धिः**।'व्यापृता' इत्यपि पाठः। **धनुष्यातता** आरोपिता **मौर्वी** ज्या **च** । ' मौर्वी ज्या शिञ्जिनी गुणः ' इत्यमरः । नीतिपुरःसरमेव तस्य शौर्यमभूदित्यर्थः ॥

राज्यमूलं मन्त्रसंरक्षणं तस्यासीदित्याह—

**तस्य संवृतमन्त्रस्य गूढाकारेङ्गितस्य च ।**
**फलानुमेयाः प्रारम्भाः संस्काराः प्राक्तना इव ॥ २० ॥**

**संवृतमन्त्रस्य** गुप्तविचारस्य । ' वेदभेदे गुप्तवादे मन्त्रः ' इत्यमरः । शोकहर्षादिसूचको भ्रुकुटीमुखरागादिराकारः । [ **गूढाकारेङ्गितस्य** ] इङ्गितं चेष्टितं हृदयगतविकारो वा । ' इङ्गितं हृद्गतो भावो बहिराकार आकृतिः । ' इति सज्जनः । गूढे

---

१. राज्ञः विपथगामिनां नियन्तृत्वे याज्ञवल्क्यः–कुलानि जातीः श्रेणीश्च गणाञ्जनपदानपि । स्वधर्माच्चलितान् राजा विनीय स्थापयेत्पथि ॥ इति । २ म. स्मृ. स. अ. १२८–१३२. ३ दशमसर्गे ५८ श्लो० द्रष्टव्यः । स राजा प्रजाभ्यः गृहीतेन करेण यज्ञादिकं ततान । तेन तुष्टैर्देवैर्वृष्टिरतयान्नं तेन प्रजापुष्टिरिति परंपरया बलेर्भूत्यर्थता । इति चारित्रवर्धनः । ४ सेनापरिच्छदः इति एकं वा समस्तं षष्ठ्यन्तं पदम् । सेना परिच्छद उपकरणं यस्य तस्य । ५ शास्त्रेषु–दण्डनीत्यादिषु । ६ यतः–आकारैरिङ्गितैर्गत्या चेष्टया भाषितेन च । नेत्रवक्त्रविकारैश्च लक्ष्यतेऽन्तर्गतं मनः ॥ म. स्मृ. ७. २६; एतेन तस्य गाम्भीर्यं सूचितम् ।

आकारेङ्गिते यस्य । स्वभावचापलाद् भ्रमपरंपरया मुखरागादिर्लिङ्गैर्वाऽतृतीयगामिमन्त्रस्य च तस्य । प्रारभ्यन्त इति **प्रारम्भाः** सामाद्युपायप्रयोगाः । प्रागित्यव्ययेन पूर्वजन्मोच्यते । तत्र भवाः **प्राक्तनाः** । 'सायंचिर–' इत्यादिना ट्युल्प्रत्ययः * ॥ **संस्काराः** पूर्वकर्मवासना **इव** । फलेन कार्येणानुमेया अनुमातुं योग्या [ **फलानुमेयाः** ] आसन् । अत्र याज्ञवल्क्यः–'मन्त्रमूलं यतो राज्यमतो मन्त्रं सुरक्षितम् । कुर्याद्यथा तन्न विदुः कर्मणामाफलोदयात् ॥ ' इति ॥

संप्रति सामाद्युपायान्विनैवात्मरक्षादिकं कृतवानित्याह–

**जुगोपात्मानमत्रस्तो भेजे धर्ममनातुरः ।**
**अगृध्नुराददे सोऽर्थमसक्तः सुखमन्वभूत् ॥ २१ ॥**

[ **सः** ] **अत्रस्तः** अभीतः सन् । 'त्रस्तो भीरुभीरुकभीलुकाः ' इत्यमरः । त्रासोपाधिमन्तरेणैव त्रिवर्गसिद्धेः प्रथमसाधनत्वादेव **आत्मानं** शरीरं **जुगोप** रक्षितवान् । **अनातुरः** अरुग्ण एव **धर्मं** सुकृतं **भेजे** । अर्जितवानित्यर्थः । **अगृध्नुः** अगर्धनशील एव **अर्थमाददे** स्वीकृतवान् । ' गृध्नुस्तु गर्धनः । लुब्धोऽभिलाषुकस्तृष्णक्समौ लोलुपलोलुभौ । ' इत्यमरः । ' त्रसिगृधिधृषिक्षिपेः क्नुः ' इति क्नुप्रत्ययः । **असक्तः** आसक्तिरहित एव **सुखमन्वभूत्** ॥

परपस्परविरुद्धानामपि गुणानां तत्र साहचर्यमासीदित्याह—

**ज्ञाने मौनं क्षमा शक्तौ त्यागे श्लाघाविपर्ययः ।**
**गुणा गुणानुबन्धित्वात्तस्य सप्रसवा इव ॥ २२ ॥**

**ज्ञाने** परवृत्तान्तज्ञाने सत्यपि **मौनं** वाङ्नियमनम् । यथाह कामन्दकः–' नान्योपतापि वचनं मौनं व्रतचरिष्णुता ' इति । **शक्तौ** प्रतीकारसामर्थ्येऽपि **क्षमा** अपकारसहनम् । अत्र चाणक्यः–' शक्तानां भूषणं क्षमा ' इति । **त्यागे** वितरणे सत्यपि [ **श्लाघाविपर्ययः** ] श्लाघाया विकत्थनस्य विपर्ययोऽभावः । अत्राह मनुः–' न दत्त्वा परिकीर्तयेत् ' इति । इत्थं **तस्य गुणा** ज्ञानादयो [ **गुणानुबन्धित्वात्** ] गुणैर्विरुद्धैर्मौनादिभिरनुबन्धित्वात्सहचारित्वात् । सह प्रसवो जन्म येषां ते **सप्रसवाः** सोदराः **इव** अभूवन् । विरुद्धा अपि गुणास्तस्मिन्नविरोधेनैव स्थिता इत्यर्थः ॥

द्विविधं वृद्धत्वम्, ज्ञानेन वयसा च । तत्र तस्य ज्ञानेन वृद्धत्वमाह—

**अनाकृष्टस्य विषयैर्विद्यानां पारदृश्वनः ।**
**तस्य धर्मरतेरासीद् वृद्धत्वं जरसा विना ॥ २३ ॥**

**विषयैः** शब्दादिभिः । ' रूपं शब्दो गन्धरसस्पर्शाश्च विषया अमी ' इत्यमरः । **अनाकृष्टस्य** अवशीकृतस्य । **विद्यानां** वेदवेदाङ्गादीनां **पारदृश्वनः** पारमन्तं दृष्टवतः ।

---

* तुडागमश्च । १ म. स्मृ. ७. १४७–१४८ श्लो. द्रष्टव्यौ । २ 'सततं आत्मानं गोपायीत ' इति श्रुतेः 'आत्मानं सततं रक्षेद्दारैरपि धनैरपि' इति मनुस्मरणाच्च । ३उक्तं च-'न्यायेनार्जनमर्थस्य रक्षणं वर्धनं तथा । सत्पात्रे प्रतिपत्तिश्च राजवृत्तं चतुर्विधम् ॥' इति । अनुरूपभावः किरातार्जुनीये–'वसूनि वाञ्छन्न वशी ' इत्यादौ । अनासक्तया विषयोपभोगे कामन्दकः–'सेवेत विषयान्काले त्यक्त्वा तत्परतां वशी । सुखं हि फलमर्थस्य तन्निरोधे वृथा श्रियः ॥ ' इति ४ आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्च शाश्वती । विद्याश्चतस्र एवैता लोकसंस्थितिहेतवः ॥ इति कामन्दकोक्ताश्चतस्रो विद्या वा । यदुक्तं कविनैव तृतीयसर्गे–श्रियः समग्रैः इत्यादि ( ३० ) श्लोके.

दृशेः क्वनिप् [ **धर्मरतेः** ] धर्मे रतिर्यस्य **तस्य** राज्ञो **जरसा** जरया **विना** । 'विस्रसा जरा' इत्यमरः । 'षिद्भिदादिभ्योऽङ्' इत्यङ्प्रत्ययः । 'जराया जरसन्यतरस्याम्' इति जरसादेशः । **वृद्धत्वं** वार्द्धकं **आसीत्** । तस्य यूनोऽपि विषयवैराग्यादिज्ञानगुणसंपत्त्या ज्ञानतो वृद्धत्वमासीदित्यर्थः । नाथस्तु चतुर्विधं वृद्धत्वमिति ज्ञात्वा 'अनाकृष्टस्य' इत्यादिना विशेषणत्रयेण वैराग्यज्ञानशीलवृद्धत्वान्युक्तानीत्यवोचत् ॥

**प्रजानां विनयाधानाद्रक्षणाद्भरणादपि ।**
**स पिता पितरस्तासां केवलं जन्महेतवः ॥ २४ ॥**

[ **प्रजानां** ] प्रजायन्त इति प्रजा जनाः । 'उपसर्गे च संज्ञायाम्' इति डप्रत्ययः । 'प्रजा स्यात्संततौ जने' इत्यमरः । तासां [ **विनयाधानात्** ] विनयस्य शिक्षाया आधानात् करणात् । सन्मार्गप्रवर्तनादिति यावत् । **रक्षणाद्** भयहेतुभ्यस्त्राणात् । आपन्निवारणादिति यावत् । **भरणाद्** अन्नपानादिभिः पोषणाद् **अपि** । अपिः समुच्चये । **स** राजा **पिता** अभूत् । **तासां पितरः** तु **जन्महेतवः** जन्ममात्रकर्तारः **केवलं** उत्पादका एवाभूवन् । जननमात्र एव पितॄणां व्यापारः । सदा शिक्षारक्षणादिकं तु स एव करोतीति तस्मिन्पितृत्वव्यपदेशः । आहुश्च–' स पिता यस्तु पोषकः ' इति ॥

**स्थित्यै दण्डयतो दण्ड्यान्परिणेतुः प्रसूतये ।**
**अप्यर्थकामौ तस्यास्तां धर्म एव मनीषिणः ॥ २५ ॥**

दण्डमर्हन्तीति दण्ड्याः । 'दण्डादिभ्यो यः' इति यप्रत्ययः । 'अदण्ड्यान्दण्डयन्राजा दण्ड्यांश्चैवाप्यदण्डयन् । अयशो महदाप्नोति नरकं चैव गच्छति ॥' इति शास्त्रवचनात् । तान् **दण्ड्यान्** एव **स्थित्यै** लोकप्रतिष्ठायै **दण्डयतः** शिक्षयतः । **प्रसूतये** संतानायैव **परिणेतुः** दारान्परिगृह्णतः । **मनीषिणः** विदुषः । दोषज्ञस्येति यावत् । 'विद्वान्विपश्चिद्दोषज्ञः सन्सुधीः कोविदो बुधः । धीरो मनीषी' इत्यमरः । **तस्य** दिलीपस्य **अर्थकामावपि धर्म एवास्तां** जातौ । अस्तेर्लङ् । अर्थकामसाधनयोर्दण्डविवाहयोर्लोकस्थापनप्रजोत्पादनरूपधर्मार्थत्वेनानुष्ठानादर्थकामावपि धर्मशेषतामापादयन्स राजा धर्मोत्तरोऽभूदित्यर्थः । आह च गौतमः–' न पूर्वाह्णमध्यंदिनापराह्णानफलान्कुर्यात् । यथाशक्ति धर्मार्थकामेभ्यस्तेषु धर्मोत्तरः स्यात् । ' इति ॥

**दुदोह गां स यज्ञाय सस्याय मघवा दिवम् ।**
**संपद्विनिमयेनोभौ दधतुर्भुवनद्वयम् ॥ २६ ॥**

**स** राजा **यज्ञाय** यज्ञं कर्तुं **गां** भुवं **दुदोह** । करग्रहणेन रिक्तां चकारेत्यर्थः । **मघवा**

---

१ यदाह मनुः–'न तेन वृद्धो भवति येनास्य पलितं शिरः । यो वा युवाप्यधीयानस्तं देवाः स्थविरं विदुः ॥' इति । २ अत्र मनुः–स्यांचाम्नायपरो लोके वर्तेत पितृवन्नृषु । (अ० ७, ८०) "शरीरकृत्प्राणदाता यस्य चान्नानि भुञ्जते । क्रमेणैते त्रयोऽप्युक्ताः पितरो धर्मशासने ॥ इति भारते । कन्यादाताऽन्नदाता च ज्ञानदाताऽभयप्रदः । जन्मदो मन्त्रदो ज्येष्ठभ्राता च पितरः स्मृताः ॥ इत्यन्यत्रापि. ३ " पुत्रार्थं क्रियते भार्या पुत्रः पिण्डप्रयोजनः । " इति स्मरणात् । पुत्रप्रयोजना दाराः पुत्रः पिण्डप्रयोजनः । हितप्रयोजनं मित्रं धनं सर्वप्रयोजनम् । इति चाणक्यनीतौ । ४ यतः त्रिवर्गो धर्ममूलः । " त्रिवर्गोऽयं धर्ममूलो नरेन्द्र राज्यं चेदं धर्ममूलं वदन्ति । धर्मे राजन् वर्तमानः स्वशक्त्या पुत्रान् सर्वान् पाहि पाण्डोः सुतांश्च ॥ " इति महाभारते धृतराष्ट्रं प्रति विदुरोक्तिरेतदेव दर्शयति । ५ गौः स्वर्गे च बलीवर्दे रश्मौ च कुलिशे पुमान् । स्त्री सौरभेयीदृग्बाणादिग्वाग्भूष्वप्सु भूम्नि च ॥ इ० मेदिनी ।

देवेन्द्रः **सस्याय** सस्यं वर्धयितुं **दिवं** स्वर्गं दुदोह । द्युलोकान्महीलोके वृष्टिमुत्पादयामासेत्यर्थः । 'क्रियार्थोपपदस्य–' इत्यादिना यज्ञसस्याभ्यां चतुर्थी । एवं **उभौ** [ **संपद्विनिमयेन** ] संपदो विनिमयेन परस्परमादानप्रतिदानाभ्यां **भुवनद्वयं दधतुः** पुपुषतुः । राजा यज्ञैरिन्द्रलोकमिन्द्रश्चोदकेन भूलोकं पुपोषेत्यर्थः । उक्तं च दण्डनीतौ–' राजा त्वर्थान्समाहृत्य कुर्यादिन्द्रमहोत्सवम् । प्रीणितो मेघवाहस्तु महतीं वृष्टिमावहेत् ॥ ' इति ॥

**न किलानुययुस्तस्य राजानो रक्षितुर्यशः ।**
**व्यावृत्ता यत्परस्वेभ्यः श्रुतौ तस्करता स्थिता ॥ २७ ॥**

**राजानः** अन्ये नृपा **रक्षितुः** भयेभ्यस्त्रातुः **तस्य** राज्ञः **यशः नानुययुः किल** नानुचक्रुः खलु । कुतः । **यद्** यस्मात्कारणात् **तस्करता** चौर्यं **परस्वेभ्यः** परधनेभ्यः स्वविषयभूतेभ्यो **व्यावृत्ता** सती **श्रुतौ** वाचकशब्दे **स्थिता** प्रवृत्ता । अपहार्यान्तराभावात्तस्करशब्द एवापहृत इत्यर्थः । अथ वा । ' अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि ' इति न्यायेन शब्दे स्थिता स्फुरिता न तु स्वरूपतोऽस्तीत्यर्थः ॥

**द्वेष्योऽपि संमतः शिष्टस्तस्यार्तस्य यथौषधम् ।**
**त्याज्यो दुष्टः प्रियोऽप्यासीदङ्गुलीवोरगक्षता ॥ २८ ॥**

**शिष्टः** जनो **द्वेष्यः** शत्रुः **अपि** । **आर्तस्य** रोगिणः **औषधं यथा** औषधमिव **तस्य संमतः** अनुमत आसीत् । **दुष्टः** जनः **प्रियोऽपि** प्रेमास्पदीभूतोऽपि **उरगक्षता** सर्पदष्टा **अङ्गुलीव** । ' छिन्द्याद्बाहुमपि दुष्टमात्मनः ' इति न्यायात् । **त्याज्यः आसीत्** । तस्य शिष्ट एव बन्धुर्दुष्ट एव शत्रुरित्यर्थः ॥

तस्य परोपकारित्वमाह–

**तं वेधा विदधे नूनं महाभूतसमाधिना ।**
**तथा हि सर्वे तस्यासन्परार्थैकफला गुणाः ॥ २९ ॥**

**वेधाः** स्रष्टा । ' स्रष्टा प्रजापतिर्वेधाः ' इत्यमरः । **तं** दिलीपम् । समाधीयतेऽनेनेति समाधिः कारणसामग्री । महाभूतानां यः समाधिस्तेन **महाभूतसमाधिना विदधे** ससर्ज । **नूनं** ध्रुवम् । इत्युत्प्रेक्षा । **तथा हि** । **तस्य** राज्ञः **सर्वे गुणाः** रूपरसादिमहाभूतगुणवदेव परार्थः परप्रयोजनमेवैकं मुख्यं फलं येषां ते तथोक्ताः [ **परार्थैकफलाः** ] **आसन्** । महाभूतगुणोपमानेन कारणगुणाः कार्यं संक्रामन्तीति न्यायः सूचितः ॥

---

१ अत्र भगवद्गीता–सहयज्ञाः... ॥ देवान् भावयतानेन ते देवा भावयन्तु वः । परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥ इष्टान् भोगान्हि वो देवा दास्यन्ते यज्ञभाविताः ॥ अ० ३ श्लो० १०–१२. अस्य तुल्यार्थः श्लोकः शाकुन्तले–तव भवतु बिडौजाः प्राज्यवृष्टिः प्रजासु त्वमपि विततयज्ञः स्वर्गिणः प्रीणयस्व । युगशतपरिवर्तानेवमन्योन्यकृत्यैः नयतमुभयलोकानुग्रहश्लाघनीयैः ॥ २ श्रूयते इति श्रुतिः ध्वनिः तस्मिन् रवमात्रे स्थिता ॥ इति नाथः. ३ धर्मेणाधिगतो यस्तु वेदः सपरिबृंहणः । ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतवः ॥ इति मनुः ( अ० १२ श्लोक १०९ ) ४ अत्रोपमानोपमेययोः भिन्नलिङ्गत्वं न दोषः सहृदयानामनुद्वेगकरत्वात् । तदुक्तं दण्डिना–'न लिङ्गवचने भिन्ने न हीनाधिकतापि वा । उपमादूषणायालं यत्रोद्वेगो न धीमताम् ॥' का० द० २. ५१. ५ मन्ये शंके ध्रुवं प्रायो नूनमित्येवमादिभिः । उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः ॥ का० द० २. २३४.

**स वेलावप्रवलयां परिखीकृतसागराम् ।**
**अनन्यशासनामुर्वीं शशासैकपुरीमिव ॥ ३० ॥**

**स** दिलीपः । [ **वेलावप्रवलयां** ] वेलाः समुद्रकूलानि । 'वेला कूलेऽपि वारिधेः' इति विश्वः । ता एव वप्रवलयाः प्राकारवेष्टनानि यस्यास्ताम् । 'स्याच्चयो वप्रमस्त्रियाम् । प्राकारो वरणः शालः प्राचीनं प्रान्ततो वृतिः ॥' इत्यमरः । [ **परिखीकृतसागरां** ] परितः खातं परिखा दुर्गवेष्टनम् । 'खातं खेयं तु परिखा' इत्यमरः । अन्येष्वपि दृश्यत इत्यत्रापिशब्दात्खनेर्डप्रत्ययः । अपरिखाः परिखाः संपद्यमानाः कृताः परिखीकृताः सागरा यस्यास्ताम् । अभूततद्भावे च्विः । अविद्यमानमन्यस्य राज्ञः शासनं यस्यास्तां **अनन्यशासनामुर्वीमेकपुरीमिव शशास** । अनायासेन शासितवानित्यर्थः ॥

**तस्य दाक्षिण्यरूढेन नाम्ना मगधवंशजा ।**
**पत्नी सुदक्षिणेत्यासीदध्वरस्येव दक्षिणा ॥ ३१ ॥**

**तस्य** राज्ञो मगधवंशे जाता **मगधवंशजा** । 'सप्तम्यां जनेर्डः' इति डप्रत्ययः । एतेनाभिजात्यमुक्तम् । [ **दाक्षिण्यरूढेन** ] दाक्षिण्यं परच्छन्दानुवर्तनम् । 'दक्षिणः सरलोदारपरच्छन्दानुवर्तिषु ।' इति शाश्वतः । तेन रूढं प्रसिद्धम् । तेन **नाम्ना अध्वरस्य** यज्ञस्य **दक्षिणा** दक्षिणाख्या पत्नी **इव** । **सुदक्षिणेति** प्रसिद्धा **पत्न्यासीत्** । अत्र श्रुतिः– 'यज्ञो गन्धर्वस्तस्य दक्षिणाप्सरसः' इति । 'दक्षिणाया दाक्षिण्यं नामर्त्विजो दक्षिणत्वप्रापकत्वम् । ते दक्षन्ते दक्षिणां प्रतिगृह्य' इति च ॥

**कलत्रवन्तमात्मानमवरोधे महत्यपि ।**
**तया मेने मनस्विन्या लक्ष्म्या च वसुधाधिपः ॥ ३२ ॥**

**वसुधाधिपः । अवरोधे** अन्तःपुरवर्गे **महति** सति **अपि । मनस्विन्या** दृढचित्तया । पतिचित्तानुवृत्त्यादिनिर्बन्धक्षमयेत्यर्थः । **तया** सुदक्षिणया **लक्ष्म्या चात्मानं कलत्रवन्तं** भार्यावन्तं **मेने** । 'कलत्रं श्रोणिभार्ययोः' इत्यमरः । चशब्दाच्चिप इत्यनेन वसुधया चेति गम्यते ॥

**तस्यामात्मानुरूपायामात्मजन्मसमुत्सुकः ।**
**विलम्बितफलैः कालं स निनाय मनोरथैः ॥ ३३ ॥**

स राजा । **आत्मानुरूपायां तस्याम्** [ **आत्मजन्मसमुत्सुकः** ] आत्मनो जन्म यस्यासावात्मजन्मा पुत्रः । तस्मिन्समुत्सुकः । यद्वा आत्मनो जन्मनि पुत्ररूपेणोत्पत्तौ समुत्सुकः सन् । 'आत्मा वै पुत्रनामासि' इति श्रुतेः । विलम्बितं फलं पुत्रप्राप्तिरूपं येषां तैः [ **विलम्बितफलैः** ] **मनोरथैः** कदा मे पुत्रो भवेदित्याशाभिः **कालं निनाय** यापयामास ॥

---

१ औदार्यं वा । २ अध्वरस्य–न ध्वरतीति अध्वरः हिंसारहितः । न हि अग्निना सर्वतः पालितं यज्ञं राक्षसा हिंसितुं प्रभवन्ति । इति ऋग्वेदभाष्ये सायनः ( ऋ० १. १. ४ ). ध्वरतिः हिंसाकर्मा तत्प्रतिषेधो निपातः अहिंस्रः । इति निरुक्ते यास्कः । अध्वानं स्वर्गमार्गं राति ददातीति वा । न ध्वरः अध्वरः अकुटिलः शास्त्रोक्त इति वा । ३ दक्षिणा यज्ञपत्नी च दीक्षा सर्वस्य पूजिता । यया विना हि विश्वेषु सर्वं कर्म हि निष्फलम् ॥ इति स्मरणात् । ४ आत्मा वै जायते पुत्रः । इति श्रुत्यन्तरम् ।

**संतानार्थाय विधये स्वभुजादवतारिता ।**
**तेन धूर्जगतो गुर्वी सचिवेषु निचिक्षिपे ॥ ३४ ॥**

**तेन** दिलीपेन । संतानोऽर्थः प्रयोजनं यस्य तस्मै **संतानार्थाय विधये** अनुष्ठानाय । **स्वभुजादवतारिता** अवरोपिता **जगतः** लोकस्य **गुर्वी धूः** भारः **सचिवेषु निचिक्षिपे** निहिता ॥

**अथाभ्यर्च्य विधातारं प्रयतौ पुत्रकाम्यया ।**
**तौ दंपती वसिष्ठस्य गुरोर्जग्मतुराश्रमम् ॥ ३५ ॥**

**अथ** धुरोऽवतारानन्तरं **पुत्रकाम्यया** आत्मनः पुत्रेच्छया । 'काम्यच्च' इति पुत्रशब्दात्काम्यच्प्रत्ययः । 'अ प्रत्ययात्' इति पुत्रकाम्यधातोरकारप्रत्ययः । ततष्टाप् । तया **तौ दंपती** जायापती । राजदन्तादिषु जायाशब्दस्य दमिति निपातनात्साधुः । **प्रयतौ** पूतौ **विधातारं** ब्रह्माणं **अभ्यर्च्य** । 'स खलु पुत्रार्थिभिरुपास्यते' इति मान्त्रिकाः । **गुरोः** कुलगुरोः **वसिष्ठस्याश्रमं जग्मतुः** । पुत्रप्राप्त्युपायापक्षयेति शेषः ॥

**स्निग्धगम्भीरनिर्घोषमेकं स्यन्दनमास्थितौ ।**
**प्रावृषेण्यं पयोवाहं विद्युदैरावताविव ॥ ३६ ॥**

स्निग्धो मधुरो गम्भीरो निर्घोषो यस्य तं [ **स्निग्धगम्भीरनिर्घोषं** ] **एकं स्यन्दनं** रथम् । प्रावृषि भवः प्रावृषेण्यः । प्रावृष एण्यः इत्येण्यप्रत्ययः । तं **प्रावृषेण्यं पयोवाहं** मेघं **विद्युदैरावताविव** । **आस्थितौ** आरूढौ । जग्मतुरिति पूर्वेण संबन्धः । इरा आपः । 'इरा भूवाक्सुराप्सु स्यात्' इत्यमरः । इरावान्समुद्रः । तत्र भव ऐरावतोऽभ्रमातङ्गः । 'ऐरावतोऽभ्रमातङ्गैरावणाभ्रमुवल्लभाः ।' इत्यमरः । 'अभ्रमातङ्गत्वाचाभ्रस्थत्वादभ्ररूपत्वात्' इति क्षीरस्वामी । अत एव मेघारोहणं विद्युत्साहचर्यं च घटते । किं च ऐरावतसाहचर्यादैवैरावती संज्ञा । ऐरावतस्य स्त्री ऐरावतीति क्षीरस्वामी । तस्मात्सुष्ठूक्तं विद्युदैरावताविवेति । एकरथारोहणोक्त्या कार्यसिद्धिबीजं दंपत्योरत्यन्तसौमनस्यं सूचयति ॥

**मा भूदाश्रमपीडेति परिमेयपुरःसरौ ।**
**अनुभावविशेषात्तु सेनापरिवृताविव ॥ ३७ ॥**

पुनः किंभूतौ दंपती । **आश्रमपीडा मा भूत्** मास्तु **इति** हेतोः । 'माङि लुङ्' इत्याशीरर्थे लुङ् । 'न माङ्योगे' इत्यडागमनिषेधः । **परिमेयपुरःसरौ** परिमितपरिचरौ । **अनुभावविशेषात् तु** तेजोविशेषात् **सेनापरिवृताविव** स्थितौ ॥

**सेव्यमानौ सुखस्पर्शैः शालनिर्यासगन्धिभिः ।**
**पुष्परेणूत्किरैर्वातैराधूतवनराजिभिः ॥ ३८ ॥**

पुनः कथंभूतौ । सुखः शीतलत्वात्प्रियः स्पर्शो येषां तैः [ **सुखस्पर्शैः** ] शा-

---

१ मेघस्योपरि मेघो यः स ऐरावत उच्यते । इ० दक्षिणावर्तः. २ विद्युत्साम्यात्सुदक्षिणाया अलौकिकी देहकान्तिः, ऐरावतसाम्याद्दिलीपस्य लोकोत्तरः वपुःप्रकर्षः मेघसाम्याद्रथस्य विशालत्वादिकं च सूचितानि । 'विद्युदैरावते इव' इति पाठे तु ऐरावतं इन्द्रधनुः इत्यत्र पुंनपुंसकयोः भिन्नलिङ्गस्यानिष्टत्वात् उपमादूषणं चिन्तनीयम् । इ० चारित्रवर्धनः ।

लनिर्यासगन्धिभिः सर्जतरुनिस्यन्दगन्धवाद्भिः । 'शालः सर्जतरुः स्मृतः' इति शाश्वतः । उत्किरन्ति विक्षिपन्तीत्युत्किराः । 'इगुपध–' इत्यादिना किरतेः-कप्रत्ययः । पुष्परेणूनामुत्किरास्तैः [ **पुष्परेणूत्किरैः** ] आधूता मान्द्यादीषत्कम्पिता वनराजयो यैस्तैः [ **आधूतवनराजिभिः** ] **वातैः सेव्यमानौ** ॥

**मनोभिरामाः शृण्वन्तौ रथनेमिस्वनोन्मुखैः ।**
**षड्जसंवादिनीः केकाः द्विधा भिन्नाः शिखण्डिभिः ॥ ३९ ॥**

**रथनेमिस्वनोन्मुखैः** । मेघध्वनिशङ्कयोन्नमितमुखैरित्यर्थः । **शिखण्डिभिः** मयूरैः **द्विधा भिन्नाः** । शुद्धविकृतभेदेनाविष्कृतावस्थायां च्युताच्युतभेदेन वा षड्जो द्विविधः । तत्सादृश्यात्केका अपि द्विधा भिन्ना इत्युच्यते । अत एवाह–**षड्जसंवादिनीः** इति । षड्भ्यः स्थानेभ्यो जातः षड्जः । तदुक्तम्—' नासाकण्ठमुरस्तालुजिह्वादन्तांश्च संस्पृशन् । षड्भ्यः संजायते यस्मात्तस्मात्षड्ज इति स्मृतः ॥ ' इति । स च तन्त्रीकण्ठजन्मा स्वरविशेषः । 'निषादर्षभगान्धारषड्जमध्यमधैवताः । पञ्चमश्चेत्यमी सप्त तन्त्रीकण्ठोत्थिताः स्वराः ॥' इत्यमरः । षड्जेन संवादिनीः सदृशीः । तदुक्तं मातङ्गेन—' षड्जं मयूरो वदति' इति । **मनोभिरामाः** मनसः प्रियाः । के मूर्ध्नि कायन्ति ध्वनन्तीति केका मयूरवाण्यः । 'केका वाणी मयूरस्य' इत्यमरः । ताः **केकाः शृण्वन्तौ** । इति श्लोकार्थः ॥

**परस्पराक्षिसादृश्यमदूरोज्झितवर्त्मसु ।**
**मृगद्वन्द्वेषु पश्यन्तौ स्यन्दनाबद्धदृष्टिषु ॥ ४० ॥**

विश्रम्भाददूरं समीपं यथा भवति तथोज्झितं वर्त्म यैस्तेषु [ **अदूरोज्झितवर्त्मसु** ] **स्यन्दनाबद्धदृष्टिषु** स्यन्दने रथ आबद्धासञ्जिता दृष्टिर्नेत्रं यैस्तेषु । ' दृग्दृष्टिनेत्रलोचनचक्षुर्नयनाम्बुकेक्षणाक्षीणि ' इति हलायुधः । कौतुकवशाद्रथासक्तदृष्टिष्वित्यर्थः । मृगयश्च मृगाश्च मृगाः । ' पुमान्स्त्रिया ' इत्येकशेषः । तेषां द्वन्द्वेषु मिथुनेषु [ **मृगद्वन्द्वेषु** ] ' स्त्रीपुंसौ मिथुनं द्वन्द्वम्' इत्यमरः । परस्पराक्ष्णां सादृश्यं [ **परस्पराक्षिसादृश्यम्** ] **पश्यन्तौ** । द्वन्द्वशब्दसामर्थ्यान्मृगीषु सुदक्षिणाक्षिसादृश्यं दिलीपो दिलीपाक्षिसादृश्यं च मृगेषु सुदक्षिणेत्येवं विवेक्तव्यम् ॥

**श्रेणीबन्धाद्वितन्वद्भिरस्तम्भां तोरणस्रजम् ।**
**सारसैः कलनिर्ह्रादैः क्वचिदुन्नमिताननौ ॥ ४१ ॥**

**श्रेणीबन्धात्** पङ्क्तिबन्धनाद्धेतोः **अस्तम्भाम्** आधारस्तम्भरहिताम् । तोरणं बहिर्द्वारम् । ' तोरणोऽस्त्री बहिर्द्वारम् ' इत्यमरः । तत्र या स्रग्विरच्यते तां **तोरणस्रजं वितन्वद्भिः** । कुर्वद्भिरित्यर्थः । उत्प्रेक्षाव्यञ्जकेवशब्दप्रयोगाभावेऽपि गम्योत्प्रेक्षेयम् । **कलनिर्ह्रादैः** अव्यक्तमधुरध्वनिभिः **सारसैः** पक्षिविशेषैः करणैः । **क्वचिदुन्नमिताननौ** । ' सारसो मैथुनी कामी गोनर्दः पुष्कराह्वयः । ' इति यादवः ॥

**पवनस्यानुकूलत्वात्प्रार्थनासिद्धिशंसिनः ।**
**रजोभिस्तुरगोत्कीर्णैरस्पृष्टालकवेष्टनौ ॥ ४२ ॥**

**प्रार्थनासिद्धिशंसिनः** अनुकूलत्वादेव मनोरथसिद्धिसूचकस्य **पवनस्याकूल-**

---

१ प्रार्थनायाः सिद्धिः तां शंसितुं शीलमस्य । '' शुभगन्धे च शब्दे च सानुकूले च मारुते । प्रस्थिते सर्वकार्याणां सर्वसिद्धिर्ध्रुवं भवेत् । '' इति पालकाप्ये ।

त्वाद् गन्तव्यदिगभिमुखत्वात् । **तुरगोत्कीर्णैः रजोभिः** अस्पृष्टा अलका देव्या वेष्टनमुष्णीषं च राज्ञो ययोस्तौ तथोक्तौ [ **अस्पृष्टालकवेष्टनौ** ] । 'शिरसा वेष्टनशोभिना सुतः' ( अ. स. १२ श्लो. ) इति वक्ष्यति ॥

**सरसीष्वरविन्दानां वीचिविक्षोभशीतलम् ।**
**आमोदमुपजिघ्रन्तौ स्वनिःश्वासानुकारिणम् ॥ ४३ ॥**

**सरसीषु वीचिविक्षोभशीतलम्** ऊर्मिसंघट्टनेन शीतलं स्वनिःश्वासमनुकर्तुं शीलमस्येति **स्वनिःश्वासानुकारिणम्** । एतेन तयोरुत्कृष्टस्त्रीपुंसजातीयत्वमुक्तम् । **[1]अरविन्दानामामोदमुपजिघ्रन्तौ** घ्राणेन गृह्णन्तौ ॥

**ग्रामेष्वात्मविसृष्टेषु यूपचिह्नेषु यज्वनाम् ।**
**अमोघाः प्रतिगृह्णन्तावर्घ्यानुपदमाशिषः ॥ ४४ ॥**

**आत्मविसृष्टेषु** स्वदत्तेषु । यूपो नाम संस्कृतः पशुबन्धाय दारुविशेषः । यूपाः एव चिह्नानि येषां तेषु [ **यूपचिह्नेषु** ] **ग्रामेषु अमोघाः** सफलाः **यज्वनां** विधिनेष्टवताम् । 'यज्वा तु विधिनेष्टवान्' इत्यमरः । 'सुयजोर्ङ्वनिप्' इति ङ्वनिप्प्रत्ययः । **आशिषः** आशीर्वादान् । अर्घः पूजाविधिः । तदर्थं द्रव्यमर्घ्यम् । 'पादार्घाभ्यां च' इति यत्प्रत्ययः । 'षट् तु त्रिष्वर्घ्यमर्घार्थे पाद्यं पादाय वारिणि' इत्यमरः । अर्घ्यस्यानुपदमन्वक् [ **अर्घ्यानुपदम्** ] अर्घ्यस्वीकारानन्तरमित्यर्थः । **प्रतिगृह्णन्तौ** स्वीकुर्वन्तौ पदस्य पश्चादनुपदम् । पश्चादर्थेऽव्ययीभावः । 'अन्वगन्वक्षमनुगेऽनुपदं क्लीबमव्ययम्' । इत्यमरः ॥

**हैयंगवीनमादाय घोषवृद्धानुपस्थितान् ।**
**नामधेयानि पृच्छन्तौ वन्यानां मार्गशाखिनाम् ॥ ४५ ॥**

ह्यस्तनगोदोहोद्भवं घृतं **हैयंगवीनम्** । ह्यः पूर्वेद्युर्भवम् । 'तत्तु हैयंगवीनं यद्ध्योगोदोहोद्भवं घृतम् ।' इत्यमरः । 'हैयंगवीनं संज्ञायाम्' इति निपातः । तत्सद्योघृतं **आदायोपस्थितान्घोषवृद्धान्** । घोष आभीरपल्ली स्यात्' इत्यमरः । **वन्यानां मार्गशाखिनां नामधेयानि पृच्छन्तौ** । 'दुह्याच्–' इत्यादिना पृच्छतेर्द्विकर्मकत्वम् । कुलकम् ॥

**काप्यभिख्या तयोरासीद्व्रजतोः शुद्धवेषयोः ।**
**हिमनिर्मुक्तयोर्योगे चित्राचन्द्रमसोरिव ॥ ४६ ॥**

**व्रजतोः** गच्छतोः **शुद्धवेषयोः** उज्ज्वलनेपथ्ययोः **तयोः** सुदक्षिणादिलीपयोः । **हिमनिर्मुक्तयोः चित्राचन्द्रमसोरिव योगे** सति **कापि** अनिर्वाच्या **अभिख्या** शोभा **आसीत्** । 'अभिख्या नामशोभयोः' इत्यमरः । 'आतश्चोपसर्गे' इत्यङ्प्रत्ययः । चित्रा नक्षत्रविशेषः । शिशिरापगमे चैत्र्यां चित्रापूर्णचन्द्रमसोरिवेत्यर्थः ॥

---

१ अरविन्दं–अरं शीघ्रं लिप्सां विन्दतीति । अराकाराणि दलानि तत्सादृश्याद् अराः तानि विन्दतीति वा । पा. ३. १. १३८. अस्य च अतिमनोहारिसौगन्ध्यात् मदनबाणता । तदुक्तं–अरविन्दमशोकं च चूतं च नवमल्लिका । नीलोत्पलं च पञ्चैते पञ्चबाणस्य सायकाः ॥' इति । २ हीनाधिकत्वं वचनलिङ्गभेदो विपर्ययः । असादृश्यासंभवौ च दोषाः सप्तोपमागताः । इति प्राचीनसंमता उपमादोषाः । किं तु यत्र धीमतां नोद्वेगस्तत्रैते उपमां दूषयितुं नालं ( का. द. २. ५१ ). नव्यास्तु कालपुरुषविध्यादिभेदस्यापि उपमादूषकतामाहुः । तेनात्र चित्राचन्द्रमसोरभिख्या न खलु आसीत् अपि तु सर्वदा भवत्येव, सुदक्षिणादिलीपयोस्तु तादृशी शोभा आसीदिति उपमानोपमेययोः कालभेदात् भग्नप्रक्रमत्वं नाम दोषः । कवयस्तावत्कालादीनां दूषकत्वं स्फुटं प्रतीयमानमपि प्रायः न गणयन्ति ।

**तत्तद्भूमिपतिः पत्न्यै दर्शयन्प्रियदर्शनः ।**
**अपि लङ्घितमध्वानं बुबुधे न बुधोपमः ॥ ४७ ॥**

प्रियं दर्शनं स्वकर्मकं यस्यासौ **प्रियदर्शनः** । योग्यदर्शनीय इत्यर्थः । **भूमिपतिः पत्न्यै तत्तद्** अद्भुतं वस्तु **दर्शयन् लङ्घितं** अतिवाहितं **अप्यध्वानं न बुबुधे** न ज्ञातवान् । [ **बुधोपमः** ] सन् बुधः सौम्य उपमोपमानं यस्येति विग्रहः । इदं विशेषणं तत्तद्दर्शयन्नित्युपयोगितयैवास्य ज्ञातृत्वसूचनार्थम् ॥

**स दुष्प्रापयशाः प्रापदाश्रमं श्रान्तवाहनः ।**
**सायं संयमिनस्तस्य महर्षेर्महिषीसखः ॥ ४८ ॥**

**दुष्प्रापयशाः** दुष्प्रापमन्यदुर्लभं यशो यस्य स तथोक्तः । **श्रान्तवाहनो** दूरोपगमनात्क्लान्तयुग्यः । महिष्याः सखा **महिषीसखः** । 'राजाहःसखिभ्यष्टच्' इति टच्प्रत्ययः । सहायान्तरनिरपेक्ष इति भावः । **स** राजा । **सायं** सायंकाले **संयमिनः** नियमवतः **तस्य महर्षेः** वसिष्ठस्य **आश्रमं प्रापत्** प्राप । पुषादित्वादङ् ॥

तमाश्रमं विशिनष्टि—

**वनान्तरादुपावृत्तैः समित्कुशफलाहरैः ।**
**पूर्यमाणमदृश्याग्निप्रत्युद्यातैस्तपस्विभिः ॥ ४९ ॥**

**वनान्तरात्** अन्यस्माद्वनात् **उपावृत्तैः** प्रत्यावृत्तैः । समिधश्च कुशांश्च फलानि चाहर्तुं शीलं येषामिति समित्कुशफलाहराः तैः [ **समित्कुशफलाहरैः** ] । 'आङि ताच्छील्ये' इति हरतेराङ्पूर्वादच्प्रत्ययः । अदृश्यैर्दर्शनायोग्यैरग्निभिर्वैतानिकैः प्रत्युद्याताः प्रत्युद्गताः तैः [ **अदृश्याग्निप्रत्युद्यातैः** ] **तपस्विभिः पूर्यमाणम्** । 'प्रोष्यागच्छतामाहिताग्नीनामग्नयः प्रत्युद्यान्ति ' इति श्रुतेः । यथाह—'कामं पितरं प्रोषितवन्तं पुत्राः प्रत्याधावन्ति । एवमेत ( एवं ह वैत- ) मग्नयः प्रत्याधावन्ति सशकलान्दारूनिवाहरन् ।' इति ॥

**आकीर्णमृषिपत्नीनामुटजद्वाररोधिभिः ।**
**अपत्यैरिव नीवारभागधेयोचितैर्मृगैः ॥ ५० ॥**

नीवाराणां भाग एव भागधेयोंऽशः । ' रूपनामभागेभ्यो धेयः ' इति वक्तव्यसूत्रात्स्वाभिधेये धेयप्रत्ययः । तस्योचितैः । [ **नीवारभागधेयोचितैः** ] । अत एवोटजानां पर्णशालानां द्वाररोधिभिः [ **उटजद्वाररोधिभिः** ] द्वाररोधकैः **मृगैः** । **ऋषिपत्नीनामपत्यैरिव** । **आकीर्णं** व्याप्तम् ॥

---

१ प्रियं दर्शनं दर्शनीयवस्तुजातं यस्य इति । वस्तूनां दर्शनं स्वकर्तृकं यस्य इति वा । 'प्रियदर्शनः अपूर्ववस्तुद्रष्टा बुधश्चन्द्रपुत्रो ग्रहस्तेन तुल्योऽपि न बुबुधे इति विरोधाभासोऽलंकारः' इ० चारित्रवर्धनः । २ संयमः अस्यास्तीति संयमी तस्य । ध्यानधारणासमाधित्रयं संयमपदवाच्यम् । इ० सर्वद० सं०. ३ अत्र अनुप्रासालङ्कारः । ४ स्कन्धासक्तसामत्कुशैः इ. पा. ५ अस्मात् श्लोकात्परं " आकीर्यमाणमासन्नार्वाधाभिः समिदाहरैः । वैखानसैरदृश्याग्निप्रत्युद्गमनवृत्तिभिः " इत्यतिरिक्तं श्लोकं केचित्पठन्ति । ६ उटेभ्यः तृणपर्णादिभ्यः जायते इ० उटजः । ७ अपत्यैः—न पतन्ति पितरोऽनेन इति अपत्यम् । तथा च यास्कः—अपत्यं कस्मात् अपततं भवति पितुः सकाशादेत्य पृथक्ततं भवति; अनेन जातेन सता पिता नरकं न पततीति वा ।

सेकान्ते मुनिकन्याभिस्तत्क्षणोज्झितवृक्षकम् ।
विश्वासाय विहङ्गानामालवालाम्बुपायिनाम् ॥ ५१ ॥

**सेकान्ते** वृक्षमूलसेचनावसाने **मुनिकन्याभिः**। सेक्त्रीभिः । आलवालेषु जलावापप्रदेशेषु यदम्बु तत्पायिनाम् [ **आलवालाम्बुपायिनाम्** ]। 'स्यादालवालमावालमावापः' इत्यमरः । **विहङ्गानां** पक्षिणां **विश्वासाय** विश्रम्भाय । 'समौ विश्वासविश्रम्भौ' इत्यमरः । तत्क्षणे सेकक्षण उज्झिता वृक्षका ह्रस्ववृक्षा यस्मिंस्तम् [ **तत्क्षणोज्झितवृक्षकम्** ]। ह्रस्वार्थे कप्रत्ययः ॥

आतपात्ययसंक्षिप्तनीवारासु निषादिभिः ।
मृगैर्वर्तितरोमन्थमुटजाङ्गनभूमिषु ॥ ५२ ॥

आतपस्यात्ययेऽपगमे सति संक्षिप्ता राशीकृता नीवारास्तृणधान्यानि यासु तासु [ **आतपात्ययसंक्षिप्तनीवारासु** ] । 'नीवारास्तृणधान्यानि' इत्यमरः । उटजानां पर्णशालानामङ्गनभूमिषु चत्वरभागेषु [ **उटजाङ्गनभूमिषु** ] । 'पर्णशालोटजोऽस्त्रियाम्' इति, 'अङ्गनं चत्वराजिरे' इति चामरः । **निषादिभिः** उपविष्टैः मृगैः वर्तितो निष्पादितो रोमन्थश्चर्वितचर्वणं यस्मिन्नाश्रमे तम् [ **वर्तितरोमन्थम्** ] ॥

अभ्युत्थिताग्निपिशुनैरतिथीनाश्रमोन्मुखान् ।
पुनानं पवनोद्धूतैर्धूमैराहुतिगन्धिभिः ॥ ५३ ॥

अभ्युत्थिताः प्रज्वलिताः । होमयोग्या इत्यर्थः । 'समिद्धेऽग्नावाहुतीर्जुहोति' इति वचनात् । तेषामग्नीनां पिशुनैः सूचकैः [ **अभ्युत्थिताग्निपिशुनैः** ] **पवनोद्धूतैः** । आहुतिगन्धो येषामस्तीत्याहुतिगन्धिनः तैः [ **आहुतिगन्धिभिः** ] **धूमैः आश्रमोन्मुखानतिथीन्** **पुनानं** पवित्रीकुर्वाणम् ॥ कुलकम् ॥

अथ यन्तारमादिश्य धुर्यान्विश्रामयेति सः ।
तामवारोहयत्पत्नीं रथादवततार च ॥ ५४ ॥

**अथ** आश्रमप्राप्त्यनन्तरं **स** राजा **यन्तारं** सारथिम् । धुरं वहन्तीति धुर्या युग्याः । 'धुरो यड्ढकौ' इति यत्प्रत्ययः । 'धूर्वहे धुर्यधौरेयधुरीणाः सधुरंधराः ।' इत्यमरः । **धुर्यान्** रथाश्वान् **विश्रामय** विनीतश्रमान्कुरु **इति आदिश्य** आज्ञाप्य **तां पत्नीं रथाद् अवारोहयद्** अवतारितवान्स्वयं च **अवततार** । 'विश्रमय' इति ह्रस्वपाठे 'जनीजृष्' इति मित्त्वे 'मितां ह्रस्वः' इति ह्रस्वः । दीर्घपाठे 'मितां ह्रस्वः' इति सूत्रे 'वा चित्तविरागे' इत्यतो 'वा' इत्यनुवर्त्य व्यवस्थितविभाषाश्रयणत्वाद्ध्रस्वाभाव इति वृत्तिकारः ॥

तस्मै सभ्याः सभार्याय गोप्त्रे गुप्ततमेन्द्रियाः ।
अर्हणामर्हते चक्रुर्मुनयो नयचक्षुषे ॥ ५५ ॥

सभायां साधवः **सभ्याः** । 'सभाया यः' इति यप्रत्ययः । **गुप्ततमेन्द्रियाः**

---

१ आ समन्तात् लवं जललवं आलाति गृह्णातीति आलवालम् । २ अतति गच्छतीति अतिथिः । 'ऋतन्यञ्जि–' ( उ० ४. २ ) इति इथिन् । यद्वा न विद्यते द्वितीया तिथिः यस्य एकत्र एकरात्रमेवावस्थानात् इति अतिथिः । तथा च मनुः–एकरात्रं तु निवसन्नतिथिर्ब्राह्मणः स्मृतः । अनित्यं हि स्थितो यस्मात्तस्मादतिथिरुच्यते ॥ अ० ३. १०२.

अत्यन्तनियमितेन्द्रियाः **मुनयः सभार्याय गोप्त्रे** रक्षकाय । नयः शास्त्रमेव चक्षुरतत्त्वावेदकं प्रमाणं यस्य तस्मै **नयचक्षुषे** । अत एव अर्हते प्रशस्ताय । पूज्यायेत्यर्थः । 'अर्हः प्रशंसायाम्' इति शतृप्रत्ययः । **तस्मै** राज्ञे **अर्हणां** पूजां **चक्रुः** । 'पूजा नमस्यापचितिः सपर्यार्चार्हणाः समाः ।' इत्यमरः ॥

**विधेः सायंतनस्यान्ते स ददर्श तपोनिधिम् ।**
**अन्वासितमरुन्धत्या स्वाहयेव हविर्भुजम् ॥ ५६ ॥**

**स** राजा **सायंतनस्य** सायंभवस्य । 'सायंचिरम्–' इत्यादिना ट्युलप्रत्ययः । **विधेः** जपहोमाद्यनुष्ठानस्य **अन्ते** अवसाने **अरुन्धत्या अन्वासितं** पश्चादुपवेशनेनोपसेवितम् । कर्मणि क्तः । उपसर्गवशात्सकर्मकत्वम् । 'अन्वास्यैनाम्' इत्यादिवदुपपद्यते । **तपोनिधिं** वसिष्ठम् । **स्वाहया** स्वाहादेव्या । 'अथाग्नायी स्वाहा च हुतभुक्प्रिया' इत्यमरः । **अन्वासितं हविर्भुजमिव ददर्श** । 'समित्पुष्पकुशाग्न्यम्बुमृदन्नाक्षतपाणिकः । जपं होमं च कुर्वाणो नाभिवाद्यो द्विजो भवेत् ॥' इत्यनुष्ठानस्य मध्येऽभिवादननिषेधाद्विधेरन्ते ददर्शेत्युक्तम् । अन्वासनं चात्र पतिव्रताधर्मत्वेनोक्तम् । न तु कर्माङ्गत्वेन । विधेरन्त इति कर्मणः समाप्त्यभिधानात् ॥

**तयोर्जगृहतुः पादान्राजा राज्ञी च मागधी ।**
**तौ गुरुर्गुरुपत्नी च प्रीत्या प्रतिननन्दतुः ॥ ५७ ॥**

**मागधी** मगधराजपुत्री **राज्ञी** सुदक्षिणा **राजा च तयोः** अरुन्धतीवसिष्ठयोः **पादान् जगृहतुः** । 'पादः पदङ्घ्रिश्चरणोऽस्त्रियाम्' इत्यमरः । पादग्रहणमभिवादनम् । **गुरुपत्नी गुरुश्च** कर्तारौ । सा च स च **तौ** सुदक्षिणादिलीपौ कर्मभूतौ । **प्रीत्या** हर्षेण **प्रतिननन्दतुः** । आशीर्वादादिभिः संभावयांचक्रतुरित्यर्थः ॥

**तमातिथ्यक्रियाशान्तरथक्षोभपरिश्रमम् ।**
**पप्रच्छ कुशलं राज्ये राज्याश्रममुनिं मुनिः ॥ ५८ ॥**

**मुनिः** । अतिथ्यर्थमातिथ्यम् । 'अतिथेर्ञ्यः' इति ञ्यप्रत्ययः । आतिथ्यस्य क्रिया । तया शान्तो रथक्षोभेण यः परिश्रमः स यस्य स तं तथोक्तम् [ **आतिथ्यक्रियाशान्तरथक्षोभपरिश्रमम्** ] । राज्यमेवाश्रमस्तत्र मुनिम् [ **राज्याश्रममुनिम्** ] मुनितुल्यमित्यर्थः । **तं** दिलीपं **राज्ये कुशलं पप्रच्छ** । पृच्छतेस्तु द्विकर्मकत्वमित्युक्तम् । यद्यपि राज्यशब्दः पुरोहितादिष्वन्तर्गतत्वाद्राजकर्मवचनः तथाप्यत्र सप्ताङ्गवचनः । 'उपपन्नं ननु शिवं सप्तस्वङ्गेषु' ( १ । ६० ) इत्युत्तरविरोधात् । तथाह मनुः–'स्वाम्यमात्यपुरं राष्ट्रं कोशदण्डौ तथा सुहृत् । सप्तैतानि समस्तानि लोकेऽस्मिन्राज्यमुच्यते ॥' इति । तत्र 'ब्राह्मणं कुशलं पृच्छेत्क्षत्रबन्धुमनामयम् । वैश्यं क्षेमं

---

१ पादानित्यत्र 'पादौ' इति चारित्रवर्धनः पठति व्याचष्टे चः–ननु पादानिति वक्तव्ये पादाविति कथं द्विवचनप्रयोगः । पादजातेर्द्वित्वविवक्षितत्वात् । स्त्रीणां चक्षुरित्यादिवन्न दोषः । उक्तं च वामनेन "स्तनादौ द्वित्वं द्वित्वाविष्टा जातिः प्रायेण" इति । यथा माघे 'स्तनौ दधानास्तरुण्यः' इति । मागधीपदेन विशिष्टवंशत्वं ज्ञाप्यते । तेन च गुरुजनचरणप्रणामौचित्यं द्योत्यते । ननु कथं राजा राज्ञीत्यादीनामेकवचनानां जगृहतुः प्रतिननन्दतुः इति द्विवचनक्रियाभिः सम्बन्धः । 'द्वयोर्नाम्नोर्बहूनां वा यदि वाक्यं समुच्चये । अङ्गवद्वाश्रिता संख्या पदादौ वा विशेषतः ॥' इतिविकल्पविधानान्न दोषःइति ।

समागम्य शूद्रमारोग्यमेव च ॥' इति मनुवचने सत्यपि तस्य राज्ञो महानुभावत्वाद्ब्राह्मणोचितः कुशलप्रश्न एव कृत इत्यनुसंधेयम् । अत एवोक्तम् ' राज्याश्रममुनिम् ' इति ॥

**अथाथर्वनिधेस्तस्य विजितारिपुरः पुरः ।**
**अर्थ्यामर्थपतिर्वाचमाददे वदतां वरः ॥ ५९ ॥**

**अथ** प्रश्नानन्तरं **विजितारिपुरः** विजितशत्रुनगरो **वदतां** वक्तॄणां **वरः** श्रेष्ठः । ' यतश्च निर्धारणम्' इति षष्ठी । **अर्थपतिः** राजाथर्वणोऽथर्ववेदस्य निधेः [ **अथर्वनिधेः** ] **तस्य** मुनेः **पुरः** अग्रे **अर्थ्यां** अर्थादनपेताम् । 'धर्मपथ्यर्थन्यायादनपेते' इति यत्प्रत्ययः । **वाचमाददे** । वक्तुमुपक्रान्तवानित्यर्थः । अथर्वनिधेरित्यनेन पुरोहितकृत्याभिज्ञत्वात्तत्कर्मनिर्वाहकत्वं मुनेरस्तीति सूच्यते । यथाह कामन्दकः—'त्रय्यां च दण्डनीत्यां च कुशलः स्यात्पुरोहितः । अथर्वविहितं कुर्यान्नित्यं शान्तिकपौष्टिकम् ॥' इति[1] ॥

**उपपन्नं ननु शिवं सप्तस्वङ्गेषु यस्य मे ।**
**दैवीनां मानुषीणां च प्रतिहर्ता त्वमापदाम् ॥ ६० ॥**

हे गुरो । सप्तस्वङ्गेषु स्वाम्यमात्यादिषु । ' स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च । सप्ताङ्गानि' इत्यमरः । **शिवं** कुशलं **उपपन्नं ननु** युक्तमेव । नन्ववधारणे । 'प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु ' इत्यमरः । कथमित्यत्राह । **यस्य मे दैवीनां** देवेभ्य आगतानां दुर्भिक्षादीनाम् **मानुषीणां** मनुष्येभ्य आगतांना चौरभयादीनाम् । उभयत्रापि ' तत आगतः' इत्यण् । 'टिड्ढाणञ्–' इत्यादिना ङीप् । **आपदां** व्यसनानाम् **त्वं प्रतिहर्ता** वारयितासि । अत्राह कामन्दकः––' हुताशनो जलं व्याधिर्दुर्भिक्षं मरणं तथा । इति पञ्चविधं दैवं मानुषं व्यसनं ततः ॥ आयुक्तकेभ्यश्चौरेभ्यः परेभ्यो राजवल्लभात् । पृथिवीपतिलोभाच्च नराणां पञ्चधा मतम् ॥' इति ॥

तत्र मानुषापत्प्रतीकारमाह—

**तव मन्त्रकृतो मन्त्रैर्दूरात्प्रशमितारिभिः ।**
**प्रत्यादिश्यन्त इव मे दृष्टलक्ष्यभिदः शराः ॥ ६१ ॥**

**दूरात्** परोक्ष एव **प्रशमितारिभिः** । मन्त्रान्कृतवान्मन्त्रकृत् । 'सुकर्मपापमन्त्रपुण्येषु कृञः' इति क्विप् । तस्य **मन्त्रकृतो** मन्त्राणां स्रष्टुः प्रयोक्तुर्वा **तव मन्त्रैः** कर्तृभिः दृष्टं प्रत्यक्षं यल्लक्ष्यं तन्मात्रं भिन्दन्तीति **दृष्टलक्ष्यभिदः मे शराः प्रत्यादिश्यन्त इव** । वयमेव समर्थाः किमेभिः पिष्टपेषकैरिति निराक्रियन्त इवेत्युत्प्रेक्षा । 'प्रत्यादेशो निराकृतिः' इत्यमरः । त्वन्मन्त्रसामर्थ्यादेव नः पौरुषं फलतीति भावः ॥

संप्रति दैविकापत्प्रतीकारमाह—

**हविरावर्जितं होतस्त्वया विधिवदग्निषु ।**
**वृष्टिर्भवति सस्यानामवग्रहविशोषिणाम् ॥ ६२ ॥**

हे **होतः त्वया विधिवदग्निषु आवर्जितं** प्रक्षिप्तं **हविः** आज्यादिकं कर्तृ अवग्रहो वर्षप्रतिबन्धः । 'अवे ग्रहो वर्षप्रतिबन्धे' इत्यप्प्रत्ययः । 'वृष्टिर्वर्षं तद्विघातेऽवग्राहावग्रहौ समौ । ' इत्यमरः । तेन विशोषिणां विशुष्यतां [ **अवग्रहविशो-**

१ पुरोहितं च कुर्वीत दैवज्ञमुदितोदितम् । दण्डनीत्यां च कुशलमथर्वाङ्गिरसे तथा ॥ इति मिताक्षरायाम् । आचा. १३. ५

षिणाम् ] **सस्यानां वृष्टिर्भवति** । वृष्टिरूपेण सस्यानुपजीवयतीति भावः । अत्र मनुः—' अग्नौ दत्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ' इति ॥

**पुरुषायुषजीविन्यो निरातङ्का निरीतयः ।**
**यन्मदीयाः प्रजास्तस्य हेतुस्त्वद्ब्रह्मवर्चसम् ॥ ६३ ॥**

आयुर्जीवितकालः । पुरुषस्यायुः पुरुषायुषम् । वर्षशतमित्यर्थः । ' शतायुर्वै पुरुषः ' इति श्रुतेः । ' अचतुर–' आदिसूत्रेणाच्प्रत्ययान्तो निपातः । **मदीयाः प्रजाः** । पुरुषायुषं जीवन्तीति **पुरुषायुषजीविन्यः** । **निरातङ्का** निर्भयाः । ' आतङ्को भयमाशङ्का ' इति हलायुधः । **निरीतयः** अतिवृष्ट्यादिरहिता इति **यत्तस्य** सर्वस्य **त्वद्ब्रह्मवर्चसं** तव व्रताध्ययनसंपत्तिरेव **हेतुः** । ' व्रताध्ययनसंपत्तिरित्येतद्ब्रह्मवर्चसम् ' इति हलायुधः । ब्रह्मणो वर्चो ब्रह्मवर्चसम् । ' ब्रह्महस्तिभ्यां वर्चसः ' इत्यच्प्रत्ययः । 'अतिवृष्टिरनावृष्टिर्मूषिकाः शलभाः शुकाः । अत्यासन्नाश्च राजानः षडेता ईतयः स्मृताः ॥ ' इति कामन्दकः ॥

**त्वयैवं चिन्त्यमानस्य गुरुणा ब्रह्मयोनिना ।**
**सानुबन्धाः कथं न स्युः संपदो मे निरापदः ॥ ६४ ॥**

ब्रह्मा योनिः कारणं यस्य तेन [ **ब्रह्मयोनिना** ] ब्रह्मपुत्रेण **गुरुणा त्वयैवम्** उक्तप्रकारेण **चिन्त्यमानस्य** अनुध्यायमानस्य । अत एव **निरापदः** व्यसनहीनस्य **मे संपदः सानुबन्धाः** सानुस्यूतयः । अविच्छिन्ना इति यावत् । **कथं न स्युः** । स्युरेवेत्यर्थः ॥

संप्रत्यागमनप्रयोजनमाह—

**किं तु वध्वां तवैतस्यामदृष्टसदृशप्रजम् ।**
**न मामवति सद्वीपा रत्नसूरपि मेदिनी ॥ ६५ ॥**

**किं तु तवैतस्यां वध्वां** स्नुषायाम् । ' वधूर्जाया स्नुषा चैव ' इत्यमरः । अदृष्टा सदृश्यनुरूपा प्रजा येन तं [ **अदृष्टसदृशप्रजम्** ] **मां सद्वीपा** अपि । रत्नानि सूयत इति **रत्नसूरपि** । ' सत्सूद्विष–' इत्यादिना क्विप् । **मेदिनी नावति** न प्रीणाति । अवधातू रक्षणगतिप्रीत्याद्यर्थेपूपदेशादत्र प्रीणने । रत्नसूरपीत्यनेन सर्वरत्नेभ्यः पुत्ररत्नमेव श्लाघ्यमिति सूचितम् ॥

तदेव प्रतिपादयति—

**नूनं मत्तः परं वंश्याः पिण्डविच्छेददर्शिनः ।**
**न प्रकामभुजः श्राद्धे स्वधासंग्रहतत्पराः ॥ ६६ ॥**

**मत्तः परं** मदनन्तरम् । ' पञ्चम्यास्तसिल् ' । **पिण्डविच्छेददर्शिनः** पिण्डदानविच्छेदमुत्प्रेक्षमाणाः वंशोद्भवा **वंश्याः** पितरः । **स्वधे**त्यव्ययं पितृभोज्ये वर्तते ।

---

१ ब्रह्मणः मानसपुत्रेण इत्यर्थ.—तथा च मत्स्यपुराणे–मरीचिरभवत्पूर्वं ततोऽत्रिर्भगवानृषिः । अङ्गिराश्चाभवत्पश्चात्पुलस्त्यस्तदनन्तरम् ॥ ततः पुलहनामा वै ततः क्रतुरजायत । प्रचेताश्च ततः पुत्रो वसिष्ठश्चाभवत्पुनः ॥ पुत्रो भृगुरभू त्तत्र नारदोऽपि चिरादभूत् । दशेमान्मानसान् ब्रह्मा जपन्पुत्रानजीजनत् ॥ २ निर्गता आपदः याभ्यः इति ' सम्पदः ' इत्यस्य विशेषणं वा ।

त्स्याः संग्रहे तत्परा आसक्ताः। ( **स्वधासंग्रहतत्पराः** ) सन्तः **श्राद्धे** पितृकर्मणि ' पितृदानं निवापः स्याच्छ्राद्धं तत्कर्म शास्त्रतः। ' इत्यमरः। **प्रकामभुजः** पर्याप्तभोजिनः **न** भवन्ति **नूनं** सत्यम्। ' कामं प्रकामं पर्याप्तम् ' इत्यमरः। निर्धना ह्यापद्धनं कियदपि संगृह्णन्तीति भावः॥

**मत्परं दुर्लभं मत्वा नूनमावर्जितं मया।**
**पयः पूर्वैः स्वनिःश्वासैः कवोष्णमुपभुज्यते॥ ६७॥**

**मत्परं** मदनन्तरम्। ' अन्यारात्—' इत्यादिना पञ्चमी। **दुर्लभं** दुर्लभ्यं **मत्वा मया आवर्जितं** दत्तं **पयः पूर्वैः** पितृभिः **स्वनिःश्वासैः** दुःखजैः **कवोष्णम्** ईषदुष्णं यथा तथा **उपभुज्यते**। **नूनम्** इति तर्के। कवोष्णमिति कुशब्दस्य कवादेशः। ' कोष्णं कवोष्णं मन्दोष्णं कदुष्णं त्रिषु तद्वति। ' इत्यमरः॥

**सोऽहमिज्याविशुद्धात्मा प्रजालोपनिमीलितः।**
**प्रकाशश्चाप्रकाशश्च लोकालोक इवाचलः॥ ६८॥**

इज्या यागः। ' व्रजयजोर्भावे क्यप् ' इति क्यप्प्रत्ययः। तया विशुद्धात्मा विशुद्धचेतनः [ **इज्याविशुद्धात्मा** ] प्रजालोपेन संतत्यभावेन निमीलितः कृतनिमीलिनः [ **प्रजालोपनिमीलितः** ] **सोऽहम्**। लोक्यत इति लोकः न लोक्यत इत्यलोकः। लोकश्चालोकश्चात्र स्त इति लोकश्चासावलोकश्चेति वा **लोकालोकः** चक्रवालः **अचलः इव**। ' लोकालोकश्चक्रवालः ' इत्यमरः। प्रकाशत इति **प्रकाशश्च** देवर्णविमोचनात्। न प्रकाशत इति **अप्रकाशश्च** पितृणामविमोचनात्। पचाद्यच्। अस्मीति शेषः। लोकालोकोऽप्यन्तः सूर्यसंपर्काद्बहिस्तमोव्याप्त्या च प्रकाशश्चाप्रकाशश्चेति मन्तव्यम्॥

ननु तपोदानादिसंपन्नस्य किमपत्यैरित्यत्राह—

**लोकान्तरसुखं पुण्यं तपोदानसमुद्भवम्।**
**संततिः शुद्धवंश्या हि परत्रेह च शर्मणे॥ ६९॥**

समुद्भवत्यस्मादिति समुद्भवः कारणम्। तपोदाने समुद्भवो यस्य तत् **तपोदानसमुद्भवं** यत् **पुण्यं** तल्लोकान्तरे परलोके सुखं सुखकरम् [ **लोकान्तरसुखम्** ]। शुद्धवंशे भवा **शुद्धवंश्या संततिः हि परत्र** परलोक **इह च** लोके **शर्मणे** सुखाय। ' शर्मशातसुखानि च ' इत्यमरः। भवतीति शेषः॥

**तया हीनं विधातर्मां कथं पश्यन्न दूयसे।**
**सिक्तं स्वयमिव स्नेहाद्वन्ध्यमाश्रमवृक्षकम्॥ ७०॥**

**विधातः** स्रष्टः। **तया** संतत्या **हीनम्** अनपत्यं **माम्**। **स्नेहात्** प्रेम्णा

---

१ प्रकामभुजः—प्रकामं यथा तथा भुञ्जते इ०। २ दिलीपानन्तरं पयो न प्राप्स्याम इति शोकावेशात् निर्गच्छद्भिः निःश्वासैः ईषदुष्णं पितरः स्वीकुर्वते इति तात्पर्यार्थः इ० चारित्रवर्धनः। अस्य समानार्थः श्लोकः शाकुन्तले–अस्मत्परं बत यथाश्रुति संभृतानि को नः कुले निवपनानि नियच्छतीति। नूनं प्रसूतिविकलेन मया प्रसिक्तं धौताश्रुसेकमुदकं पितरः पिबन्ति॥ ३ देवानां ऋणविमोचनात् यागादिक्रियया इत्य०। ४ स्वादूदकस्य परतो लोकालोकाचलो महान्। लोकस्य चाप्यलोकस्य मध्ये गिरिरवस्थितः॥ प्राकार इव संवेष्ट्य लोकान्सर्वान् महामते। लोकालोकाचलो नाम तेनासौ परिकीर्तितः॥ इति पद्मपुराणे।

**स्वयम्** एव **सिक्तं** जलसेकेन वर्धितं **वन्ध्यम्** अफलम् । 'वन्ध्योऽफलोऽवकेशी च' इत्यमरः । आश्रमस्य वृक्षकं [ **आश्रमवृक्षकम्** ] वृक्षपोतम् **इव** । **पश्यन्कथं न दूयसे** न परितप्यसे । विधातरित्यनेन समर्थोऽप्युपेक्षस इति गम्यते ॥

**असह्यपीडं भगवन्नृणमन्त्यमवेहि मे ।**
**अरुंतुदमिवालानमनिर्वाणस्य दन्तिनः ॥ ७१ ॥**

हे **भगवन्** । **मे** मम **अन्त्यमृणं** पैतृकमृणम् । **अनिर्वाणस्य** मज्जनरहितस्य । 'निर्वाणं निर्वृतौ मोक्षे विनाशे गजमज्जने ।' इति यादवः । **दन्तिनः** गजस्य । अरुर्मर्म तुदतीति **अरुंतुदं** मर्मस्पृक् । 'व्रणोऽस्त्रियामीर्ममरुः' इति 'अरुंतुदस्तु मर्मस्पृक्' इति चामरः । 'विध्वरुषोस्तुदः' इति खश्प्रत्ययः । 'अरुर्द्विषत्–' इत्यादिना मुमागमः । **आलानं** बन्धनस्तम्भः **इव** । 'आलानं बन्धनस्तम्भे' इत्यमरः । असह्या सोढुमशक्या पीडा दुःखं यस्मिंस्तत् [ **असह्यपीडम्** ] **अवेहि** । दुःसहदुःखजनकं विद्धीत्यर्थः । 'निर्वाणोत्थानशयनानि त्रीणि गजकर्माणि' इति पालकाप्ये । 'ऋणं देवस्य यागेन ऋषीणां दान [ पाठ ] कर्मणा । संतत्या पितृलोकानां शोधयित्वा परिव्रजेत् ॥'

**तस्मान्मुच्ये यथा तात संविधातुं तथाऽर्हसि ।**
**इक्ष्वाकूणां दुरापेऽर्थे त्वदधीना हि सिद्धयः ॥ ७२ ॥**

हे **तात तस्मात्** पैतृकादृणाद् यथा **मुच्ये** मुक्तो भवामि । कर्मणि लट् । **तथा संविधातुं** कर्तुम् **अर्हसि** । **हि** यस्मात्कारणाद् **इक्ष्वाकूणाम्** इक्ष्वाकुवंश्यानाम् । तद्राजत्वाद्बहुष्वणो लुक् । **दुरापे** दुष्प्राप्ये **अर्थे सिद्धयः त्वदधीनाः** त्वदायत्ताः । इक्ष्वाकूणामिति शेषे षष्ठी[१] । 'न लोक–' इत्यादिना कृद्योगे षष्ठीनिषेधात् ॥

**इति विज्ञापितो राज्ञा ध्यानस्तिमितलोचनः ।**
**क्षणमात्रमृषिस्तस्थौ सुप्तमीन इव ह्रदः ॥ ७३ ॥**

इति **राज्ञा विज्ञापितः ऋषिः** ध्यानेन स्तिमिते लोचने यस्य **ध्यानस्तिमितलोचनः** निश्चलाक्षः सन् **क्षणमात्रम्** । **सुप्तमीनो**[२] **ह्रद इव तस्थौ** ॥

**सोऽपश्यत्प्रणिधानेन संततेः स्तम्भकारणम् ।**
**भावितात्मा भुवो भर्तुरथैनं प्रत्यबोधयत् ॥ ७४ ॥**

**स** मुनिः **प्रणिधानेन** चित्तैकाग्र्येण **भावितात्मा** शुद्धान्तःकरणो **भुवो भर्तुः** नृपस्य **संततेः स्तम्भकारणं** संतानप्रतिबन्धकारणं **अपश्यत्** । **अथ** अनन्तरम् **एनं** नृपं **प्रत्यबोधयत्** । स्वदृष्टं ज्ञापितवानित्यर्थः । एनमिति 'गतिबुद्धि–' इत्यादिनाणि कर्तुः कर्मत्वम् ॥

---

१ एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारी वा । इ० श्रुतेः । २ अत्र षष्ठीविषये चारित्रवर्धनः– कथं कर्तरि षष्ठी ; आक्षिपन्त्यरविन्दानि मुग्धे तव मुखश्रियम् । कोषदण्डसमग्राणां किमेषामस्ति दुष्करम् ॥ इत्यादावालंकारिकैरादृतत्वान्न दोषः । यदाह च भोजः–इदं हि शास्त्रमाहात्म्यदर्शनालसचेतसाम् । अपशब्दवदाभाति न च सौभाग्यमुज्झति ॥ इ०. ३ सुप्ताः निष्पन्दत्वेनावस्थिता इत्यर्थः मत्स्याः जलजन्तव इति यावत् यस्मिन् सः । अत्र "सुप्तमीन" इति शब्देन सर्वेषामेव जलजन्तूनां निश्चेष्टता । "स्तिमितलोचन" इत्यनेन सर्वेषामेव बहिरिन्द्रियाणां वृत्तिनिरोधः गम्यते ।

**पुरा शक्रमुपस्थाय तवोर्वीं प्रति यास्यतः ।**
**आसीत्कल्पतरुच्छायामाश्रिता सुरभिः पथि ॥ ७५ ॥**

**पुरा** पूर्वं **शक्रम्** इन्द्रं **उपस्थाय** संसेव्य **उर्वीं प्रति** भुवमुद्दिश्य **यास्यतः** गमिष्यतः **तव पथि कल्पतरुच्छायां आश्रिता सुरभिः** कामधेनुः **आसीत्** । तत्र स्थितेत्यर्थः ॥

ततः किमित्याह—

**धर्मलोपभयाद्राज्ञीमृतुस्नातामिमां स्मरन् ।**
**प्रदक्षिणक्रियार्हायां तस्यां त्वं साधु नाचरः ॥ ७६ ॥**

ऋतुः पुष्पम् । रज इति यावत् । 'ऋतुः स्त्रीकुसुमेऽपि च' इत्यमरः । ऋतुना निमित्तेन स्नातां [ **ऋतुस्नातां** ] **इमां राज्ञीं** सुदक्षिणां धर्मस्यर्त्वभिगमनलक्षणस्य[१] लोपाद् भ्रंशाद्यद्भयं तस्मात् **धर्मलोपभयात् स्मरन्** ध्यायन् । 'मृदङ्गं दैवतं विप्रं घृतं मधु चतुष्पथम् । प्रदक्षिणानि कुर्वीत विज्ञातांश्च वनस्पतीन् ॥' इति शास्त्रात् **प्रदक्षिणक्रियार्हायां** प्रदक्षिणकरणयोग्यायां **तस्यां** धेन्वां **त्वं साधु** प्रदक्षिणादिसत्कारं **नाचरः** नाचरितवानसि । व्यासक्ता हि विस्मरन्तीति भावः । ऋतुकालाभिगमने मनुः—'ऋतुकालाभिगामी स्यात्स्वदारनिरतः सदा ।' इति । अकरणे दोषमाह पराशरः—'ऋतुस्नातां तु यो भार्यां स्वस्थः सन्नोपगच्छति । बालगोघ्नापराधेन विध्यते नात्र संशयः ॥' इति ॥

**अवजानासि मां यस्मादतस्ते न भविष्यति ।**
**मत्प्रसूतिमनाराध्य प्रजेति त्वां शशाप सा ॥ ७७ ॥**

**यस्मात्** कारणात् **मामवजानासि** तिरस्करोषि । **अतः** कारणात् **मत्प्रसूतिं** मम संततिं **अनाराध्य** असेवयित्वा **ते** तव **प्रजा न भविष्यतीति सा** सुरभिः **त्वां शशाप** । 'शप आक्रोशे' ।

कथं तदस्माभिर्न श्रुतमित्याह—

**स शापो न त्वया राजन्न च सारथिना श्रुतः ।**
**नदत्याकाशगङ्गायाः स्रोतस्युद्दामदिग्गजे ॥ ७८ ॥**

हे **राजन् स शापः त्वया न श्रुतः** । **सारथिना च न श्रुतः** । अश्रवणे हेतुमाह—क्रीडार्थमागता उद्दामानो दाम्न उद्गता दिग्गजा[२] यस्मिंस्तथोक्ते [ **उद्दामदिग्गजे** ] **आकाशगङ्गायाः** मन्दाकिन्याः **स्रोतसि** प्रवाहे **नदति** सति ॥

अस्तु प्रस्तुते किमायातमित्यत्राह—

**ईप्सितं तदवज्ञानाद्विद्धि सार्गलमात्मनः[३] ।**
**प्रतिबध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रमः ॥ ७९ ॥**

**तदवज्ञानात्** तस्या धेनोः अवज्ञानाद् अपमानाद् **आत्मनः** स्वस्याप्तुमिष्टं **ईप्सितं** मनोरथम् । आप्नोतेः सन्नन्तात् क्तः ईकारश्च । **सार्गलं** सप्रतिबन्धं **विद्धि** जानीहि । तथा **हि** । पूज्यपूजाया व्यतिक्रमोऽतिक्रमणं [ **पूज्यपूजाव्यतिक्रमः** ] **श्रेयः प्रतिबध्नाति** ॥

---

१ ऋतौ भार्यामुपेयात् इति श्रुतेः २ ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः । पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्गजा इत्यमरः । ३ अवेहि तदवज्ञानात्—अवेमितदपध्यानाद्—यत्नापेक्षं मनोरथम् । इ० पा०.

तर्हि गत्वा तामाराधयामि । सा वा कथंचिदागमिष्यतीत्याशा न कर्तव्येत्याह—

**हविषे दीर्घसत्रस्य सा चेदानीं प्रचेतसः ।**
**भुजंगपिहितद्वारं पातालमधितिष्ठति ॥ ८० ॥**

**सा च** सुरभिः **इदानीं** दीर्घे सत्रे चिरकालसाध्यो यागविशेषो यस्य तस्य [ **दीर्घसत्रस्य** ] **प्रचेतसः हविषे** दध्याज्यादिहविरर्थे **भुजंगपिहितद्वारं** भुजंगावरुद्धद्वारं ततो दुष्प्रवेशं **पातालम् अधितिष्ठति** । पाताले तिष्ठतीत्यर्थः । 'अधिशीङ्स्थासां कर्म' इति कर्मत्वम् ॥

तर्हि का गतिरित्यत आह—

**सुतां तदीयां सुरभेः कृत्वा प्रतिनिधिं शुचिः ।**
**आराधय सपत्नीकः प्रीता कामदुघा हि सा ॥ ८१ ॥**

तस्याः सुरभेः इयं तदीया । तां **तदीयां सुतां सुरभेः प्रतिनिधिं कृत्वा शुचिः** शुद्धः । सह पत्न्या वर्तत इति **सपत्नीकः** सन् । 'नद्यृतश्च' इति कप्प्रत्ययः । **आराधय** । **हि** यस्मात्कारणात् **सा प्रीता** तुष्टा सती । कामान्दोग्धीति **कामदुघा** भवति । 'दुहः कब्घश्च' इति कप्प्रत्ययः घादेशश्च ॥

**इति वादिन एवास्य होतुराहुतिसाधनम् ।**
**अनिन्द्या नन्दिनी नाम धेनुराववृते वनात् ॥ ८२ ॥**

**इति वादिनः** वदत **एव होतुः** हवनशीलस्य । 'तृन्' इति तृन्प्रत्ययः । **अस्य** मुनेराहुतीनां साधनं कारणम् [ **आहुतिसाधनम्** ] । नन्दयतीति व्युत्पत्त्या **नन्दिनी नाम अनिन्द्या अगर्ह्या** प्रशस्ता **धेनुः वनाद् आववृते** प्रत्यागता । 'अन्याक्षेपो भविष्यन्त्याः कार्यसिद्धेर्हि लक्षणम् । ' इति भावः ॥

संप्रति धेनुं विशिनष्टि—

**ललाटोदयमाभुग्नं पल्लवस्निग्धपाटला ।**
**बिभ्रती श्वेतरोमाङ्कं संध्येव शशिनं नवम् ॥ ८३ ॥**

पल्लववत्स्निग्धा चासौ पाटला च [ **पल्लवस्निग्धपाटला** ] । संध्यायामप्येतद्विशेषणं योज्यम् । ललाट उदयो यस्य स ललाटोदयः तं [ **ललाटोदयम्** ] । **आभुग्नं** ईषद्वक्रम् । 'आविद्धं कुटिलं भुग्नं वेल्लितं वक्रमित्यपि । ' इत्यमरः । 'उदितश्च ' इति निष्ठातस्य नत्वम् । श्वेतरोमाण्येवाङ्कस्तं [ **श्वेतरोमाङ्कं** ] **बिभ्रती** । **नवं शशिनं** बिभ्रती **संध्येव** । स्थिता ॥

**भुवं कोष्णेन कुण्डोध्नी मेध्येनावभृथादपि ।**
**प्रस्रवेनाभिवर्षन्ती वत्सालोकप्रवर्तिना ॥ ८४ ॥**

**कोष्णेन** किंचिदुष्णेन । 'कवं चोष्णे' इति चकारात्कादेशः । **अवभृथादपि** अवभृथस्नानादपि **मेध्येन** पवित्रेण । 'पूतं पवित्रं मेध्यं च' इत्यमरः । वत्सस्यालोकेन प्रदर्शनेन प्रवर्तिना प्रवहता [ **वत्सालोकप्रवर्तिना** ] **प्रस्रवेन** क्षीराभिस्यन्दनेन

---

१ स त्वमेकान्तरां तस्या मदीयां वत्समातरम् ।......सा वां कामान् प्रदास्यति ॥ इ. पा.
२ अस्मात्परमयमधिकः श्लोक उपलभ्यते क्वचित्—ताम्रां ललाटजां रेखां बिभ्रती सा सितेतराम् । सन्ध्या प्रातीपदेनेव प्रतियुतिभिन्ना हिमांशुना ॥ ३ प्रकृष्टं स्नौति इ॰ प्रस्रवः ।

**भुवमभिवर्षन्ती** सिञ्चन्ती । कुण्डमिवोध आपीनं यस्याः सा **कुण्डोध्नी** । ' ऊधस्तु क्लीबमापीनम् ' इत्यमरः । ' ऊधसोऽनङ् ' इत्यनङादेशः । ' बहुव्रीहेरूधसो ङीष् ' इति ङीष् ॥

**रजःकणैः खुरोद्धूतैः स्पृशद्भिर्गात्रमन्तिकात् ।**
**तीर्थाभिषेकजां शुद्धिमादधाना महीक्षितः ॥ ८५ ॥**

**खुरोद्धूतैः अन्तिकात्** समीपे **गात्रं स्पृशद्भिः** । ' दूरान्तिकार्थेभ्यो द्वितीया च ' इति चकारात्पञ्चमी । रजसां कणैः [ **रजःकणैः** ] । महीं क्षियत ईष्ट इति महीक्षित्तस्य [ **महीक्षितः** ] । तीर्थाभिषेकेण जातां **तीर्थाभिषेकजाम्** । **शुद्धिं आदधाना** कुर्वाणा । एतेन वायव्यं स्नानमुक्तम् । उक्तं च मनुना—' आग्नेयं भस्मना स्नानमवगाह्यं तु वारुणम् । आपोहिष्ठेति च ब्राह्मं वायव्यं गोरजः स्मृतम् ॥ ' इति ॥

**तां पुण्यदर्शनां दृष्ट्वा निमित्तज्ञस्तपोनिधिः ।**
**याज्यमाशंसितावन्ध्यप्रार्थनं पुनरब्रवीत् ॥ ८६ ॥**

**निमित्तज्ञः** शकुनज्ञः **तपोनिधिः** वसिष्ठः । पुण्यं दर्शनं यस्यास्तां [ **पुण्यदर्शनां** ] **तां** धेनुं **दृष्ट्वा** । आशंसितं मनोरथः । नपुंसके भावे क्तः । तत्रावन्ध्यं सफलं प्रार्थनं यस्य स तम् [ **आशंसितावन्ध्यप्रार्थनम्** ] । अवन्ध्यमनोरथमित्यर्थः । याजयितुं योग्यं **याज्यं** पार्थिवं **पुनरब्रवीत्** ॥

**अदूरवर्तिनीं सिद्धिं राजन्विगणयात्मनः ।**
**उपस्थितेयं कल्याणी नाम्नि कीर्तित एव यत् ॥ ८७ ॥**

हे **राजन् आत्मनः** कार्यस्य **सिद्धिं अदूरवर्तिनीं** शीघ्रभाविनीं **विगणय** विद्धि । **यद्** यस्मात्कारणात् **कल्याणी** मङ्गलमूर्तिः । ' बह्वादिभ्यश्च ' इति ङीष् । **इयं** धेनुः **नाम्नि कीर्तिते** कथिते सति **एवोपस्थिता** ॥

**वन्यवृत्तिरिमां शश्वदात्मानुगमनेन गाम् ।**
**विद्यामभ्यसनेनेव प्रसादयितुमर्हसि ॥ ८८ ॥**

वने भवं वन्यं कन्दमूलादिकं वृत्तिराहारो यस्य तथाभूतः [ **वन्यवृत्तिः** ] सन् । **इमां गां शश्वत्** सदा । आ प्रसादादविच्छेदेनेत्यर्थः । आत्मनस्तव कर्तुः अनुगमनेनानुसरणेन [ **आत्मानुगमनेन** ] । **अभ्यसनेन** अनुष्ठातुरभ्यासेन **विद्यामिव** । **प्रसादयितुं** प्रसन्नां कर्तुं **अर्हसि** ॥

गवानुसरणप्रकारमाह—

**प्रस्थितायां प्रतिष्ठेथाः स्थितायां स्थितिमाचरेः ।**
**निषण्णायां निषीदास्यां पीताम्भसि पिबेरपः ॥ ८९ ॥**

**अस्यां** नन्दिन्यां **प्रस्थितायां प्रतिष्ठेथाः** प्रयाहि । ' समवप्रविभ्यः स्थः ' इत्यात्मनेपदम् । **स्थितायां** निवृत्तगतिकायां **स्थितिमाचरेः** स्थितिं कुरु । तिष्ठेत्यर्थः । **निषण्णायां** उपविष्टायां **निषीद** उपविश । विध्यर्थे लोट् । पीतमम्भो यया तस्यां **पीताम्भसि** सत्यां **अपः पिबेः** पिब ॥

---

१ कुड्यति जलं होमाग्निं वेति कुण्डं जलाधारः होमाधारो वा पात्रविशेषः । २ सम्यगाराधनेन इ. पा.

**वधूर्भक्तिमती चैनामर्चितामा तपोवनात् ।**
**प्रयता प्रातरन्वेतु सायं प्रत्युद्व्रजेदपि ॥ ९० ॥**

**वधूः** जाया **च** **भक्तिमती प्रयता** सती गन्धादिभिः **अर्चितामेनां** गां **प्रातः आ तपोवनात्** । आङ् मर्यादायाम् । पदद्वयं चैतत् । **अन्वेतु** अनुगच्छतु । **सायं अपि प्रत्युद्व्रजेत्** प्रत्युद्गच्छेत् । विध्यर्थे लिङ् ॥

**इत्याप्रसादादस्यास्त्वं परिचर्यापरो भव ।**
**अविघ्नमस्तु ते स्थेयाः पितेव धुरि पुत्रिणाम् ॥ ९१ ॥**

**इति** अनेन प्रकारेण **त्वमाप्रसादात्** प्रसादपर्यन्तम् । 'आङ् मर्यादाभिविध्योः' इत्यस्य वैभाषिकत्वादसमासत्वम् । **अस्याः** धेनोः **परिचर्यापरः** शुश्रूषापरो **भव** । **ते** तव **अविघ्नं** विघ्नस्याभावो **अस्तु** । 'अव्ययं विभक्ति–' इत्यादिनार्थाभावेऽव्ययीभावः । **पितेव पुत्रिणां** सत्पुत्रवताम् । प्रशंसायामिनिप्रत्ययः । **धुरि** अग्रे **स्थेयाः** तिष्ठेः । आशीरर्थे लिङ् । 'एर्लिङि' इत्याकारस्यैकारादेशः । त्वत्सदृशो भवत्पुत्रोऽस्त्विति भावः ॥

**तथेति प्रतिजग्राह प्रीतिमान्सपरिग्रहः ।**
**आदेशं देशकालज्ञः शिष्यः शासितुरानतः ॥ ९२ ॥**

**देशकालज्ञः** । देशोऽग्निसन्निधिः कालोऽग्निहोत्रावसानसमयः । विशिष्टदेशकालोत्पन्नमार्षं ज्ञानमव्याहतमिति जानन् । अत एव **प्रीतिमान् शिष्यः** अन्तेवासी राजा **सपरिग्रहः** सपत्नीकः । 'पत्नीपरिजनादानमूलशापाः परिग्रहाः' इत्यमरः । **आनतः** विनयनम्रः सन् । **शासितुः** गुरोः **आदेशं** आज्ञां **तथेति प्रतिजग्राह** स्वीचकार ॥

**अथ प्रदोषे दोषज्ञः संवेशाय विशांपतिम् ।**
**सूनुः सूनृतवाक्स्रष्टुर्विससर्जोदितश्रियम् ॥ ९३ ॥**

**अथ प्रदोषे** रात्रौ **दोषज्ञः** विद्वान् । 'विद्वान्विपश्चिद्दोषज्ञः' इत्यमरः । **सूनृतवाक्** सत्यप्रियवाक् । 'प्रियं सत्यं च सूनृतम्' इति हलायुधः । **स्रष्टुः सूनुः** ब्रह्मपुत्रो मुनिः । अनेन प्रकृतकार्यनिर्वाहकत्वं सूचयति । **उदितश्रियं विशांपतिं** मनुजेश्वरम् । 'द्वौ विशौ वैश्यमनुजौ' इत्यमरः । **संवेशाय** निद्रायै । 'स्यान्निद्रा शयनं स्वापः स्वप्नः संवेश इत्यपि' इत्यमरः । **विससर्ज** आज्ञापयामास ॥

**सत्यामपि तपःसिद्धौ नियमापेक्षया मुनिः ।**
**कल्पवित्कल्पयामास वन्यामेवास्य संविधाम् ॥ ९४ ॥**

**कल्पवित्** व्रतप्रयोगाभिज्ञो **मुनिः** । **तपःसिद्धौ सत्यामपि** । तपसैव राजयोग्याहारसंपादनसामर्थ्ये सत्यपीत्यर्थः । **नियमापेक्षया** तदाप्रभृत्येव व्रतचर्यापेक्षया । **अस्य** राज्ञो **वन्यामेव** । संविधीयतेऽनयेति **संविधाम्** । कुशादिशयनसामग्रीम् । 'आतश्चोपसर्गे' इति कप्रत्ययः । 'अकर्तरि च कारके संज्ञायाम्' इति कर्माद्यर्थत्वम् । **कल्पयामास** संपादयामास ॥

---

१ प्रयातां, प्रयतां इ. पा. २ देशकालज्ञत्वेन गोरक्षणप्रवृत्तिकारणत्वं सूच्यते इ० चारित्रवर्धना । ३ ऊर्जितश्रि० इ. पा । ४ प्रारब्धाः प्रकृष्टा वा दोषाः चौर्यादिभयानि यस्मिन् ।

**निर्दिष्टां कुलपतिना स पर्णशाला-**
**मध्यास्य प्रयतपरिग्रहद्वितीयः ।**
**तच्छिष्याध्ययननिवेदितावसानां**
**संविष्टः कुशशयने निशां निनाय ॥ ९५ ॥**

**स** राजा **कुलपतिना** मुनिकुलेश्वरेण वसिष्ठेन **निर्दिष्टां पर्णशालामध्यास्य** अधिष्ठाय । तस्यामधिष्ठानं कृत्वेत्यर्थः । 'अधिशीङ्-' इत्यादिनाधारस्य कर्मत्वम् । कर्मणि द्वितीया । प्रयतो नियतः परिग्रहः पत्नी द्वितीयो यस्येति [ **प्रयतपरिग्रहद्वितीयः** ] स तथोक्तः । कुशानां शयने **कुशशयने संविष्टः** सुप्तः सन् । तस्य वसिष्ठस्य शिष्याणामध्ययनेनापररात्रे वेदपाठेन निवेदितमवसानं यस्यास्तां [ **तच्छिष्याध्ययननिवेदितावसानां** ] **निशां निनाय** गमयामास । अपररात्रेऽध्ययने मनुः—' निशान्ते न परिश्रान्तो ब्रह्माधीत्य पुनः स्वपेत् । ' इति । ' न चापररात्रमधीत्य पुनः स्वपेत् ' इति गौतमश्च । प्रहर्षणीवृत्तमेतत् । तदुक्तम्—' म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षणीयम् ' ॥

इति महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया संजीवनीसमाख्यया व्याख्यया समेतो महाकविश्रीकालिदासकृतौ रघुवंशे महाकाव्ये वसिष्ठाश्रमाभिगमनो नाम प्रथमः सर्गः ।

---

## द्वितीयः सर्गः ।



ॐ आशासु राशीभवदङ्गवल्लीभासैव दासीकृतदुग्धसिन्धुम् ।
मन्दस्मितैर्निन्दितशारदेन्दुं वन्देऽरविन्दासनसुन्दरि त्वाम् ॥

**अथ प्रजानामधिपः प्रभाते जायाप्रतिग्राहितगन्धमाल्याम् ।**
**वनाय पीतप्रतिबद्धवत्सां यशोधनो धेनुमृषेर्मुमोच ॥ १ ॥**

**अथ** निशानयनानन्तरं **यशोधनः प्रजानामधिपः** प्रजेश्वरः **प्रभाते** प्रातःकाले जायया सुदक्षिणया । प्रतिग्राहयित्र्या । प्रतिग्राहिते स्वीकारिते गन्धमाल्ये यया सा जायाप्रतिग्राहितगन्धमाल्या तां तथोक्ताम् [ **जायाप्रतिग्राहितगन्धमाल्याम्** ] । पीतं पानमस्यास्तीति पीतः । पीतवानित्यर्थः । ' अर्शआदिभ्योऽच् ' इत्यच्प्रत्ययः । ' पीता गावो भुक्ता ब्राह्मणाः ' इति महाभाष्ये दर्शनात् । पीतः प्रतिबद्धो वत्सो यस्यास्तां [ **पीतप्रतिबद्धवत्सां** ] **ऋषेर्धेनुं वनाय** वनं गन्तुम् । ' क्रियार्थोपपद-' इत्यादिना चतुर्थी । **मुमोच** मुक्तवान् । जायापदसामर्थ्यात्सुदक्षिणायाः पुत्रजननयोग्यत्वमनुसंधेयम् । तथा हि श्रुतिः—' पतिर्जायां प्रविशति गर्भो भूत्वेह मातरम् । तस्यां पुनर्नवो

---

१ अनैषीत् इ. पा. २ कुलस्य मुनिसमूहस्य पतिः । कुलपतिलक्षणं यथा—मुनीनां दशसाहस्रं योऽन्नदानादिपोषणात् । अध्यापयति विप्रर्षिरसौ कुलपतिः स्मृतः ॥ इति २ हे अरविन्दासनसुन्दरि लक्ष्मि दिक्षु राशीभवन्ती अनवरतं समन्ततः प्रसरणात् संधीभवन्ती या अङ्गवल्या भाः कान्तिः तया एव धावल्यातिशयात् निर्जितः दुग्धसिन्धुः यया ताम् मन्दस्मितैः ईषद्धासैः निन्दितः तिरस्कृतः शारदेन्दुः यया एतादृशीं त्वां वन्दे ।

भूत्वा दशमे मासि जायते। तज्जाया जाया भवति यदस्यां जायते पुनः। ' इति। यशोधन इत्यनेन पुत्रवत्ताकीर्तिलोभाद्राजानर्हे गोरक्षणे प्रवृत्त इति गम्यते। अस्मिन्सर्गे वृत्तमुपजातिः—' अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः। ' इति ॥

**तस्याः खुरन्यासपवित्रपांसुमपांसुलानां धुरि कीर्तनीया।**
**मार्गं मनुष्येश्वरधर्मपत्नी श्रुतेरिवार्थं स्मृतिरन्वगच्छत् ॥ २ ॥**

पांसवो दोषा आसां सन्तीति पांसुलाः स्वैरिण्यः। ' स्वैरिणी पांसुला ' इत्यमरः। ' सिध्मादिभ्यश्च ' इति लच्प्रत्ययः। **अपांसुलानां** पतिव्रतानां **धुरि** अग्रे **कीर्तनीया** परिगणनीया **मनुष्येश्वरधर्मपत्नी**[1]। खुरन्यासैः पवित्राः पांसवो यस्य तं [ **खुरन्यासपवित्रपांसुं** ]। ' रेणुर्द्वयोः स्त्रियां धूलिः पांसुर्ना न द्वयो रजः। ' इत्यमरः। **तस्याः** धेनोः **मार्गम्**। **स्मृतिः** मन्वादिवाक्यं **श्रुतेः** वेदवाक्यस्य **अर्थं** अभिधेयं **इव**। **अन्वगच्छत्** अनुसृतवती च। यथा स्मृतिः श्रुतिक्षुण्णमेवार्थमनुसरति तथा सापि गोखुरक्षुण्णमेव मार्गमनुससारेत्यर्थः। धर्मपत्नीत्यत्राश्वघासादिवत्तादर्थ्ये[2] षष्ठीसमासः प्रकृतिविकाराभावात्। पांसुलपथप्रवृत्तावप्यपांसुलानामिति विरोधालंकारो[3] ध्वन्यते ॥

**निवर्त्य राजा दयितां दयालुस्तां सौरभेयीं सुरभिर्यशोभिः।**
**पयोधरीभूतचतुःसमुद्रां जुगोप गोरूपधरामिवोर्वीम् ॥ ३ ॥**

**दयालुः** कारुणिकः। ' स्याद्दयालुः कारुणिकः ' इत्यमरः। ' स्पृहिगृहि—' इत्यादिनालुच्प्रत्ययः। **यशोभिः सुरभिः** मनोज्ञः। ' सुरभिः स्यान्मनोज्ञेऽपि ' इति विश्वः। **राजा तां दयितां निवर्त्य सौरभेयीं** कामधेनुसुतां नन्दिनीम्। धरन्तीति धराः। पचाद्यच्। पयसां धराः पयोधराः स्तनाः। ' स्त्रीस्तनाब्दौ पयोधरौ ' इत्यमरः। अपयोधराः पयोधराः संपद्यमानाः पयोधरीभूताः। अभूततद्भावे च्विः। ' कुगतिप्रादयः ' इति समासः। पयोधरीभूताश्चत्वारः समुद्रा यस्यास्तां [ **पयोधरीभूतचतुःसमुद्रां** ]। ' अनेकमन्यपदार्थे ' इत्यनेकपदार्थग्रहणसामर्थ्यात्त्रिपदो बहुव्रीहिः। **गोरूपधरामुर्वीमिव जुगोप** ररक्ष। भूरक्षणप्रयत्नेनेव ररक्षेति भावः। धेनुपक्षे पयसा दुग्धेनाधरीभूताश्चत्वारः समुद्रा यस्याः सा तथोक्ताम्। दुग्धतिरस्कृतसागरामित्यर्थः ॥

**व्रताय तेनानुचरेण धेनोर्न्यषेधि शेषोऽप्यनुयायिवर्गः।**
**न चान्यतस्तस्य शरीररक्षा स्ववीर्यगुप्ता हि मनोः प्रसूतिः ॥ ४ ॥**

**व्रताय धेनोरनुचरेण**। न तु जीवनायेति भावः। **तेन** दिलीपेन **शेषः** अवशिष्टः **अप्यनुयायिवर्गः** अनुचरवर्गो **न्यषेधि** निवर्तितः। शेषत्वं सुदक्षिणापेक्षया। कथं तर्ह्यात्मरक्षणमत आह—न चेति। **तस्य** दिलीपस्य **शरीररक्षा चान्यतः** पुरुषान्तरात् **न**। कुतः। **हि** यस्मात्कारणात् **मनोः**। प्रसूयत इति प्रसूतिः संततिः **स्ववीर्यगुप्ता** स्ववीर्येणैव रक्षिता। न हि स्वनिर्वाहकस्य परापेक्षेति भावः ॥

---

१ पतिं धर्मरतं पत्नी साध्वी सुश्रूषते तु या। नित्यं त्वनन्यहृदया धर्मपत्नीं तु तां विदुः ॥ २ धर्माय पत्नी इति वक्तव्येऽपि धर्मस्य पत्नी इति तादर्थ्ये षष्ठीसमासः अश्वस्य घास इतिवत्। ३ पांसुलमार्गमनुसरन्ती अपि कथं पांसुस्पर्शरहितानां धुरि कीर्तनीया इति आपाततः ( न तु अर्थावबोधानन्तरं ) विरोधः। तेनात्र विरोधाभासः अलंकारः।

**आस्वादवद्भिः कवलैस्तृणानां कण्डूयनैर्दंशनिवारणैश्च ।**
**अव्याहतैः स्वैरगतैः स तस्याः सम्राट् समाराधनतत्परोऽभूत् ॥ ५ ॥**

**सम्राड्** मण्डलेश्वरः । 'येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः । शास्ति यश्चाज्ञया राज्ञः स सम्राट्' इत्यमरः । **स** राजा । **आस्वादवद्भिः** रसवद्भिः । स्वादयुक्तैरित्यर्थः । **तृणानां कवलैः** ग्रासैः । 'ग्रासस्तु कवलार्थकः' इत्यमरः । **कण्डूयनैः** खर्जनैः । दंशानां वनमक्षिकाणां निवारणैः [ **दंशनिवारणैः** ] । 'दंशस्तु वनमक्षिका' इत्यमरः । **अव्याहतैः** अप्रतिहतैः **स्वैरगतैः** स्वच्छन्दगमनैश्च । **तस्याः** धेन्वाः **समाराधनतत्परः** शुश्रूषासक्तः **अभूत्** । तदेव परं प्रधानं यस्येति **तत्परः** । 'तत्परौ प्रसितासक्तौ' इत्यमरः ॥

**स्थितः स्थितामुच्चलितः प्रयातां निषेदुषीमासनबन्धधीरः ।**
**जलाभिलाषी जलमाददानां छायेव तां भूपतिरन्वगच्छत् ॥ ६ ॥**

**भूपतिस्तां** गां **स्थितां** सतीं **स्थितः** सन् । स्थितिरूर्ध्वावस्थानम् । **प्रयातां** प्रस्थितां **उच्चलितः** प्रस्थितः । **निषेदुषीं** निषण्णाम् । उपविष्टामित्यर्थः । 'भाषायां सदवसश्रुवः' इति क्वसुप्रत्ययः । 'उगितश्च' इति ङीप् । आसनबन्ध उपवेशने धीरः स्थितः [ **आसनबन्धधीरः** ] । उपविष्टः सन्नित्यर्थः । **जलमाददानां** पिबन्तीं **जलाभिलाषी** । पिबन्नित्यर्थः । इत्थं **छायेवान्वगच्छत्** अनुसृतवान् ॥

**स न्यस्तचिह्नामपि राजलक्ष्मीं तेजोविशेषानुमितां दधानः ।**
**आसीदनाविष्कृतदानराजिरन्तर्मदावस्थ इव द्विपेन्द्रः ॥ ७ ॥**

न्यस्तानि परिहृतानि चिह्नानि छत्रचामरादीनि यस्यास्तां तथाभूतां [ **न्यस्तचिह्नामपि** ] तेजोविशेषेण प्रभावातिशयेनानुमितां [ **तेजोविशेषानुमितां** ] सर्वथा राजैवायं भवेदित्यूहितां **राजलक्ष्मीं दधानः स** राजा । **अनाविष्कृतदानराजिः** । बहिरप्रकटितमदरेखः । अन्तर्गता मदावस्था यस्य सः **अन्तर्मदावस्थः** । तथाभूतो **द्विपेन्द्र इव आसीत्** ॥

**लताप्रतानोद्ग्रथितैः स केशैरधिज्यधन्वा विचचार दावम् ।**
**रक्षापदेशान्मुनिहोमधेनोर्वन्यान्विनेष्यन्निव दुष्टसत्त्वान् ॥ ८ ॥**

लतानां वल्लीनां प्रतानैः कुटिलतन्तुभिरुद्ग्रथिता उन्नमय्य ग्रथिता ये केशास्तैः [ **लताप्रतानोद्ग्रथितैः केशैः** ] उपलक्षितः । 'इत्थंभूतलक्षणे' इति तृतीया । स राजा । अधिज्यमारोपितमौर्वीकं धनुर्यस्य सः **अधिज्यधन्वा** सन् । 'धनुषश्च' इत्यनङादेशः । **मुनिहोमधेनोः रक्षापदेशात्** रक्षणव्याजात् । **वन्यान्** वने भवान् **दुष्टसत्त्वान्** दुष्टजन्तून् । 'द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु ।' इत्यमरः । **विनेष्यन्** शिक्षयिष्यन् **इव** । **दावं** वनम् । 'वने च वनवह्नौ च दवो दाव इहेष्यते ।' इति यादवः । **विचचार** वने चचारेत्यर्थः । 'देशकालाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम् ।' इति दावस्य कर्मत्वम् ॥

---

१ अव्याहतस्वैरगतैः इति वल्लभचारित्रवर्धनौ पठतः । २ 'छाया इति भूपतेरुपमानं न भिन्नलिङ्गत्वदोषदुष्टम् । 'न लिङ्गवचने भिन्ने न हीनाधिकतापि वा ।' इति दण्डिवचनात् । ३ अत्रान्तर्मदत्वाद्भद्रजातीयो गज इष्टः । तदाह वल्लभः–'भद्रो मन्दो मृगश्चेति सङ्कीर्णश्चेति जातयः । चतस्रः करिणां तासां भद्रोऽन्तर्मद एव यः ॥' इति । ४ अत्र क्रियोत्प्रेक्षा ।

'विसृष्ट–' इत्यादिभिः षड्भिः श्लोकैस्तस्य महामहिमतया द्रुमादयोऽपि राजोपचारं चक्रुरित्याह—

**विसृष्टपार्श्वानुचरस्य तस्य पार्श्वद्रुमाः पाशभृता समस्य ।**
**उदीरयामासुरिवोन्मदानामालोकशब्दं वयसां विरावैः ॥ ९ ॥**

विसृष्टाः पार्श्वानुचराः पार्श्ववर्तिनो जना येन तस्य [ **विसृष्टपार्श्वानुचरस्य** ]। **पाशभृता** वरुणेन **समस्य** तुल्यस्य । 'प्रचेता वरुणः पाशी' इत्यमरः । अनुभावोऽनेन सूचितः । **तस्य** राज्ञः पार्श्वयोर्द्रुमाः [ **पार्श्वद्रुमाः** ] । **उन्मदानां** उत्कटमदानां **वयसां** खगानाम् । 'खगबाल्यादिनोर्वयः' इत्यमरः । **विरावैः** शब्दैः । आलोकस्य शब्दं वाचकमालोकयेति शब्दम् [ **आलोकशब्दम्** ] । जयशब्दमित्यर्थः । 'आलोको जयशब्दः स्यात्' इति विश्वः । **उदीरयामासुरिव** अवदन्निव । इत्युत्प्रेक्षा ॥

**मरुत्प्रयुक्ताश्च मरुत्सखाभं तमर्च्यमारादभिवर्तमानम् ।**
**अवाकिरन्बाललताः प्रसूनैराचारलाजैरिव पौरकन्याः ॥ १० ॥**

**मरुत्प्रयुक्ताः** वायुना प्रेरिता **बाललताः आरात्** समीपे **अभिवर्तमानम्** । 'आराद्दूरसमीपयोः' इत्यमरः । मरुतो वायोः सखा मरुत्सखोऽग्निः । स इवाभातीति तं **मरुत्सखाभम्** । 'आतश्चोपसर्गे' इति कप्रत्ययः । **अर्च्यं** पूज्यं **तं** दिलीपं **प्रसूनैः** पुष्पैः । **पौरकन्याः** पौराश्च ताः कन्या आचारार्थैर्लाजैः **आचारलाजैरिव** । **अवाकिरन्** । तस्योपरि निक्षिप्तवत्य इत्यर्थः । सखा हि सखायमागतमुपचरतीति भावः ॥

**धनुर्भृतोऽप्यस्य दयार्द्रभावमाख्यातमन्तःकरणैर्विशङ्कैः ।**
**विलोकयन्त्यो वपुरापुरक्ष्णां प्रकामविस्तारफलं हरिण्यः ॥ ११ ॥**

**धनुर्भृतोऽप्यस्य** राज्ञः । एतेन भयसंभावना दर्शिता । तथापि **विशङ्कैः** निर्भीकैः **अन्तःकरणैः** । कर्तृभिः । दयया कृपारसेनार्द्रो भावोऽभिप्रायो यस्य तत् **दयार्द्रभावं** तत् **आख्यातम्** । दयार्द्रभावमेतदित्याख्यातमित्यर्थः । 'भावः सत्त्वस्वभावाभिप्रायचेष्टात्मजन्मसु ।' इत्यमरः । तथाविधं **वपुर्विलोकयन्त्यः हरिण्यः अक्ष्णां** प्रकामविस्तारस्य अत्यन्तविशालतायाः फलं [ **प्रकामविस्तारफलम्** ] **आपुः** । 'विमलं कलुषी भवच्च चेतः कथयत्येव हितैषिणं रिपुं च ।' इति न्यायेन स्वान्तःकरणप्रसत्तिमाण्यादेव विश्रब्धं ददृशुरित्यर्थः ॥

**स कीचकैर्मारुतपूर्णरन्ध्रैः कूजद्भिरापादितवंशकृत्यम् ।**
**शुश्राव कुञ्जेषु यशः स्वमुच्चैरुद्गीयमानं वनदेवताभिः ॥ १२ ॥**

**स** दिलीपो **मारुतपूर्णरन्ध्रैः** । अत एव **कूजद्भिः** स्वनद्भिः । **कीचकैः** वेणुविशेषैः । 'वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः ।' इत्यमरः । वंशः सुषिरवाद्यविशेषः । 'वंशादिकं तु सुषिरम्' इत्यमरः । आपादितं संपादितं वंशस्य कृत्यं कार्यं

---

१ 'आलोकस्य दर्शनस्य शब्दः आलोकशब्दस्तम् । जय जीवेत्याद्यालोकशब्दः । जय जय महाराज प्रभो स्वामिन् पादमवधार्यतामित्यालोकशब्दः' । इति वल्लभः । २ बाललतानां प्रफुल्लत्वादल्पावयवत्वाच्च प्रफुल्लवदनश्रीभिः स्वल्पवयस्काभिः पौरकन्याभिः साम्यम् । पुष्पाणां लाजानां च शुभ्रत्वान्माङ्गलिकत्वाच्चान्योन्यसादृश्यम् । लाजवर्षो वयोवृद्धाभिरपि क्रियते । च. स. श्लो. २७ द्रष्टव्यः ।

यस्मिन्कर्मणि तत्तथा [ **आपादितवंशकृत्यम्** ]। **कुञ्जेषु** लतागृहेषु । 'निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे ।' इत्यमरः । **वनदेवताभिःउद्गीयमानं** उच्चैर्गीयमानं **स्वं यशः शुश्राव** श्रुतवान् ॥

**पृक्तस्तुषारैर्गिरिनिर्झराणामनोकहाकम्पितपुष्पगन्धी ।**
**तमातपक्लान्तमनातपत्रमाचारपूतं पवनः सिषेवे ॥ १३ ॥**

गिरिषु निर्झराणां [ **गिरिनिर्झराणां** ] वारिप्रवाहाणाम् । 'वारिप्रवाहो निर्झरो झरः' इत्यमरः । **तुषारैः** सीकरैः । 'तुषारौ हिमसीकरौ' इति शाश्वतः । **पृक्तः** संपृक्तः । [ **अनोकहाकम्पितपुष्पगन्धी** ] अनोकहानां वृक्षाणामाकम्पितानीषत्कम्पितानि पुष्पाणि तेषां यो गन्धः सोऽस्यास्तीत्याकम्पितपुष्पगन्धी । ईषत्कम्पितपुष्पगन्धवान् । एवं शीतो मन्दः सुरभिः **पवनः** वायुः **अनातपत्रं** त्रतार्थं परिहृतच्छत्रम् । अत एव **आतपक्लान्तं** आचारेण पूतं **आचारपूतं** शुद्धं **तं** नृपं **सिषेवे** । आचारपूतत्वात्स राजा जगत्पावनस्यापि सेव्य आसीदिति भावः ॥

**शशाम वृष्ट्यापि विना दवाग्निरासीद्विशेषा फलपुष्पवृद्धिः ।**
**ऊनं न सत्त्वेष्वधिको बबाधे तस्मिन्वनं गोप्तरि गाहमाने ॥ १४ ॥**

**गोप्तरि तस्मिन्** राज्ञि **वनं गाहमाने** प्रविशति सति **वृष्ट्या विनापि । दवाग्निः** वनाग्निः । 'दवदावौ वनानले' इति हैमः । **शशाम** । फलानां पुष्पाणां च वृद्धिः [ **फलपुष्पवृद्धिः** ] विशेष्यत इति **विशेषा** अतिशयिता **आसीत्** । कर्मार्थे घञ्प्रत्ययः । **सत्त्वेषु** जन्तुषु मध्ये । 'यतश्च निर्धारणम्' इति सप्तमी । **अधिकः** प्रबलो व्याघ्रादिः **ऊनं** दुर्बलं हरिणादिकं **न बबाधे** ॥

**संचारपूतानि दिगन्तराणि कृत्वा दिनान्ते निलयाय गन्तुम् ।**
**प्रचक्रमे पल्लवरागताम्रा प्रभा पतङ्गस्य मुनेश्च धेनुः ॥ १५ ॥**

पल्लवस्य रागो वर्णः पल्लवरागः । 'रागोऽनुरक्तौ मात्सर्ये क्लेशादौ लोहितादिषु ।' इति शाश्वतः । स इव ताम्रा **पल्लवरागताम्रा पतङ्गस्य** सूर्यस्य **प्रभा** कान्तिः । 'पतङ्गः पक्षिसूर्ययोः' इति शाश्वतः । **मुनेर्धेनुश्च । दिगन्तराणि** दिशामवकाशान् । 'अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये ।' इत्यमरः । संचारेण पूतानि शुद्धानि [ **संचारपूतानि** ] **कृत्वा दिनान्ते** सायंकाले **निलयाय** अस्तमयाय । धेनुपक्ष आलयाय च गन्तुं **प्रचक्रमे** ॥

---

१ गान्धारग्रामेण गीयमानमित्यर्थः । तदुक्तं नारदेन—षड्जमध्यमनामानौ ग्रामौ गायन्ति मानवाः । न तु गान्धारनामानं स लभ्यो देवयोनिभिः ॥ इति । अनुरञ्जकवायं विना गीतं न मनोरममित्युक्तमापादितवंशकृत्यमिति । अत्र भरतः—गाता यं यं स्वरं गच्छेत्तं तं वंशेन तानयेत् इति । अनुरूपश्लोकः कुमारसंभवे—यः पूरयन्कीचकरन्ध्रभागान्दरीमुखोत्थेन समीरणेन । उद्गास्यतामिच्छति किन्नराणां तानप्रदायित्वमिवोपगन्तुम् ॥ इति । २ अनसः शकटस्य गतिं हन्ति इति अनोकहः । 'वृक्षादयोपि राजोपचारं चक्रुः' इति चारित्रवर्धनः । वायोरनुरूपं वर्णनं कुमारसंभवे—भागीरथीनिर्झरशीकराणां वोढा मुहुः कम्पितदेवदारुः । यद्वायुरन्विष्टमृगैः किरातैरासेव्यते भिन्नशिखण्डिबर्हः ॥ इति । ३ 'गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि' इति चतुर्थी ।

**तां देवतापित्रतिथिक्रियार्थामन्वग्ययौ मध्यमलोकपालः ।**
**बभौ च सा तेन सतां मतेन श्रद्धेव साक्षाद्विधिनोपपन्ना ॥ १६ ॥**

**मध्यमलोकपालः** भूपालः । देवतापित्रतिथीनां क्रिया यागश्राद्धदानानि ता एवार्थः प्रयोजनं यस्याः तां [ **देवतापित्रतिथिक्रियार्थाम्** ] धेनुं **अन्वग्** अनुपदं **ययौ** । 'अन्वगन्वक्षमनुगेऽनुपदं क्लीबमव्ययम् ।' इत्यमरः । **सतां मतेन** सद्भिर्मान्येन । 'गतिबुद्धि–' इत्यादिना वर्तमाने क्तः । 'क्तस्य च वर्तमाने' इति षष्ठी । **तेन** राज्ञा **उपपन्ना** युक्ता **सा** धेनुः । सतां मतेन **विधिना** अनुष्ठानेनोपपन्ना **साक्षात्** प्रत्यक्षा **श्रद्धा** आस्तिक्यबुद्धिः **इव बभौ च** ॥

**स पल्वलोत्तीर्णवराहयूथान्यावासवृक्षोन्मुखबर्हिणानि ।**
**ययौ मृगाध्यासितशाद्वलानि श्यामायमानानि वनानि पश्यन् ॥१७॥**

**स** राजा । पल्वलेभ्योऽल्पजलाशयेभ्य उत्तीर्णानि निर्गतानि वराहाणां यूथानि कुलानि येषु तानि [ **पल्वलोत्तीर्णवराहयूथानि** ] । बर्हाण्येषां सन्तीति बर्हिणा मयूराः । 'मयूरो बर्हिणो बर्ही' इत्यमरः । फलबर्हाभ्यामिनच्प्रत्ययो वक्तव्यः । आवासवृक्षाणामुन्मुखा बर्हिणा येषु तानि [ **आवासवृक्षोन्मुखबर्हिणानि** ] । श्यामायमानानि वराहबर्हिणादिमलिनिम्ना अश्यामानि श्यामानि भवन्तीति **श्यामायमानानि** । 'लोहितादिडाज्भ्यः क्यष्' इति क्यष्प्रत्ययः । 'वा क्यषः' इत्यात्मनेपदे शानच् । मृगैरध्यासिता अधिष्ठिताः शाद्वला येषु तानि **मृगाध्यासितशाद्वलानि** । शादाः शष्पाण्येषु देशेषु सन्तीति शाद्वलाः शष्पश्यामदेशाः । 'शाद्वलः शादहरिते' इत्यमरः । 'शादः कर्दमशष्पयोः' इति विश्वः । 'नडशादाड्ड्वलच्' इति ड्वलच्प्रत्ययः । **वनानि पश्यन्ययौ** ॥

**आपीनभारोद्वहनप्रयत्नाद्गृष्टिर्गुरुत्वाद्वपुषो नरेन्द्रः ।**
**उभावलंचक्रतुरञ्चिताभ्यां तपोवनावृत्तिपथं गताभ्याम् ॥१८॥**

**गृष्टिः** सकृत्प्रसूता गौः । 'गृष्टिः सकृत्प्रसूता गौः' इति हलायुधः । **नरेन्द्रः** च **उभौ** यथाक्रमम् । आपीनमूधः । 'ऊधस्तु क्लीबमापीनम्' इत्यमरः । आपीनस्य भारोद्वहने प्रयत्नात्प्रयासात् [ **आपीनभारोद्वहनप्रयत्नात्** ] । **वपुषो गुरुत्वाद्** आधिक्याच्च । **अञ्चिताभ्यां** चारुभ्यां **गताभ्यां** गमनाभ्यां तपोवनादावृत्तेः पन्थास्तं **तपोवनावृत्तिपथम्** । 'ऋक्पूः–' इत्यादिना समासान्तोऽप्रत्ययः । **अलंचक्रतुः** भूषितवन्तौ ॥

**वसिष्ठधेनोरनुयायिनं तमावर्तमानं वनिता वनान्तात् ।**
**पपौ निमेषालसपक्ष्मपङ्क्तिरुपोषिताभ्यामिव लोचनाभ्याम् ॥ १९**

---

१ तदुक्तं याज्ञवल्क्येन—श्रद्धाविधिसमायुक्तं कर्म यत्क्रियते नृभिः । सुविशुद्धेन भावेन तदानन्त्याय कल्पते । विधिहीनं भवेद्दुष्टं कृतमश्रद्धया च यत् । तद्धरन्त्यसुरास्तस्य मूढस्य दुष्क्रियात्मनः ॥ इति । २ सन्ध्यारागस्य पाटलिम्ना किंचिद्धूसरालोकानि वनानि वराहादीनां नीलिम्ना श्यामीभूतानीति सुष्ठूक्तमेव टीकाकृता । अत्र नैशतमसावृतत्वाद्वनानां श्यामत्वमिति केचिन्मन्यन्ते तन्न साधु । धेनोः सन्ध्यावसानात्प्रागेवारण्यान्निवृत्तेः । कविवर्णनात्तथा चमत्कृतेरभावाच्च । ३ आपीनस्य विशालत्वमुक्तमेव प्राक् 'पयोधरीभूतचतुःसमुद्राम्' 'भुवं कोष्णेन कुण्डोध्नी' इत्यादिना । राज्ञो वपुषो गुरुत्वं चोक्तं 'व्यूढोरस्को वृषस्कन्धः' इत्यत्र ।

**वसिष्ठधेनोरनुयायिनं** अनुचरं **वनान्तादावर्तमानं** प्रत्यागतं **तं** दिलीपं **वनिता** सुदक्षिणा निमेषेष्वलसा मन्दा पक्ष्मणां पङ्क्तिर्यस्याः सा [ **निमेषालसपक्ष्मपङ्क्तिः** ] निर्निमेषा सतीत्यर्थः । **लोचनाभ्याम्** । करणाभ्याम् । **उपोषिताभ्यामिव** । उपवासो भोजननिवृत्तिः । तद्वद्भ्यामिव । वसतेः कर्तरि क्तः । **पपौ** । यथोपोषितोऽतितृष्णया जलमधिकं पिबति तद्वदतितृष्णयाधिकं व्यलोकयदित्यर्थः ॥

**पुरस्कृता वर्त्मनि पार्थिवेन प्रत्युद्गता पार्थिवधर्मपत्न्या ।**
**तदन्तरे सा विरराज धेनुर्दिनक्षपामध्यगतेव संध्या ॥ २० ॥**

**वर्त्मनि पार्थिवेन** पृथिव्या ईश्वरेण । 'तस्येश्वरः' इत्यञ्प्रत्ययः । **पुरस्कृता** अग्रतः कृता । धर्मस्य पत्नी । धर्मार्थपत्नीत्यर्थः । अश्वघासादिवत्तादर्थ्ये षष्ठीसमासः । पार्थिवस्य धर्मपत्न्या [ **पार्थिवधर्मपत्न्या** ] **प्रत्युद्गता सा धेनुस्तदन्तरे** तयोर्दंपत्योर्मध्ये । दिनक्षपयोर्दिनरात्र्योर्मध्यगता [ **दिनक्षपामध्यगता** ] **संध्या इव विरराज** ॥

**प्रदक्षिणीकृत्य पयस्विनीं तां सुदक्षिणा साक्षतपात्रहस्ता ।**
**प्रणम्य चानर्च विशालमस्याः शृङ्गान्तरं द्वारमिवार्थसिद्धेः ॥ २१ ॥**

अक्षतानां पात्रेण सह वर्तेते इति साक्षतपात्रौ हस्तौ यस्याः सा [ **साक्षतपात्रहस्ता** ] **सुदक्षिणा पयस्विनीं** प्रशस्तक्षीरां **तां** धेनुं **प्रदक्षिणीकृत्य प्रणम्य च अस्या** धेन्वाः **विशालं शृङ्गान्तरं** शृङ्गमध्यम् । **अर्थसिद्धेः** कार्यसिद्धेः **द्वारं** प्रवेशमार्गम् **इव** । **आनर्च** अर्चयामास । अर्चतेर्भौवादिकाल्लिट् ॥

**वत्सोत्सुकापि स्तिमिता सपर्यां प्रत्यग्रहीत्सेति ननन्दतुस्तौ ।**
**भक्त्योपपन्नेषु हि तद्विधानां प्रसादचिह्नानि पुरःफलानि ॥ २२ ॥**

**सा धेनुः वत्सोत्सुकापि** वत्से उत्कंठितापि **स्तिमिता** निश्चला सती **सपर्यां** पूजां **प्रत्यग्रहीदिति** हेतोः **तौ** दंपती **ननन्दतुः** । पूजास्वीकारस्यानन्दहेतुत्वमाह–भक्त्येति । पूज्येष्वनुरागो भक्तिः । तयोपपन्नेषु युक्तेषु [ **भक्त्योपपन्नेषु** ] विषये **तद्विधानाम्** । तस्या धेन्वा विधेव विधा प्रकारो येषां तेषाम् । महतामित्यर्थः । प्रसादस्य चिह्नानि लिङ्गानि [ **प्रसादचिह्नानि** ] पूजास्वीकारादीनि **पुरःफलानि** । पुरोगतानि प्रत्यासन्नानि फलानि येषां तानि **हि** । अविलम्बितफलसूचकलिङ्गदर्शनादानन्दो युज्यत इत्यर्थः ।

**गुरोः सदारस्य निपीड्य पादौ समाप्य सान्ध्यं च विधिं दिलीपः ।**
**दोहावसाने पुनरेव दोग्ध्रीं भेजे भुजोच्छिन्नरिपुर्निषण्णाम् ॥ २३ ॥**

**भुजोच्छिन्नरिपुर्दिलीपः सदारस्य** दारैररुन्धत्या सह वर्तमानस्य **गुरोः** उभयोरपीत्यर्थः । 'भार्या जायाथ पुंभूम्नि दाराः' इत्यमरः । **पादौ निपीड्य** अभिवन्द्य

१ अतितृष्णया सादरं ददर्श । सतृष्णमालोकनं पानमुच्यते । उत्प्रेक्षालंकारः । २ लोहितत्वाद्धेतोः सन्ध्यासाम्यम् । क्षपात्र चन्द्रालोकरमणीया ग्राह्या । दिनक्षपासाम्याद्राज्ञः प्रभावजतेजसोज्ज्वलत्वं राज्या अतिस्निग्धमधुरत्वं ध्वनितम् । 'समासे लिङ्गभेदाप्रतातेर्दिनशब्दस्य नोपमादोषः । यदाह–'इष्टः पुन्नपुंसकयोः प्रायेण' । इति चा०. ३ आत्मसिद्धेः इ. दिनकरः पठति । ४ 'प्रसितोत्सुकाभ्यां तृतीया च' इति सप्तमी तृतीया च स्यात् ।

**सान्ध्यं** संध्यायां विहितं **विधिं** अनुष्ठानं **च समाप्य** । **दोहावसाने निषण्णां** आसीनां **दोग्ध्रीं** दोहनशीलाम् । 'तृन्' इति तृन्प्रत्ययः । **धेनुमेव भेजे पुनः** सेवितवान् । दोग्ध्रीमिति निरुपपदप्रयोगात्कामधेनुत्वं गम्यते ।

**तामन्तिकन्यस्तबलिप्रदीपामन्वास्य गोप्ता गृहिणीसहायः ।**
**क्रमेण सुप्तामनु संविवेश सुप्तोत्थितां प्रातरनूदतिष्ठत् ॥ २४ ॥**

**गोप्ता** रक्षको **गृहिणीसहायः** पत्नीद्वितीयः सन् । उभावपीत्यर्थः । [ **अन्तिकन्यस्तबलिप्रदीपाम्** ] अन्तिके न्यस्ता बलयः प्रदीपाश्च यस्यास्तां तथोक्तां । **तां** पूर्वोक्तां निषण्णां धेनुम् **अन्वास्य** अनूपविश्य **क्रमेण सुप्तामनु** अनन्तरं **संविवेश** सुष्वाप । **प्रातः सुप्तोत्थितामनूदतिष्ठद्** उत्थितवान् । अत्रानुशब्देन धेनुराजव्यापारयोः पौर्वापर्यमुच्यते । क्रमशब्देन धेनुव्यापाराणामेव । इत्यपौनरुक्त्यम् । 'कर्मप्रवचनीययुक्ते–' इति द्वितीया ॥

**इत्थं व्रतं धारयतः प्रजार्थं समं महिष्या महनीयकीर्तेः ।**
**सप्त व्यतीयुस्त्रिगुणानि तस्य दिनानि दीनोद्धरणोचितस्य ॥ २५ ॥**

**इत्थम्** अनेन प्रकारेण **प्रजार्थं** संतानाय **महिष्या समम्** अभिषिक्तपत्न्या सह । 'कृताभिषेका महिषी' इत्यमरः । **व्रतं धारयतः** । महनीया पूज्या कीर्तिर्यस्य तस्य । [ **महनीयकीर्तेः** ] दीनानामुद्धरणं दैन्यविमोचनम् । तत्रोचितस्य परिचितस्य [ **दीनोद्धरणोचितस्य** ] **तस्य** नृपस्य । त्रयो गुणा आवृत्तयो येषां तानि **त्रिगुणानि** त्रिरावृत्तानि **सप्त दिनानि** एकविंशतिर्दिनानि **व्यतीयुः** ॥

**अन्येद्युरात्मानुचरस्य भावं जिज्ञासमाना मुनिहोमधेनुः ।**
**गङ्गाप्रपातान्तविरूढशष्पं गौरीगुरोर्गह्वरमाविवेश ॥ २६ ॥**

**अन्येद्युः** अन्यस्मिन्दिने द्वाविंशे दिने । 'सद्यः परुत्परारि–' इत्यादिना निपातनादव्ययम् । 'अथात्राह्नाय पूर्वेऽह्नात्यादौ पूर्वोत्तरापरात् । तथाधरान्यान्यतरेतरात्पूर्वेद्युरादयः'॥ इत्यमरः । **मुनिहोमधेनुः** । **आत्मानुचरस्य भावम्** अभिप्रायं दृढभक्तित्वम् । 'भावोऽभिप्राय आशयः' इति यादवः । **जिज्ञासमाना** ज्ञातुमिच्छन्ती । 'ज्ञाश्रुस्मृदृशां सनः' इत्यात्मनेपदे शानच् । प्रपतत्यस्मिन्निति प्रपातः पतनप्रदेशः' गङ्गायाः प्रपातस्तस्यान्ते समीपे विरूढानि जातानि शष्पाणि बालतृणानि यस्मिंस्तत् [ **गङ्गाप्रपातान्तविरूढशष्पम्** ]। 'शष्पं बालतृणं घासः' इत्यमरः । **गौरीगुरोः** पार्वतीपितुः **गह्वरं** गुहाम् **आविवेश** ॥

**सा दुष्प्रधर्षा मनसापि हिंस्रैरित्यद्रिशोभाप्रहितेक्षणेन ।**
**अलक्षिताभ्युत्पतनो नृपेण प्रसह्य सिंहः किल तां चकर्ष ॥ २७ ॥**

**सा** धेनुः **हिंस्रैः** व्याघ्रादिभिः **मनसापि दुष्प्रधर्षा** दुर्धर्षा **इति** हेतोरद्रिशोभायां प्रहितेक्षणेन, दत्तदृष्टिना [ **अद्रिशोभाप्रहितेक्षणेन** ] **नृपेण** अलक्षितम-

१ सन्नन्तस्य ज्ञाधातोरात्मनेपदित्वात् शानच् । गौरीगुरोर्हिमाचलस्य । २ दुःखेन प्रधार्यते इति दुष्प्रधर्षा । कर्मणि खल् । सिंहः–हिनस्ति मारयतीति पृषोदरादित्वात्सिद्धम् । हिंसेर्वर्णविपर्ययः । तदुक्तं–'सिंहो वर्णविपर्ययात्' । किल–अलीकार्थेन किलशब्देन सिंहाक्रमणं मायामात्रमिति सूचितम् ।

-भ्युत्पतनमाभिमुख्येनोत्पतनं यस्य स [ अलक्षिताभ्युत्पतनः ] सिंहस्तां धेनुं **प्रसह्य** हठात् । ' प्रसह्य तु हठार्थकम् ' इत्यमरः । **चकर्ष** । **किल** इत्यलीके ॥

**तदीयमाक्रन्दितमार्तसाधोर्गुहानिबद्धप्रतिशब्ददीर्घम् ।**
**रश्मिष्विवादाय नगेन्द्रसक्तां निवर्तयामास नृपस्य दृष्टिम् ॥ २८ ॥**

गुहानिबद्धेन प्रतिशब्देन प्रतिध्वनिना दीर्घम् [ **गुहानिबद्धप्रतिशब्ददीर्घम्** ] तस्या इदं **तदीयम्** । **आक्रन्दितम्** आर्तघोषणम् । आर्तेष्वापन्नेषु साधोर्हितकारिणः [ **आर्तसाधोः** ] **नृपस्य नगेन्द्रसक्तां दृष्टिम्** । **रश्मिषु** प्रग्रहेषु । ' किरणप्रग्रहौ रश्मी ' इत्यमरः । **आदाय इव** गृहीत्वेव । **निवर्तयामास** ॥

**स पाटलायां गवि तस्थिवांसं धनुर्धरः केसरिणं ददर्श ।**
**अधित्यकायामिव धातुमय्यां लोध्रद्रुमं सानुमतः प्रफुल्लम् ॥ २९ ॥**

**धनुर्धरः स** नृप **पाटलायां** रक्तवर्णायां **गवि तस्थिवांसं** स्थितम् । ' क्वसुश्च ' इति क्वसुप्रत्ययः । **केसरिणं** सिंहम् । **सानुमतः** अद्रेः धातोर्गैरिकस्य विकारो धातुमयी । तस्याम् [ **धातुमय्यां** ] **अधित्यकायां** ऊर्ध्वभूमौ । ' उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका । ' इत्यमरः । ' उपाधिभ्यां त्यकन्नासन्नारूढयोः ' इति त्यकन्प्रत्ययः । प्रफुल्लो विकसितस्तम् [ **प्रफुल्लम्** ] । ' फुल्ल विकसने ' इति धातोः पचाद्यच् । ' प्रफुल्तम् ' इति तकारपाठे ' ञिफला विशरणे ' इति धातोः कर्तरि क्तः । ' उत्परस्यातः ' इत्युकारादेशः । लोध्राख्यं द्रुमम् [ **लोध्रद्रुमम्** ] **इव** । **ददर्श** ॥

**ततो मृगेन्द्रस्य मृगेन्द्रगामी वधाय वध्यस्य शरं शरण्यः ।**
**जाताभिषङ्गो नृपतिर्निषङ्गादुद्धर्तुमैच्छत्प्रसभोद्धृतारिः ॥ ३० ॥**

**ततः** सिंहदर्शनान्तरं **मृगेन्द्रगामी** सिंहगामी । शरणं रक्षणम् । ' शरणं गृहरक्षित्रोः ' इत्यमरः । ' शरणं रक्षणे गृहे ' इति यादवः । शरणे साधुः **शरण्यः** । ' तत्र साधुः ' इति यत्प्रत्ययः । प्रसभेन बलात्कारेणोद्धृता अरयो येन स [ **प्रसभोद्धृतारिः** ] **नृपतिः** राजा **जाताभिषङ्गः** जातपराभवः सन् । ' अभिषङ्गः पराभवः ' इत्यमरः । **वध्यस्य** वधार्हस्य । ' दण्डादिभ्यो यः ' इति यप्रत्ययः । **मृगेन्द्रस्य वधाय निषङ्गात्** तूणीरात् । ' तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः । ' इत्यमरः । **शरमुद्धर्तुमैच्छत्** ॥

**वामेतरस्तस्य करः प्रहर्तुर्नखप्रभाभूषितकङ्कपत्रे ।**
**सक्ताङ्गुलिः सायकपुङ्ख एव चित्रार्पितारम्भ इवावतस्थे ॥ ३१ ॥**

**प्रहर्तुस्तस्य वामेतरः** दक्षिणः **करः** । नखप्रभाभिर्भूषितानि विच्छुरितानि कङ्कस्य पक्षिविशेषस्य पत्राणि यस्य तस्मिन् [ **नखप्रभाभूषितकङ्कपत्रे** ] । ' कङ्कः

---

१ अत्र करणस्यैवाधिकरणविवक्षायां सप्तमी । यथोक्तम्–' ल्याददाने चतुर्थी स्याद्दर्शने कथनेपि च । आदाय करणे योगे सप्तमी कैश्चिदुच्यते । ' इति सु० ।

२ धातमय्याम् इत्यत्र प्राचुर्यार्थे मयट् । हिमाद्रिशिखराणां धातुमयत्वं वर्णितं कुमारसंभवे- ' यश्चाप्सरोविभ्रममण्डनानां संपादयित्रीं शिखरैर्बिभर्ति । बलाहकच्छेदविभक्तरागामकालसन्ध्यामिव धातुमत्ताम् ॥ ' केसरिपदेन प्रफुल्लत्वात्साम्यमिति चा० दि० । ३ मृगेन्द्रवद्गन्तुं शीलमस्य ।

पक्षिविशेषे स्याद्वृत्ताकारे युधिष्ठिरे ।' इति विश्वः । 'कङ्कस्तु कर्कटः' इति यादवः । सायकस्य पुंखे [ **सायकपुङ्खे** ] कर्तर्याख्ये मूलप्रदेशे **एव** । 'कर्तरी पुङ्खे' इति यादवः । **सक्ताङ्गुलिः** सन् । **चित्रार्पितारम्भः** चित्रलिखितशरोद्धरणोद्योग **इव** । **अवतस्थे** ॥

**बाहुप्रतिष्टम्भविवृद्धमन्युरभ्यर्णमागस्कृतमस्पृशद्भिः ।**
**राजा स्वतेजोभिरदह्यतान्तर्भोगीव मन्त्रौषधिरुद्धवीर्यः ॥ ३२ ॥**

[ **बाहुप्रतिष्टम्भविवृद्धमन्युः** ] बाह्वोः प्रतिष्टम्भेन प्रतिबन्धेन । 'प्रतिबन्धः प्रतिष्टम्भः' इत्यमरः । विवृद्धमन्युः प्रवृद्धरोषो **राजा** [ **मन्त्रौषधिरुद्धवीर्यः** ] मन्त्रौषधिभ्यां रुद्धवीर्यः प्रतिबद्धशक्तिः **भोगी** सर्प **इव** । 'भोगी राजभुजंगयोः' इति शाश्वतः । **अभ्यर्णम्** अन्तिकम् । 'उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययम् ।' इत्यमरः । **आगस्कृतम्** अपराधकारिणम् **अस्पृशद्भिः स्वतेजोभिरन्तरदह्यत** । 'अधिक्षेपाद्यसहनं तेजः प्राणात्ययेष्वपि ।' इति यादवः ॥

**तमार्यगृह्यं निगृहीतधेनुर्मनुष्यवाचा मनुवंशकेतुम् ।**
**विस्माययन्विस्मितमात्मवृत्तौ सिंहोरुसत्त्वं निजगाद सिंहः ॥ ३३ ॥**

निगृहीता पीडिता धेनुर्येन स [ **निगृहीतधेनुः** ] **सिंहः** । [ **आर्यगृह्यं** ] आर्याणां सतां गृह्यं पक्ष्यम् । 'पदास्वैरिबाह्यापक्ष्येषु च' इति क्यप् । मनुवंशस्य केतुं चिह्नं केतुवद्व्यावर्तकम् [ **मनुवंशकेतुम्** ] । सिंह इवोरुसत्त्वो महाबलस्तम् [ **सिंहोरुसत्त्वम्** ] । [ **आत्मवृत्तौ** ] आत्मनो वृत्तौ बाहुस्तम्भरूपे व्यापारेऽभूतपूर्वत्वाद् **विस्मितम्** । कर्तरि क्तः । **तं** दिलीपं **मनुष्यवाचा** करणेन पुनः **विस्माययन्** । विस्मयमाश्चर्यं प्रापयन् **निजगाद** । 'स्मिङ् ईषद्धसने' इति धातोर्णिचि वृद्ध्यावायादेशे शतृप्रत्यये च सति विस्माययन्निति रूपं सिद्धम् । 'विस्मापयन्' इति पाठे पुगागममात्रं वक्तव्यम् । तच्च 'नित्यं स्मयतेः' इति हेतुभयविवक्षायामेवेति 'भीस्म्योर्हेतुभये' इत्यात्मनेपदे विस्मापयमान इति स्यात् । तस्मान्मनुष्यवाचा विस्माययन्निति रूपं सिद्धम् । करणविवक्षायां न कश्चिद्दोषः ॥

**अलं महीपाल तव श्रमेण प्रयुक्तमप्यस्त्रमितो वृथा स्यात् ।**
**न पादपोन्मूलनशक्ति रंहः शिलोच्चये मूर्च्छति मारुतस्य ॥ ३४ ॥**

हे **महीपाल तव श्रमेणालम्** । साध्याभावाच्छ्रमो न कर्तव्य इत्यर्थः । अत्र गम्यमानसाधनक्रियापेक्षया श्रमस्य करणत्वात्तृतीया । उक्तं च न्यासोद्द्योते—'न केवलं श्रूयमाणैव क्रिया निमित्तं करणभावस्य । अपि तर्हि गम्यमानापि' इति । 'अलं भूषणपर्या-

१ अधिक्षेपापमानादेः प्रयुक्तस्य परेण यत् । प्राणत्यागेऽप्यसहनं तत्तेजः समुदाहृतम् ॥ इति भरतश्च । २ आर्यगृह्यम्—आर्यैर्गृह्यते स्वाश्रयत्वेन सेव्यते इत्यार्यगृह्यस्तम् । साधुपक्षाश्रितमित्यर्थः । आर्यलक्षणं यथा—कर्तव्यमाचरन्कार्यमकर्तव्यमनाचरन् । तिष्ठति प्रकृताचारे स तु आर्य इति स्मृतः ॥ इति । विस्माययन्—इत्यत्र 'विस्मापयन्' इति दिनकरादयः पठन्ति । किंत्वयं पाठो व्याकरणदोषदुष्टत्वाद्धेयः । तथाहि यत्र हेतुत एव ( न तु कर्तृतः ) भयस्य विस्मयस्य चोत्पत्तिस्तत्र णिजन्तयोः भीस्मिधात्वोः परस्मैपदमेव स्यात्स्मिधातोः पुगागमश्च न स्यात् । अत्र तु हेतुत एव विस्मयस्य विवक्षितत्वात्पुगागमाप्राप्तेर्विस्माययन्नित्येव साधु ।

प्रतिशक्तिवारणवाचकम् ।' इत्यमरः । **इतो**ऽस्मिन्मयि । सार्वविभक्तिकस्तसिः । **प्रयुक्तमप्यस्त्रं वृथा स्यात्** । तथा हि । [ **पादपोन्मूलनशक्ति** ] पादपोन्मूलने शक्तिर्यस्य तत्तथोक्तं **मारुतस्य रंहः** वेगः **शिलोच्चये** पर्वते **न मूर्च्छति** न प्रसरति ॥

**कैलासगौरं वृषमारुरुक्षोः पादार्पणानुग्रहपूतपृष्ठम् ।**
**अवेहि मां किङ्करमष्टमूर्तेः कुम्भोदरं नाम निकुम्भमित्रम् ॥ ३५ ॥**

[ **कैलासगौरं** ] कैलास इव गौरः शुभ्रस्तम् । 'चामीकरं च शुभ्रं च गौरमाहुर्मनीषिणः ।' इति शाश्वतः । **वृषं** वृषभम् **आरुरुक्षोः** आरोढुमिच्छोः । स्वस्योपरि पदं निक्षिप्य वृषमारोहत इत्यर्थः । अष्टौ मूर्तयो यस्य स तस्य **अष्टमूर्तेः** शिवस्य [ **पादार्पणानुग्रहपूतपृष्ठम्** ] पादार्पणं पादन्यासस्तदेवानुग्रहः प्रसादस्तेन पूतं पृष्ठं यस्य तं तथोक्तं **निकुम्भमित्रं कुम्भोदरं नाम किङ्करं मामवेहि** विद्धि । 'पृथिवी सलिलं तेजो वायुराकाशमेव च । सूर्याचन्द्रमसौ सोमयाजी चेत्यष्टमूर्तयः' ॥ इति यादवः ॥

**अमुं पुरः पश्यसि देवदारुं पुत्रीकृतोऽसौ वृषभध्वजेन ।**
**यो हेमकुम्भस्तननिःसृतानां स्कन्दस्य मातुः पयसां रसज्ञः ॥ ३६ ॥**

**पुरः** अग्रतः **अमुं देवदारुं पश्यसि** । इति काकुः । **असौ** देवदारुः । वृषभो ध्वजे यस्य स तेन [ **वृषभध्वजेन** ] शिवेन **पुत्रीकृतः** पुत्रत्वेन स्वीकृतः । अभूततद्भावे च्विः । **यो** देवदारुः **स्कन्दस्य मातुः** गौर्या हेम्नः कुम्भ एव स्तनः । तस्मान्निःसृतानां [ **हेमकुम्भस्तननिःसृतानां** ] **पयसाम्** अम्बूनां **रसज्ञः** स्वादज्ञः । स्कन्दपक्षे हेमकुम्भ इव स्तन इति विग्रहः । पयसां क्षीराणाम् । 'पयः क्षीरं पयोऽम्बु च' इत्यमरः । स्कन्दसमानप्रेमास्पदमिति भावः ॥

**कण्डूयमानेन कटं कदाचिद्वन्यद्विपेनोन्मथिता त्वगस्य ।**
**अथैनमद्रेस्तनया शुशोच सेनान्यमालीढमिवासुरास्त्रैः ॥ ३७ ॥**

**कदाचित्कटं** कपोलं **कण्डूयमानेन** कर्षता । 'कण्ड्वादिभ्यो यक्' इति यक् । ततः शानच् । **वन्यद्विपेनास्य** देवदारोः । **त्वगुन्मथिता** । **अथाद्रेस्तनया** गौरी । **असुरास्त्रैरालीढं** क्षतम् । सेनां नयतीति सेनानीः स्कन्दः । 'पार्वतीनन्दनः स्कन्दः सेनानीः' इत्यमरः । 'सत्सूद्विष–' इत्यादिना क्विप् । तम् [ **सेनान्यम्** ] **इव** । **एनं** देवदारुं **शुशोच** ॥

---

१ अयमेव भावोऽष्टमसर्गे–'द्रुमसानुमतां किमन्तरं यदि वायौ द्वितयेऽपि ते चलाः ।' भवानितरानभिभवितुं शक्तोऽपि मादृशान्विनाशयितुं न शक्नोतीति भावः । २ निकुम्भो गणभेदः कुम्भकर्णपुत्रो वेति चा० । पार्वतीवाहनः सिंहः इति वल्लभः । निकुम्भतुल्यमिति वल्लभः पठति । ३ भिन्नकण्ठध्वनिर्धीरैः काकुरित्यभिधीयते । इ. साहित्यदर्पणम् । अत्र कण्ठस्वरभङ्गीविशेषेण 'पश्यसि' इत्यनेन पश्यस्येव इत्यर्थः प्रतीयते ।

**तदाप्रभृत्येव वनद्विपानां त्रासार्थमस्मिन्नहमद्रिकुक्षौ ।**
**व्यापारितः शूलभृता विधाय सिंहत्वमङ्कागतसत्त्ववृत्ति ॥ ३८ ॥**

तदा तत्कालः प्रभृतिरादिर्यस्मिन्कर्मणि तत्तथा **तदाप्रभृत्येव वनद्विपानां त्रासार्थं** भयार्थं **शूलभृता** शिवेन । अङ्कं समीपमागताः प्राप्ताः सत्त्वाः प्राणिनो वृत्तिर्यस्मिंस्तत् [ **अङ्कागतसत्त्ववृत्ति** ] । ' अङ्कः समीप उत्सङ्गे चिह्ने स्थानापराधयोः । ' इति केशवः । **सिंहत्वं विधाय** । **अस्मिन्नद्रिकुक्षौ** गुहायाम् **अहं व्यापारितः** नियुक्तः ॥

**तस्यालमेषा क्षुधितस्य तृप्त्यै प्रदिष्टकाला परमेश्वरेण ।**
**उपस्थिता शोणितपारणा मे सुरद्विषश्चान्द्रमसी सुधेव ॥ ३९ ॥**

**परमेश्वरेण** प्रदिष्टो निर्दिष्टः कालो भोजनवेला यस्याः सा [ **प्रदिष्टकाला** ] **उपस्थिता** प्राप्तां **एषा** गोरूपा **शोणितपारणा** रुधिरस्य व्रतान्तभोजनम् । **सुरद्विषः** राहोः चन्द्रमस इयं **चान्द्रमसी सुधेव** । **क्षुधितस्य** बुभुक्षितस्य **तस्य** अङ्कागतसत्त्ववृत्तेः **मे** मम सिंहस्य **तृप्त्यै अलं** पर्याप्ता । ' नमःस्वस्ति– ' इत्यादिना चतुर्थी ॥

**स त्वं निवर्तस्व विहाय लज्जां गुरोर्भवान्दर्शितशिष्यभक्तिः ।**
**शस्त्रेण रक्ष्यं यदशक्यरक्षं न तद्यशः शस्त्रभृतां क्षिणोति ॥ ४० ॥**

**स** एवमुपायशून्यः **त्वं लज्जां विहाय निर्वतस्व** । भवान् त्वं **गुरोः** [ **दर्शितशिष्यभक्तिः** ] दर्शिता प्रकाशिता शिष्यस्य कर्तव्या भक्तिर्येन स तथोक्तोऽस्ति । ननु गुरुधनं विनाश्य कथं तत्समीपं गच्छेयमत आह–शस्त्रेणेति । **यद्रक्ष्यं** धनं **शस्त्रेण** आयुधेन । ' शस्त्रमायुधलोहयोः ' इत्यमरः । अशक्या रक्षा यस्य तद् **अशक्यरक्षम्** । रक्षितुमशक्यमित्यर्थः । **तद्** रक्ष्यं नष्टमपि **शस्त्रभृतां यशः न क्षिणोति** न हिनस्ति । अशक्यार्थेष्वप्रतिविधानं न दोषायेति भावः ॥

**इति प्रगल्भं पुरुषाधिराजो मृगाधिराजस्य वचो निशम्य ।**
**प्रत्याहतास्त्रो गिरिशप्रभावादात्मन्यवज्ञां शिथिलीचकार ॥ ४१ ॥**

पुरुषाणामधिराजो **पुरुषाधिराजः** नृप **इति प्रगल्भं मृगाधिराजस्य वचो निशम्य** श्रुत्वा [ **गिरिशप्रभावात्** ] गिरिशस्येश्वरस्य प्रभावात् **प्रत्याहतास्त्रः** कुण्ठितास्त्रः सन् **आत्मनि** विषये **अवज्ञाम्** अपमानं **शिथिलीचकार** । तत्याजेत्यर्थः । अवज्ञातोऽहमिति निर्वेदं न प्रापेत्यर्थः । समानेषु हि क्षत्रियाणामभिमानः । न सर्वेश्वरं प्रतीति भावः ॥

**प्रत्यब्रवीच्चैनमिषुप्रयोगे तत्पूर्वभङ्गे वितथप्रयत्नः ।**
**जडीकृतस्त्र्यम्बकवीक्षणेन वज्रं मुमुक्षन्निव वज्रपाणिः ॥ ४२ ॥**

---

१ मम समीपे ये जीवा आगच्छन्ति तान्भक्षित्वा जीवामीत्यर्थः । इ. सुं० । २ अलमत्यर्थं क्षुधितस्य मे तृप्त्यै इयं शोणितपारणोपस्थितेति वल्लभसम्मतोऽन्वयः । ३ अधिको राजाधिराजः । राजाहःसखिभ्यष्टच् ।

स एव पूर्वः प्रथमो भङ्गः प्रतिबन्धो यस्य तस्मिन् **तत्पूर्वभङ्गे इषुप्रयोगे वितथप्रयत्नः** विफलप्रयासः । अत एव **वज्रं** कुलिशं **मुमुक्षन्** मोक्तुमिच्छन् । अम्बकं लोचनम् । 'दृग्दृष्टिनेत्रलोचनचक्षुर्नयनाम्बकेक्षणाक्षीणि ।' इति हलायुधः । त्रीण्यम्बकानि यस्य स त्र्यम्बको हरः । तस्य वीक्षणेन [ **त्र्यम्बकवीक्षणेन** ] **जडीकृतः** निष्पन्दीकृतः । वज्रं पाणौ यस्य स **वज्रपाणिः** इन्द्रः । 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवत इति वक्तव्यम् ।' इति पाणेः सप्तम्यन्तस्योत्तरनिपातः । स **इव** स्थितो नृप **एनं** सिंहं **प्रत्यब्रवीच्च** । 'बाहुं सवज्रं शक्रस्य क्रुद्धस्यास्तम्भयत्प्रभुः' । इति महाभारते ।

**संरुद्धचेष्टस्य मृगेन्द्र कामं हास्यं वचस्तद्यदहं विवक्षुः ।**
**अन्तर्गतं प्राणभृतां हि वेद सर्वं भवान्भावमतोऽभिधास्ये ॥ ४३ ॥**

हे **मृगेन्द्र संरुद्धचेष्टस्य** प्रतिबद्धव्यापारस्य मम **तद्वचो** वाक्यं **कामं हास्यं** परिहसनीयम् । **यद्** वचः 'स त्वं मदीयेन' ( २-४५ ) इत्यादिकम् **अहम् विवक्षुः** वक्तुमिच्छुरस्मि । तर्हि तूष्णीं स्थीयतामित्याशङ्क्येश्वरकिंकरत्वात्सर्वज्ञं त्वां प्रति न हास्यमित्याह—अन्तरिति । **हि** यतो **भवान्प्राणभृतामन्तर्गतं** हृद्गतं वागवृत्त्या बहिरप्रकाशितमेव **सर्वं भावं वेद** वेत्ति । 'विदो लटो वा' इति णलादेशः । **अतः** अहम् **अभिधास्ये** वक्ष्यामि । वच इति प्रकृतं कर्म संबध्यते । अन्ये त्वीदृग्वचनमाकर्ण्यासम्भावितार्थमेतदित्यपहसन्ति । अतस्तु मौनमेव भूषणम् । त्वं तु वाङ्मनसयोरेकविध एवायमिति जानासि । अतोऽभिधास्ये यद्वचोऽहं विवक्षुरित्यर्थः ॥

**मान्यः स मे स्थावरजङ्गमानां सर्गस्थितिप्रत्यवहारहेतुः ।**
**गुरोरपीदं धनमाहिताग्नेर्नश्यत्पुरस्तादनुपेक्षणीयम् ॥ ४४ ॥**

प्रत्यवहारः प्रलयः । [ **स्थावरजङ्गमानां** ] स्थावराणां तरुशैलादीनां जङ्गमानां मनुष्यादीनां [ **सर्गस्थितिप्रत्यवहारहेतुः** ] सर्गस्थितिप्रत्यवहारेषु हेतुः **स** ईश्वरो **मे** मम **मान्यः** पूज्यः । अलङ्घ्यशासन इत्यर्थः । शासनं च 'सिंहत्वमङ्कागतसत्त्ववृत्ति' (२।३८) इत्युक्तरूपम् । तर्हि विसृज्य गम्यताम् । नेत्याह—गुरोरपीति । **पुरस्ताद्** अग्रे **नश्यदिदमाहिताग्नेर्गुरोर्धनमपि** गोरूपम् **अनुपेक्षणीयम्** । आहिताग्नेरिति विशेषणेनानुपेक्षाकारणं हविःसाधनत्वं सूचयति ॥

---

१ अस्य व्युत्पत्तिर्महाभारते द्रोणपर्वणि यथा—तिस्रो देव्यो यदा चैनं भजन्ते भुवनेश्वरम् । द्यौरापः पृथिवी चैव त्र्यम्बकस्तु ततः स्मृतः ॥ २ अयं संपूर्णश्लोको द्रोणपर्वणि यथा—असूयतश्च शक्रस्य वज्रेण प्रहरिष्यतः । बाहुं सवज्रं तं तस्य क्रुद्धस्यास्तम्भयद्विभुः ॥ पुरा किल देवैरभ्यर्थितेन शिवेन दह्यमानानि त्रिपुरपुराणि द्रष्टुमद्भुतं शिशुमेकं धारयन्ती देवी पार्वत्युपस्थिता । सा च सुरान्दृष्ट्वापृच्छत्—'ब्रूत कोऽयं बालः' इति । तदा बालस्याप्रतिमं तेजो दृष्ट्वेन्द्रोऽसूयया वज्रमुद्यम्य तं हन्तुं प्रचक्रमे । बालरूपधारी शङ्करश्च तस्य तं हस्तं स्तम्भयाञ्चकार । पश्चाद्देवैः प्रसादिते शङ्करे शक्रस्य बाहुः प्रकृतिं प्राप्तः । इत्येषा भारती कथात्रानुसंधेया । भा. द्रो. प. अ. २००, अनुशासनप. अ. ६०. ३ स्थानशीलाः स्थावराः । 'स्थेशभासपिसकसो वरच्' इति वरच् । जङ्गम्यन्ते वक्रं गच्छन्तीति जङ्गमाः । गत्यर्थानां 'नित्यं कौटिल्ये—' इति यङ् । स्वाम्यादिमते भृशार्थे यङ् । ४ आहितोऽग्निर्येन । 'अग्न्याहितः' इत्यपि रूपम् ।

**स त्वं मदीयेन शरीरवृत्तिं देहेन निर्वर्तयितुं प्रसीद ।**
**दिनावसानोत्सुकबालवत्सा विसृज्यतां धेनुरियं महर्षेः ॥ ४५ ॥**

**सः** अङ्कागतसत्त्ववृत्तिः **त्वं मदीयेन देहेन शरीरवृत्तिं** शरीरस्य वृत्तिं जीवनं **निर्वर्तयितुं**[1] संपादयितुं **प्रसीद** । **दिनावसानोत्सुकबालवत्सा** दिनावसान उत्सुको माता समागमिष्यतीत्युत्कण्ठितो बालवत्सो यस्याः सा **महर्षेरियं धेनुर्विसृज्यताम्** ॥

**अथान्धकारं गिरिगह्वराणां दंष्ट्रामयूखैः शकलानि कुर्वन् ।**
**भूयः स भूतेश्वरपार्श्ववर्ती किंचिद्विहस्यार्थपतिं बभाषे ॥ ४६ ॥**

अथ [ **भूतेश्वरपार्श्ववर्ती** ] भूतेश्वरस्य पार्श्ववर्त्यनुचरः **स** सिंहो **गिरिगह्वराणां** गिरेर्गह्वराणां गुहानाम् । ' देवखातबिले गुहा । गह्वरम् ' इत्यमरः । **अन्धकारं** ध्वान्तं **दंष्ट्रामयूखैः शकलानि**[2] खण्डानि **कुर्वन्** । निरस्यन्नित्यर्थः । **किंचिद् विहस्य अर्थपतिं** नृपं **भूयः बभाषे** । हासकारणम् ' अल्पस्य हेतोर्बहु हातुमिच्छन् ' ( २।४७ ) इति वक्ष्यमाणं द्रष्टव्यम् ॥

**एकातपत्रं जगतः प्रभुत्वं नवं वयः कान्तमिदं वपुश्च ।**
**अल्पस्य हेतोर्बहु हातुमिच्छन्विचारमूढः प्रतिभासि मे त्वम् ॥ ४७ ॥**

**एकातपत्रम्**[3] एकच्छत्रं **जगतः प्रभुत्वं** स्वामित्वम् **नवं वयः** यौवनम् । **इदं कान्तं** रम्यं **वपुश्च** । इत्येवं **बहु** । **अल्पस्य हेतोः** अल्पेन कारणेन । अल्पफलायेत्यर्थः । ' षष्ठी हेतुप्रयोगे ' इति षष्ठी । **हातुं** त्यक्तुम् **इच्छन् त्वं** विचारे कार्याकार्यविमर्शे मूढो मूर्खो [ **विचारमूढः** ] **मे** मम **प्रतिभासि** ॥

**भूतानुकम्पा तव चेदियं गौरेका भवेत्स्वस्तिमती त्वदन्ते ।**
**जीवन्पुनः शश्वदुपप्लवेभ्यः प्रजाः प्रजानाथ पितेव पासि ॥ ४८ ॥**

**तव** भूतेष्वनुकम्पा कृपा **भूतानुकम्पा चेत्** । ' कृपा दयानुकम्पा स्यात् ' इत्यमरः । कृपैव वर्तते चेदित्यर्थः । तर्हि **त्वदन्ते** तव नाशे सति **इयमेका गौः** । स्वस्ति क्षेममस्या अस्तीति **स्वस्तिमती । भवेत्**[4] । जीवेदित्यर्थः । ' स्वस्त्याशीः क्षेमपुण्यादौ ' इत्यमरः । हे **प्रजानाथ जीवन्पुनः पितेव प्रजा उपप्लवेभ्यः**

---

१ ' उत्सुकबालवत्सत्वेन द्वयोरपि [ नन्दिन्यास्तद्वत्सस्यापि ] नाशः सूचितः । ' इति च. ' प्रसीद ' इत्यत्र ' यतस्व ' ' विसृज्यताम् ' इत्यत्र ' विमुच्यताम् ' इति व. चा. सु. पठन्ति। २ ' शकलानि ' इति ' अन्धकारम् ' इत्यस्य. विधेयविशेषणम् । मध्ये मध्ये दन्तकिरणाना प्रवेशात्तत्रान्धकारो व्यवच्छिन्न इत्य० । 'गिरिगह्वराणाम्' इत्यत्र गिरिकन्दराणाम् इति पाठः । ३ एकातपत्रम्—प्रतिद्वंद्विनृपान्तराभावादद्वितीयमातपत्रं यस्मिन् तत् । आतपात्त्रायत इति आतपत्रमत्र राजच्छत्रम् । ४ ' एका गौः स्वस्तिमती भवेत्.' अनेन त्वयि मृते सकलं जगद्विपद्ग्रस्तं भवेदतस्त्वयातिनृशंसतैव प्रसज्येतेति सूचितम् । तदुक्तं शुक्रनीतौ—'यदि न स्यान्नरपतिः सम्यङ्नेता ततः प्रजाः । अकर्णधारा जलधौ विप्लवेतेह नौरिव ' ॥ इति ।

विप्रेभ्यः **शश्वत्** सदा । 'पुनःसदार्थयोः शश्वत्' इत्यमरः । **पासि** रक्षसि । स्वप्राणव्यये-नैकधेनुरक्षणाद्वरं जीवितेनैव शश्वदखिलजगत्त्राणमित्यर्थः ॥

न धर्मलोपादियं प्रवृत्तिः, किन्तु गुरुभयादित्यत आह—

**अथैकधेनोरपराधचण्डाद्गुरोः कृशानुप्रतिमाद्बिभेषि ।**
**शक्योऽस्य मन्युर्भवता विनेतुं गाः कोटिशः स्पर्शयता घटोध्नीः ॥४९॥**

**अथ** इति पक्षान्तरे । अथवा । [ **एकधेनोः** ] एकैव धेनुर्यस्य तस्मात् । अयं कोपकारणोपन्यास इति ज्ञेयम् । अत एवापराधे गवोपेक्षालक्षणे सति चण्डादतिकोपनात् [ **अपराधचण्डात्** ] । 'चण्डस्त्वत्यन्तकोपनः' इत्यमरः । अत एव [ **कृशानुप्रतिमात्** ] कृशानुः प्रतिमोपमा यस्य तस्मादग्निकल्पाद् । **गुरोः बिभेषि** इति काकुः । 'भीत्रार्थानां भयहेतुः' इत्यपादानात्पञ्चमी । अल्पवित्तस्य धनहानिरतिदुःसहेति भावः । **अस्य** गुरोः **मन्युः** क्रोधः । 'मन्युर्दैन्ये क्रतौ क्रुधि' इत्यमरः । घटा इवोधांसि यासां ता **घटोध्नीः** । 'ऊधसोऽनङ्' इत्यनङादेशः । 'बहुव्रीहेरूधसो ङीष्' इति ङीष् । **कोटिशः गाः स्पर्शयता** प्रतिपादयता । 'विश्राणनं वितरणं स्पर्शनं प्रतिपादनम्' इत्यमरः । **भवता विनेतुम्** अपनेतुं **शक्यः** ॥

**तद्रक्ष कल्याणपरम्पराणां भोक्तारमूर्जस्वलमात्मदेहम् ।**
**महीतलस्पर्शनमात्रभिन्नमृद्धं हि राज्यं पदमैन्द्रमाहुः ॥ ५० ॥**

**तत्** तस्मात्कारणात् **कल्याणपरम्पराणां भोक्तारम्** । कर्मणि षष्ठी । ऊर्जो बलमस्यास्तीति **ऊर्जस्वलम्** । 'जोत्स्नातमिस्रा—' इत्यादिना वलच्प्रत्ययान्तो निपातः । **आत्मदेहं रक्ष** । ननु गामुपेक्ष्यात्मदेहरक्षणे स्वर्गहानिः स्यात् । नेत्याह—महीतलेति । **हि ऋद्धं** समृद्धं **राज्यं** महीतलस्पर्शनमात्रेण भूतलसंबन्धमात्रेण भिन्नम् [ **महीतलस्पर्शनमात्रभिन्नम्** ] **ऐन्द्रं** इन्द्रसंबन्धि **पदं** स्थानं **आहुः** । स्वर्गान्न भिद्यत इत्यर्थः ॥

**एतावदुक्त्वा विरते मृगेन्द्रे प्रतिस्वनेनास्य गुहागतेन ।**
**शिलोच्चयोऽपि क्षितिपालमुच्चैः प्रीत्या तमेवार्थमभाषतेव ॥ ५१ ॥**

**मृगेन्द्रे एतावद् उक्त्वा विरते** सति **गुहागतेन अस्य** सिंहस्य **प्रतिस्वनेन शिलोच्चयः** शैलः **अपि प्रीत्या तम् एव अर्थं क्षितिपालम् उच्चैः अभाषतेव** । इत्युत्प्रेक्षा ॥ भाषिरयं ब्रुविसमानार्थत्वाद्द्विकर्मकः । ब्रुविस्तु द्विकर्मकेषु पठितः । तदुक्तम्-'दुहियाचिरुधिप्रच्छिभिक्षिचित्रामुपयोगनिमित्तमपूर्वविधौ । ब्रुविशासिगुणेन च यत्सचते तदकीर्तितमाचरितं कविना ॥' इति ॥

**निशम्य देवानुचरस्य वाचं मनुष्यदेवः पुनरप्युवाच ।**
**धेन्वा तदध्यासितकातराक्ष्या निरीक्ष्यमाणः सुतरां दयालुः ॥ ५२ ॥**

---

१ अत्र कण्ठध्वनिविशेषेण 'त्वं बिभेषि' किंतु न ते भयं युक्तमित्यर्थसूचनात्काकुः । २ संति देहे धर्मार्थकाममोक्षाश्चतुर्वर्गाः साध्यन्ते । ते च कल्याणपरम्परासाधकाः । अयमेवार्थ उक्तः कुमारसम्भवेपि "शरीरमाद्यं खलु धर्मसाधनम्' इति । ऊर्जस्वलमित्यनेन भोगसामर्थ्यमुक्तम् । उक्तं च 'भोज्यं भोजनशक्तिश्च......। विभवो दानशक्तिश्च नाल्पस्य तपसः फलम्' ॥ इति ।

**देवानुचरस्य** ईश्वरकिंकरस्य सिंहस्य **वाचं निशम्य मनुष्यदेवः** राजा **पुनः अप्युवाच** । किंभूतः सन् । तेन सिंहेन यदध्यासितं व्याक्रमणम् । नपुंसके भावे क्तः । तेन कातरे अक्षिणी यस्यास्तया [ **तदध्यासितकातराक्ष्या** ] । 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्' इति षच् । 'षिद्गौरादिभ्यश्च' इति ङीष् । किं वा वक्ष्यतीति भीत्यैवं स्थितयेत्यर्थः । **धेन्वा निरीक्ष्यमाणः** अत एव **सुतरां दयालुः** सन् । सुतरामित्यत्र 'द्विवचनविभज्य–' इत्यादिना सुशब्दात्तरप् । 'किमेत्तिङव्यय–' इत्यादिनाम्प्रत्ययः । 'तद्धितश्चासर्वविभक्तिः' इत्यव्ययसंज्ञा ॥

किमुवाचेत्याह—

**क्षतात्किल त्रायत इत्युदग्रः क्षत्रस्य शब्दो भुवनेषु रूढः ।**
**राज्येन किं तद्विपरीतवृत्तेः प्राणैरुपक्रोशमलीमसैर्वा ॥ ५३ ॥**

'क्षणु हिंसायाम्' इति धातोः संपदादित्वात्क्विप् । 'गमादीनाम्' इति वक्तव्यादनुनासिकलोपे तुगागमे च क्षदिति रूपं सिद्धम् । क्षतो नाशात्त्रायत इति क्षत्रः । सुपीति योगविभागात्कः । तामेतां व्युत्पत्तिं कविरर्थतोऽनुक्रामति—क्षतादित्यादिना । **उदग्रः** उन्नतः **क्षत्त्रस्य** क्षत्त्रवर्णस्य **शब्दः** वाचकः । क्षत्त्रशब्दः इत्यर्थः । **क्षतात्त्रायते इति** व्युत्पत्त्या **भुवनेषु रूढः किल** प्रसिद्धः खलु । नाश्वकर्णादिवत्केवलरूढः । किंतु पङ्कजादिवद्योगरूढ इत्यर्थः । ततः किमित्यत आह—[ **तद्विपरीतवृत्तेः** ] तस्य क्षत्त्रशब्दस्य विपरीतवृत्तेर्विरुद्धव्यापारस्य क्षतत्त्राणमकुर्वतः पुंसो **राज्येन किम् उपक्रोशमलीमसैः** निन्दामलिनैः । 'उपक्रोशो जुगुप्सा च कुत्सा निन्दा च गर्हणे ।' इत्यमरः । 'ज्योत्स्नातमिस्रा–' इत्यादिना मलीमसशब्दो निपातितः । 'मलीमसं तु मलिनं कच्चरं मलदूषितम् ।' इत्यमरः । तैः **प्राणैर्वाः** किम् । निन्दितस्य सर्वं व्यर्थमित्यर्थः । एतेन 'एकातपत्रम्' ( २ । ४७ ) इत्यादिना श्लोकद्वयेनोक्तं प्रत्युक्तमिति वेदितव्यम् ॥

'अथैकधेनोः' ( २ । ४९ ) इत्यत्रोत्तरमाह—

**कथं नु शक्योऽनुनयो महर्षेर्विश्राणनाच्चान्यपयस्विनीनाम् ।**
**इमामनूनां सुरभेरवेहि रुद्रौजसा तु प्रहृतं त्वयास्याम् ॥ ५४ ॥**

अनुनयः क्रोधापनयः । चकारो वाकारार्थः । **महर्षेः अनुनयः च** वान्यासां पयस्विनीनां दोग्ध्रीणां गवां [ **अन्यपयस्विनीनाम्** ] **विश्राणनाद्** दानात् । 'त्यागो वितरणं

---

१ मनुष्यदेवः–मनुष्येषु देव इव स्थितत्वात् । तदुक्तं मनुना–'महती देवता ह्येषा नररूपेण तिष्ठति' इति ॥ २ 'तदध्यासनकातराक्ष्या' इति वल्लभचारित्रवर्धनौ पठतः । ३ अस्य व्युत्पत्तिर्महाभारते शान्तिपर्वणि यथा–ब्राह्मणानां क्षतत्राणात्ततः क्षत्रिय उच्यते इति । मनुरप्याह ब्राह्मं प्राप्तेन संस्कारं क्षत्रियेण यथाविधि । सर्वस्यास्य यथान्यायं कर्तव्यं परिरक्षणम् ॥ इति । एवं किरातार्जुनीयेऽपि–स क्षत्रियस्त्राणसहः सतां यः इत्यादि । ४ अनुरूपभावः किरातार्जुनीये–अभिमानधनस्य गत्वरैरसुभिः स्थास्नु यशश्चिचीषतः । अचिरांशुविलासचञ्चला ननु लक्ष्मीफलमानुषङ्गिकम् ॥ इति

दानमुत्सर्जनविसर्जने । विश्राणनं वितरणम्' इत्यमरः। **कथं नु शक्यः**। न शक्य इत्यर्थः। अत्र हेतुमाह—**इमां** गां **सुरभेः** कामधेनोः । 'पञ्चमी विभक्ते' इति पञ्चमी। **अनूनाम्** अन्यूनाम् **अवेहि** जानीहि। तर्हि कथमस्याः परिभवोऽभूदित्याह—रुद्रौजसेति। **अस्यां** गवि **त्वया** कर्त्रा **प्रहृतं तु** प्रहारस्तु । नपुंसके भावे क्तः। **रुद्रौजसा** ईश्वरसामर्थ्येन। न तु स्वयमित्यर्थः। 'सप्तम्यधिकरणे च' इति सप्तमी॥

तर्हि किं चिकीर्षितमित्यत्राह—

**सेयं स्वदेहार्पणनिष्क्रयेण न्याय्या मया मोचयितुं भवत्तः।**
**न पारणा स्याद्विहता तवैवं भवेदलुप्तश्च मुनेः क्रियार्थः॥ ५५॥**

**सा इयं गौः मया** निष्क्रीयते प्रत्याह्रियतेऽनेन परगृहीतमिति निष्क्रयः प्रतिशीर्षकम्। 'एरच्' इत्यच्प्रत्ययः। स्वदेहार्पणमेव निष्क्रयस्तेन [ **स्वदेहार्पणनिष्क्रयेण** ] **भवत्तः** त्वत्तः । पञ्चम्यास्तसिल् । **मोचयितुं न्याय्या** न्यायादनपेता । युक्तेत्यर्थः । 'धर्मपथ्यर्थ—' इत्यादिना यत्प्रत्ययः । **एवं** सति **तव पारणा** भोजनं **विहता न स्यात्**। **मुनेः** क्रिया होमादिः। स **एवार्थः** प्रयोजनम्। स [ **क्रियार्थः** ] **च अलुप्तः भवेत्**। स्वप्राणव्ययेनापि स्वामिगुरुधनं संरक्ष्यमिति भावः॥

अत्र भवानेव प्रमाणमित्याह—

**भवानपीदं परवानवैति महान्हि यत्नस्तव देवदारौ।**
**स्थातुं नियोक्तुर्न हि शक्यमग्रे विनाश्य रक्ष्यं स्वयमक्षतेन॥ ५६॥**

**परवान्** स्वामिपरतन्त्रो **भवानपि**। 'परतन्त्रः पराधीनः परवान्नाथवानपि।' इत्यमरः। **इदं** वक्ष्यमाणम् **अवैति** । भवतानुभूयत एवेत्यर्थः। 'शेषे प्रथमः' इति प्रथमपुरुषः। किमित्यत आह—**हि** यस्माद्धेतोः । 'हि हेताववधारणे' इत्यमरः । **तव देवदारौ** विषये **महान् यत्नः** । महता यत्नेन रक्ष्यत इत्यर्थः । इदं शब्दोक्तमर्थं दर्शयति—स्थातुमिति । **रक्ष्यं** वस्तु **विनाश्य** विनाशं गमयित्वा **स्वयमक्षतेन** अव्रणेन । नियुक्तेनेति शेषः। **नियोक्तुः** स्वामिनः **अग्रे स्थातुं शक्यं न हि**॥

सर्वथा चैतदप्रतिहार्यमित्याह—

**किमप्यहिंस्यस्तव चेन्मतोऽहं यशःशरीरे भव मे दयालुः।**
**एकान्तविध्वंसिषु मद्विधानां पिण्डेष्वनास्था खलु भौतिकेषु॥ ५७॥**

**किमपि** किं वा **अहं तवाहिंस्यः मतश्चेत्** तर्हि **मे** [ **यशःशरीरे** ] यश एव शरीरं तस्मिन्। **दयालुः** कारुणिको **भव**। 'स्याद्दयालुः कारुणिकः' इत्यमरः। ननु मुख्यमुपेक्ष्यामुख्यशरीरे कोऽभिनिवेशः । अत आह—एकान्तेति । **मद्विधानां** मादृशानां विवेकिनाम् **एकान्तविध्वंसिषु** अवश्यविनाशिषु **भौतिकेषु** पृथिव्या-

१ 'सेयम्' इत्यत्र कर्मपदं तुमन्तक्रियया यद्यप्यनुक्तमेव तथापि 'न्यायादनपेता' एतदर्थकस्य 'न्याय्या' इति पदस्यान्तर्गततद्धितप्रत्ययेन विशेषेणाक्तत्वात्कर्माणि द्वितीया न भवत्यनुक्ते कर्मणि द्वितीयाविधानात्। उक्ते कर्मणि तु प्रातिपदिकमात्रे प्रथमा । अभिधानं तु प्रायेण तिङ्कृत्तद्धितसमासैः। क्वचिन्निपातेनापि। अत्र तु तद्धितप्रत्ययेन।

दिभूतविकारेषु **पिण्डेषु** शरीरेषु **अनास्था खलु** अनपेक्षैव । 'आस्था त्वालम्बना-स्थानयत्नापेक्षासु कथ्यते ।' इति विश्वः ॥

सौहार्दादहमनुसरणीयोऽस्मीत्याह—

**संबन्धमाभाषणपूर्वमाहुर्वृत्तः स नौ संगतयोर्वनान्ते ।**
**तद्भूतनाथानुग नार्हसि त्वं संबन्धिनो मे प्रणयं विहन्तुम् ॥ ५८ ॥**

**संबन्धं** सख्यम् । [ **आभाषणपूर्वम्** ] आभाषणमालापः पूर्वं[1] कारणं यस्य तम् **आहुः** । 'स्यादाभाषणमालापः' इत्यमरः । **स** तादृक्संबन्धो **वनान्ते संगतयोर्नौ** आवयोः **वृत्तः** जातः । **तत्** ततो हेतोर्हे **भूतनाथानुग** शिवानुचर । एतेन तस्य महत्त्वं सूचयति । अत एव **संबन्धिनो** मित्रस्य **मे प्रणयं** याच्ञाम् । 'प्रणयास्त्वमी । विश्रम्भयाच्ञाप्रेमाणः' इत्यमरः । **विहन्तुं त्वं नार्हसि** ॥

**तथेति गामुक्तवते दिलीपः सद्यः प्रतिष्टम्भविमुक्तबाहुः ।**
**स न्यस्तशस्त्रो हरये स्वदेहमुपानयत्पिण्डमिवामिषस्य ॥ ५९ ॥**

**तथेति गामुक्तवते हरये** सिंहाय । 'कपौ सिंहे सुवर्णे च वर्णे विष्णौ हरिं विदुः ।' इति शाश्वतः । **सद्यः** तत्क्षणे **स** प्रतिष्टम्भात्प्रतिबन्धाद्विमुक्तो बाहुर्यस्य [ **प्रतिष्टम्भ-विमुक्तबाहुः** ] **दिलीपः न्यस्तशस्त्रः** त्यक्तायुधः सन् । **स्वदेहम्** । **आमिषस्य** मांसस्य । 'पललं क्रव्यमामिषम्' इत्यमरः । **पिण्डं** कवलम् **इव** । **उपानयत्** समर्पितवान् । एतेन निर्ममत्वमुक्तम् ॥

**तस्मिन्क्षणे पालयितुः प्रजानामुत्पश्यतः सिंहनिपातमुग्रम् ।**
**अवाङ्मुखस्योपरि पुष्पवृष्टिः पपात विद्याधरहस्तमुक्ता ॥ ६० ॥**

**तस्मिन्क्षणे उग्रं सिंहनिपातमुत्पश्यतः** उत्प्रेक्षमाणस्य तर्कयतः **अवाङ्मुखस्य** अधोमुखस्य । 'स्यादवाङ्प्यधोमुखः' इत्यमरः । **प्रजानां पालयितुः** राज्ञः **उपरि** उपरिष्टात् । 'उपर्युपरिष्टात्' इति निपातः । [ **विद्याधरहस्तमुक्ता** ] विद्याधराणां देवयोनिविशेषाणां हस्तैर्मुक्ता **पुष्पवृष्टिः पपात**[2] ॥

**उत्तिष्ठ वत्सेत्यमृतायमानं वचो निशम्योत्थितमुत्थितः सन् ।**
**ददर्श राजा जननीमिव स्वां गामग्रतः प्रस्रविणीं न सिंहम् ॥६१॥**

**राजा** । अमृतमिवाचरतीति **अमृतायमानं** तत् । 'उपमानादाचारे' इति क्यङ्[3] । ततः शानच् । **उत्थितम्** उत्पन्नम् । '**हे वत्स उत्तिष्ठ**' इति **वचः**

१ एवं कुमारसंभवे—'यतः सतां सन्नतगात्रि सङ्गतं मनीषिभिः साप्तपदीनमुच्यते ।' इति । 'संगतं दर्शनात्सताम्' इति हितोपदेशेपि ।

२ 'उग्रे सिंहनिपाते शङ्कितस्योपरि कोमला पुष्पवृष्टिः पपातेति वैचित्र्यम्' इति चा० ।

३ 'कर्तुः क्यङ् सलोपश्च' इति सूत्रेणेत्यर्थः । यत्तु केषुचिन्मुद्रितपुस्तकेषु 'क्यच्' इति पाठ उपलभ्यते स प्रामादिक इति भाति ।

**निशम्य** श्रुत्वा । **उत्थितः सन्** । अस्तेः शतृप्रत्ययः । **अग्रतः** अग्रे प्रस्रवः क्षीरस्रावोऽस्ति यस्याः सा तां **प्रस्रविणीं गां स्वां जननीमिव ददर्श । सिंहं न** ददर्श ॥

**तं विस्मितं धेनुरुवाच साधो मायां मयोद्भाव्य परीक्षितोऽसि ।**
**ऋषिप्रभावान्मयि नान्तकोऽपि प्रभुः प्रहर्तुं किमुतान्यहिंस्राः ॥ ६२ ॥**

**विस्मितम्** आश्चर्यं गतम् । कर्तरि क्तः । **तं** दिलीपं **धेनुरुवाच** । किमित्यत्राह—**हे साधो मया मायामुद्भाव्य** कल्पयित्वा **परीक्षितोऽसि । ऋषिप्रभावान्मयि अन्तकः** यमः **अपि प्रहर्तुं न प्रभुः** न समर्थः । अन्ये हिंस्राः घातुकाः [ **अन्यहिंस्राः** ]। 'शरारुर्घातुको हिंस्रः' इत्यमरः । 'नमिकम्पि-' इत्यादिना रप्रत्ययः । **किमुत** सुष्ठु । न प्रभव इति योज्यम् । 'बलवत्सुष्ठु किमुत स्वस्त्यतीव च निर्भरे ।' इत्यमरः ॥

**भक्त्या गुरौ मय्यनुकम्पया च प्रीतास्मि ते पुत्र वरं वृणीष्व ।**
**न केवलानां पयसां प्रसूतिमवेहि मां कामदुघां प्रसन्नाम् ॥ ६३ ॥**

**हे पुत्र गुरौ भक्त्या । मय्यनुकम्पया च । ते** तुभ्यं **प्रीतास्मि** । 'क्रियाग्रहणमपि कर्तव्यम्' इति चतुर्थी । **वरं** देवेभ्यो वरणीयमर्थम् । 'देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीबे मनाक्प्रिये ।' इत्यमरः । **वृणीष्व** स्वीकुरु । तथाहि । **मां केवलानां पयसां प्रसूतिं** कारणं **न अवेहि** न विद्धि । किंतु **प्रसन्नां** माम् [ **कामदुघाम्** ] कामान्दोग्धीति कामदुघा तामवेहि । 'दुहः कब्घश्च' इति कप्प्रत्ययः ॥

**ततः समानीय स मानितार्थी हस्तौ स्वहस्तार्जितवीरशब्दः ।**
**वंशस्य कर्तारमनन्तकीर्तिं सुदक्षिणायां तनयं ययाचे ॥ ६४ ॥**

**ततः मानितार्थी** । स्वहस्तार्जितो वीर इति शब्दो येन स [ **स्वहस्तार्जितवीरशब्दः** ]। एतेनास्य दातृत्वं दैन्यराहित्यं चोक्तम् । **स** राजा **हस्तौ समानीय** संधाय । अञ्जलिं बद्ध्वेत्यर्थः । **वंशस्य कर्तारं** -प्रवर्तयितारम् । अत एव रघुकुलमिति प्रसिद्धिः । **अनन्तकीर्तिं** स्थिरयशसं **तनयं सुदक्षिणायां ययाचे** ॥

**संतानकामाय तथेति कामं राज्ञे प्रतिश्रुत्य पयस्विनी सा ।**
**दुग्ध्वा पयः पत्रपुटे मदीयं पुत्रोपभुङ्क्ष्वेति तमादिदेश ॥ ६५ ॥**

**सा पयस्विनी** गौः । । [ **संतानकामाय** ] संतानं कामयत इति संतानकामः । 'कर्मण्यण्' । तस्मै **राज्ञे तथेति** । काम्यत इति कामो वरः । कर्मार्थे घञ्प्रत्ययः । तं [ **कामं** ] **प्रतिश्रुत्य** प्रतिज्ञाय '**हे पुत्र मदीयं पयः पत्रपुटे** पत्रनिर्मिते पात्रे **दुग्ध्वोपभुङ्क्ष्व** पिब' **इति तमादिदेश** आज्ञापितवती । 'उपयुङ्क्ष्व' इति वा पाठः ।

---

१ राज्ञः सत्त्वोत्कर्षं दृष्ट्वा तस्मिन्धेनोरपत्यस्नेहस्तथा प्रकटीबभूव यथा तस्याः स्तनमण्डलात्क्षीरधाराः सहसा प्रावर्तन्त इति भावः । 'प्रस्नवस्तु स्नेहवशाज्जनन्या अपि स्यात्' इति चा० ।

२ 'विस्मयस्तु केसरिणोऽदर्शनात्' इति चा. ।

३ 'गोः पयोदाने सामर्थ्यं न वरदाने इत्याह न केवलानामिति ।' इति चा० ।

**वत्सस्य होमार्थविधेश्च शेषमृषेरनुज्ञामधिगम्य मातः ।**
**ऊधस्यमिच्छामि तवोपभोक्तुं षष्ठांशमुर्व्या इव रक्षितायाः ॥ ६६ ॥**

**हे मातः वत्सस्य** वत्सपीतस्य शेषं वत्सपीतावशिष्टमित्यर्थः । होम एवार्थः । तस्य विधिरनुष्ठानम् तस्य [ **होमार्थविधेः** ] **च शेषम्** । होमावशिष्टमित्यर्थः । **तव** । ऊधसि भवम् **ऊधस्यं** क्षीरम् । ' शरीरावयवाच्च ' इति यत्प्रत्ययः । **रक्षिताया उर्व्याः षष्ठांशं** षष्ठभागम् **इव** । **ऋषेरनुज्ञामधिगम्य उपभोक्तुमिच्छामि** ॥

**इत्थं क्षितीशेन वसिष्ठधेनुर्विज्ञापिता प्रीततरा बभूव ।**
**तदन्विता हैमवताच्च कुक्षेः प्रत्याययावाश्रममश्रमेण ॥ ६७ ॥**

**इत्थं क्षितीशेन विज्ञापिता** वसिष्ठस्य धेनुः [ **वसिष्ठधेनुः** ] **प्रीततरा** । पूर्वं शुश्रूषया प्रीता । संप्रत्यनया विज्ञापनया प्रीततरा अतिसंतुष्टा **बभूव** । **तदन्विता** तेन दिलीपेनान्विता **हैमवतात्** हिमवत्संबन्धिनः **कुक्षेः** गुहायाः सकाशाद् **अश्रमेण** अनायासेन **आश्रमं प्रत्याययौ** आगता **च** ॥

**तस्याः प्रसन्नेन्दुमुखः प्रसादं गुरुर्नृपाणां गुरवे निवेद्य ।**
**प्रहर्षचिह्नानुमितं प्रियायै शशंस वाचा पुनरुक्तयेव ॥ ६८ ॥**

प्रसन्नेन्दुरिव मुखं यस्य सः [ **प्रसन्नेन्दुमुखः** ] **नृपाणां गुरुः** दिलीपः [ **प्रहर्षचिह्नानुमितं** ] प्रहर्षचिह्नैर्मुखरागादिभिरनुमितमूहितं **तस्याः** धेनोः **प्रसादम्** अनुग्रहं प्रहर्षचिह्नैरेव ज्ञातत्वात् **पुनरुक्तयेव वाचा गुरवे निवेद्य** विज्ञाप्य पश्चात् **प्रियायै शशंस** । कथितस्यैव कथनं पुनरुक्तिः । न चेह तदस्ति किंतु चिह्नैः कथितप्रायत्वात्पुनरुक्तयेव स्थितयेत्युत्प्रेक्षा ॥

**स नन्दिनीस्तन्यमनिन्दितात्मा सद्वत्सलो वत्सहुतावशेषम् ।**
**पपौ वसिष्ठेन कृताभ्यनुज्ञः शुभ्रं यशो मूर्तमिवातितृष्णः ॥ ६९ ॥**

**अनिन्दितात्मा** अगर्हितस्वभावः । सत्सु वत्सलः प्रेमवान् **सद्वत्सलः** । ' वत्सांसाभ्यां कामबले ' इति लच्प्रत्ययः । **वसिष्ठेन कृताभ्यनुज्ञः** कृतानुमतिः **स** राजा [ **वत्सहुतावशेषम्** ] वत्सस्य हुतस्य चावशेषं पीतहुतावशिष्टं [ **नन्दिनीस्त-**

---

१ औधस्यमिति पा०. २ अत्र मनुः—आददीताथ षड्भागं द्रुमांसमधुसर्पिषाम् । गन्धौषधिरसानां च पुष्पमूलफलस्य च ॥ पत्रशाकतृणानां च चर्मणां वैदलस्य च । मृन्मयानां च भाण्डानां सर्वस्याश्ममयस्य च ॥ इति स. अ. । राजापि फलमाप्नोति रक्षितायाः क्षितेरिति च । ३ अत्र ' प्रकृत्यादिभ्य उपसंख्यानम् ' इति तृतीया । ४ उक्तं च मनुना–आकारैरिङ्गितैर्गत्या चेष्टया भाषितेन च । नेत्रवक्त्रविकारैश्च गृह्यतेऽन्तर्गतं मनः ॥ अष्टमा. २६. ५ वत्सो वत्सकृतं पानमिति यावत् । हुतं होमादिविधिश्च ते वत्सहुते तयोरवशिष्टम् । अत्रानुप्रासः स्फुट एव । होमविधेश्च । वत्सनिपीत० इ. पा.

न्यम् ] नन्दिन्याः स्तन्यं क्षीरम्। **शुभ्रं मूर्तं** परिच्छिन्नं **यश इव।** [1] **अतितृष्णः** सन् **पपौ** ॥

**प्रातर्यथोक्तव्रतपारणान्ते प्रास्थानिकं स्वस्त्ययनं प्रयुज्य।**
**तौ दंपती स्वां प्रति राजधानीं प्रस्थापयामास वशी वसिष्ठः ॥७०॥**

**वशी वसिष्ठः प्रातः [ यथोक्तव्रतपारणान्ते ]** यथोक्तस्य पूर्वोक्तस्य व्रतस्य गोसेवारूपस्याङ्गभूता या पारणा तस्या अन्ते **प्रास्थानिकं** प्रस्थानकाले भवम्। तत्कालोचितमित्यर्थः। 'कालाट्ठञ्' इति ठञ्प्रत्ययः। 'यथाकथंचिद्गुणवृत्त्यापि काले वर्तमानात्तत्तत्प्रत्यय इष्यते।' इति वृत्तिकारः। ईयते प्राप्यतेऽनेनेत्ययनं **स्वस्त्ययनं** शुभावहमाशीर्वादं **प्रयुज्य। तौ दंपती स्वां राजधानीं** पुरीं **प्रति प्रस्थापयामास** ॥

**प्रदक्षिणीकृत्य हुतं हुताशमनन्तरं भर्तुररुन्धतीं च।**
**धेनुं सवत्सां च नृपः प्रतस्थे सन्मङ्गलोदग्रतरप्रभावः ॥ ७१ ॥**

**नृपः हुतं** तर्पितम्। **[ हुताशम् ]** हुतमश्नातीति हुताशोऽग्निः। 'कर्मण्यण्'। तं **भर्तुः** मुनेः **अनन्तरम्।** प्रदक्षिणानन्तरमित्यर्थः। **अरुन्धतीं च सवत्सां धेनुं च प्रदक्षिणीकृत्य** [2]। प्रगतो दक्षिणं प्रदक्षिणम्। 'तिष्ठद्गुप्रभृतीनि च' इत्यव्ययीभावः। ततश्च्विः। अप्रदक्षिणं प्रदक्षिणं संपद्यमानं कृत्वा प्रदक्षिणीकृत्य। **[ सन्मङ्गलोदग्रतरप्रभावः ]** सद्भिर्मङ्गलैः प्रदक्षिणाभिर्मङ्गलाचारैरुदग्रतरप्रभावः सन्। **प्रतस्थे** ॥

**श्रोत्राभिरामध्वनिना रथेन स धर्मपत्नीसहितः सहिष्णुः।**
**ययावनुद्घातसुखेन मार्गं स्वेनेव पूर्णेन मनोरथेन ॥ ७२ ॥**

**धर्मपत्नीसहितः सहिष्णुः** व्रतादिदुःखसहनशीलः **स** नृपः **श्रोत्राभिरामध्वनिना** कर्णाह्लादकरस्वनेन अनुद्घातः पाषाणादिप्रतिघातरहितः। अत एव सुखयतीति सुखः। तेन **[ अनुद्घातसुखेन ] रथेन स्वेन पूर्णेन** सफलेन **मनोरथेनेव मार्गं** अध्वानं **ययौ** [3]। मनोरथपक्षे ध्वनिः श्रुतिः। अनुद्घातः प्रतिबन्धनिवृत्तिः ॥

**तमाहितौत्सुक्यमदर्शनेन प्रजाः प्रजार्थव्रतकर्शिताङ्गम्।**
**नेत्रैः पपुस्तृप्तिमनाप्नुवद्भिर्नवोदयं नाथमिवौषधीनाम् ॥ ७३ ॥**

**अदर्शनेन** प्रवासनिमित्तेन **आहितौत्सुक्यं** जनितदर्शनोत्कण्ठम्। प्रजार्थेन संतानार्थेन व्रतेन नियमेन कर्शितं कृशीकृतमङ्गं यस्य तम् **[ प्रजार्थव्रतकर्शिता-**

१ 'यशसि धवलता वर्ण्यते हासकीर्त्योः' इति कविसमयः। तेन हासस्य धवलत्वेन वर्णनम्। २ 'प्रतिबध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रमः' इति हेतोः सर्वान्प्रदक्षिणीचकारेति भावः। 'सतां मङ्गलैः प्रीतवह्निगोब्राह्मणप्रदक्षिणीकरणैः' इति सु०। 'मङ्गलद्रव्यैर्वा' इति चा.। 'उदग्रतरो महीयान्प्रभावः पौरुषं यस्य' इति च चा.। 'अनन्तरं भर्तुः' इत्यत्र 'ततश्च हातारम्' इति, 'सन्मङ्गलोदग्रतरप्रभावः' इत्यत्र 'सन्मङ्गलोदग्रतरानुभावः' इति व. सु. पठतः। ३ उत्प्रेक्षालङ्कारः। ४ तोत्कण्ठं इ. पा. ५ प्रजार्थं व्रत० इ. पा.

ङ्गम् ] **नवोदयं** नवाभ्युदयं **प्रजाः तृप्तिमनाप्नुवद्भिः** अतितृष्णुभिः **नेत्रैः । ओषधीनां नाथं** सोमम् **इव । तं** राजानं **पपुः** अत्यास्थया ददृशुरित्यर्थः । चन्द्रपक्षे अदर्शनं कलाक्षयनिमित्तम् । प्रजार्थे लोकहितार्थे व्रतं देवताभ्यः कलोदाननियमः । 'तं च सोमं पपुर्देवाः पर्यायेणानुपूर्वशः ।' इति व्यासः । उदय आविर्भावः । अन्यत्समानम् ॥

**पुरन्दरश्रीः पुरमुत्पताकं प्रविश्य पौरैरभिनन्द्यमानः ।**
**भुजे भुजङ्गेन्द्रसमानसारे भूयः स भूमेर्धुरमाससञ्ज ॥ ७४ ॥**

पुरः पुरीरसुराणां दारयतीति पुरन्दरः शक्रः । 'पूःसर्वयोर्दारिसहोः' इति खच्प्रत्ययः । 'वाचंयमपुरन्दरौ च' इति मुमागमो निपातितः । तस्य श्रीरिव श्रीर्यस्य सः [ **पुरन्दरश्रीः** ] । **स** नृपः **पौरैरभिनन्द्यमानः । उत्पताकम्** उच्छ्रितध्वजम् । 'पताका वैजयन्ती स्यात्केतनं ध्वजमस्त्रियाम् ।' इत्यमरः । **पुरं प्रविश्य** भुजङ्गेन्द्रेण समानसारे तुल्यबले [ **भुजङ्गेन्द्रसमानसारे** ] । 'सारो बले स्थिरांशे च न्याय्ये क्लीबं वरे त्रिषु ।' इत्यमरः । **भुजे भूयः भूमेर्धुरमाससञ्ज** स्थापितवान् ॥

**अथ नयनसमुत्थं ज्योतिरत्रेरिव द्यौः**
**सुरसरिदिव तेजो वह्निनिष्ठ्यूतमैशम् ।**
**नरपतिकुलभूत्यै गर्भमाधत्त राज्ञी**
**गुरुभिरभिनिविष्टं लोकपालानुभावैः ॥ ७५ ॥**

**अथ द्यौः** सुरवर्त्म । 'द्यौः स्वर्गसुरवर्त्मनोः' इति विश्वः । **अत्रेः** महर्षेर्नयनयोः समुत्थमुत्पन्नं **नयनसमुत्थम्** । 'आतश्चोपसर्गे' इति कप्रत्ययः । **ज्योतिरिव** । चन्द्रमिवेत्यर्थः । 'ऋक्षेशः स्यादत्रिनेत्रप्रसूतः' इति हलायुधः । चन्द्रस्यात्रिनेत्रोद्भूतत्वमुक्तं हरिवंशे—'नेत्राभ्यां वारि सुस्राव दशधा द्योतयद्दिशः । तद्गर्भदिविधिना हृष्टा दिशो देव्यो दधुस्तदा ॥ समेत्य धारयामासुर्न च ताः समशक्नुवन् । स ताभ्यः सहसैवाथ दिग्भ्यो गर्भः प्रभान्वितः ॥ पपात भासयँल्लोकाञ्छीतांशुः सर्वभावनः' । इति । **सुरसरिद्** गङ्गा [ **वह्निनिष्ठ्यूतम्** ] वह्निना निष्ठ्यूतं विक्षिप्तम् । 'च्छ्वोः शूडनुनासिके च' इत्यनेन निपूर्वात्ष्ठीवतेर्वकारस्य ऊठ् । 'नुन्ननुत्तास्तनिष्ठ्यूताविद्धक्षिप्तेरिताः समाः ।' इत्यमरः । **ऐशं तेजः** स्कन्दम् **इव** । अत्र रामायणम्—'ते गत्वा पर्वतं राम कैलासं धातुमण्डितम् । अग्निं नियोजयामासुः पुत्रार्थं सर्वदेवताः ॥ देवकार्यमिदं देव समाधत्स्व हुताशन । शैलपुत्र्यां महातेजो गङ्गायां तेज उत्सृज ॥ देवतानां प्रतिज्ञाय गङ्गामभ्येत्य पावकः । गर्भं धारय वै देवि देवतानामिदं प्रियम् ॥ इत्येतद्वचनं श्रुत्वा दिव्यं रूपमधारयत् । स तस्या महिमां दृष्ट्वा समन्तादवकीर्य च ॥ समन्ततस्तु तां देवीमभ्यषिञ्चत पावकः । सर्वस्रोतांसि पूर्णानि गङ्गाया रघुनन्दन ॥' इति । **राज्ञी**

१ उक्तं च देवीपुराणे—कलाः षोडश सोमस्य शुक्ले वर्धयते रविः । अमृतेनामृतं कृष्णे पीयते देवतैः क्रमात् । विशेषस्तूक्तः पञ्चमसर्गे १६ श्लो. टिप्पण्याम् । चन्द्रो हि उदितः सर्वौषधीः स्वकिरणैः संवर्धयति । अतः स ओषधीनाथ इत्युच्यते ।

सुदक्षिणा नरपतेर्दिलीपस्य कुलभूत्यै [ **नरपतिकुलभूत्यै** ] संततिलक्षणायै **गुरुभिः** महद्भिः लोकपालानामनुभावैः [ **लोकपालानुभावैः** ] तेजोभिः **अभिनिविष्टम्** अनुप्रविष्टं **गर्भमाधत्त** । दधावित्यर्थः । अत्र मनुः—' अष्टानां लोकपालानां वपुर्धारयते नृपः । ' इति । अत्र ' आधत्त ' इत्यनेन स्त्रीकर्तृकधारणामात्रमुच्यते । तथा मन्त्रे च दृश्यते—' यथेयं पृथिवी मह्युत्ताना गर्भमादधे । एवं त्वं गर्भमाधेहि दशमे मासि सूतवे ॥ ' इत्याश्वलायनानां सीमन्तमन्त्रे स्त्रीव्यापारधारण आधानशब्दप्रयोगदर्शनादिति । मालिनीवृत्तमेतत् । तदुक्तम्—'ननमयययुतेयं मालिनी भोगिलोकैः । ' इति लक्षणात् ॥

इति महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया संजीविनीसमाख्यया व्याख्यया समेतो महाकविश्रीकालिदासकृतौ रघुवंशे महाकाव्ये
**नन्दिनीवरप्रदानो नाम द्वितीयः सर्गः ।**

---

## तृतीयः सर्गः ।



[1]उपाधिगम्योऽप्यनुपाधिगम्यः समावलोक्योऽप्यसमावलोक्यः ।
भवोऽपि योऽभूदभवः शिवोऽयं जगत्यपायादपि नः स पायात् ॥

' राज्ञी गर्भमाधत्त ' ( २।७५ ) इत्युक्तम् । संप्रति गर्भलक्षणानि वर्णयितुं प्रस्तौति—

**[3]अथेप्सितं भर्तुरुपस्थितोदयं सखीजनोद्वीक्षणकौमुदीमुखम् ।**
**निदानमिक्ष्वाकुकुलस्य संततेः सुदक्षिणा दौर्हृदलक्षणं दधौ ॥ १ ॥**

**अथ** गर्भधारणानन्तरं **सुदक्षिणा** । **उप[4]स्थितोदयं** प्राप्तकालं **भर्तुः** दिलीपस्य **ईप्सितं** मनोरथम् । भावे क्तः । पुनः [ **सखीजनोद्वीक्षणकौमुदीमुखम्** ] सखी-

---

१ इन्द्रानिलयमार्काणामग्नेश्च वरुणस्य च । चन्द्रवित्तेशयोश्चैव मात्रा निर्हृत्य शाश्वतीः ॥ यस्मादेषां सुरेन्द्राणां मात्राभ्यो निर्मितो नृपः । तस्मादभिभवत्येष सर्वभूतानि तेजसा ॥ इति च सतमाध्याये मनुः ॥ २ उपाधिना देहादिना गम्यो दृग्गोचरः अनुपाधेरतीन्द्रियत्वात् । एवंभूतोप्यनुपाधिगम्य इति विरोधः । अनुपाधिभिर्निरस्ताविद्यायुपाधिभिरेव गम्यो निर्गुणत्वेन ज्ञातुं शक्य इति परिहारः । समैः समाहितमतिभिरवलोकयितुं समाधौ प्रत्यक्षीकर्तुं शक्यः । तादृशोप्यसमावलोक्य इति विरोधः । परिहारपक्षे असमानि विषमाणि त्रीणीति यावदवलोक्यानि नेत्राणि यस्य । भावे ल्यत् । यद्वा असममपर्याप्तमवलोक्यं दृग्विषयीभूतं यस्य स तथा इति परिहारः । भवति सर्वमिति भवो विश्वात्मकः । तथाभूतोप्यभव इति विरोधः । परिहारस्तु नास्ति भवो यस्य सोऽभवोऽजोऽसंगो वा । नास्ति भवो यस्मात्स तथा संसारस्य विच्छेदक इति वा । इत्यर्थात् । स तादृशः शिवो जगति नः अपायात् पायात् ।

३ ततो विशांपत्युरनन्यसन्ततेर्मनोरथं किञ्चिदिवोदयोन्मुखम् ।
अनन्यसौहार्दरसस्य दोहदं प्रिया प्रपेदे प्रकृतिप्रियंवदा ॥

इति दिनकरः संपूर्णश्लोकमन्यथा पठति ।

४ उपस्थितः प्राप्त उदयः पुत्रोत्पत्तिलक्षणो यस्य यस्माद्वा । इति चा० ।

जनस्योद्वीक्षणानां दृष्टीनां कौमुदीमुखं चन्द्रिकाप्रादुर्भावम् । यद्वा कौमुदी नाम दीपोत्सवतिथिः । तदुक्तं भविष्योत्तरे—'कौ मोदन्ते जना यस्यां तेनासौ कौमुदी मता ।' इति । तस्या मुखं प्रारम्भम् । अत एव 'सखीजनोद्वीक्षणकौमुदीमहम्' इति पाठं केचित्पठन्ति । **इक्ष्वाकुकुलस्य संततेः** अविच्छेदस्य **निदानं** मूलकारणम् । 'निदानं त्वादिकारणम्' इत्यमरः । एवंविधं **दौर्हृदलक्षणं** गर्भचिह्नं वक्ष्यमाणं **दधौ** । स्वहृदयेन गर्भहृदयेन च द्विहृदया गर्भिणी । यथाह वाग्भटः—'मातृजन्यस्य हृदयं मातुश्च हृदयं च तत् । संबद्धं तेन गर्भिण्याः श्रेष्ठं श्रद्धाभिमाननम् ॥' इति । तत्संबन्धित्वाद्गर्भो दौर्हृदमित्युच्यते । सा च तद्योगाद्दौर्हृदिनीति । तदुक्तं संग्रहे—'द्विहृदयां नारीं दौर्हृदिनीमाचक्षते' इति । अत्र दौर्हृदलक्षणस्येप्सितत्वेन कौमुदीमुखत्वेन च निरूपणाद्रूपकालंकारः । अस्मिन्सर्गे वंशस्थं वृत्तम्—'जतौ तु वंशस्थमुदीरितं जरौ ।' इति लक्षणात् ॥

संप्रति क्षामताख्यं गर्भलक्षणं वर्णयति—

**शरीरसादादसमग्रभूषणा मुखेन सालक्ष्यत लोध्रपाण्डुना ।**
**तनुप्रकाशेन विचेयतारका प्रभातकल्पा शशिनेव शर्वरी ॥ २ ॥**

शरीरस्य सादात्कार्श्यात् [ **शरीरसादात्** ] **असमग्रभूषणा** परिमिताभरणा लोध्रपुष्पेणेव पाण्डुना [ **लोध्रपाण्डुना** ] **मुखेन** उपलक्षिता **सा** सुदक्षिणा । [ **विचेयतारका** ] विचेयाः मृग्यास्तारका यस्यां सा तथोक्ता । विरलनक्षत्रेत्यर्थः । **तनुप्रकाशेन** अल्पकान्तिना **शशिना** उपलक्षितेषदसमाप्तप्रभाता **प्रभातकल्पा** । प्रभातादीषदूनेत्यर्थः । 'तसिलादिष्वाकृत्वसुचः' इति प्रभातशब्दस्य पुंवद्भावः । **शर्वरी** रात्रिः **इव** । **अलक्ष्यत** । शरीरसादादिगर्भलक्षणमाह वाग्भटः—'क्षामता गरिमा कुक्षेर्मूर्च्छा छर्दिररोचकम् । जृम्भा प्रसेकः सदनं रोमराज्याः प्रकाशनम् ॥' इति ॥

**तदाननं मृत्सुरभि क्षितीश्वरो रहस्युपाघ्राय न तृप्तिमाययौ ।**
**करीव सिक्तं पृषतैः पयोमुचां शुचिव्यपाये वनराजिपल्वलम् ॥ ३ ॥**

**क्षितीश्वरो रहसि मृत्सुरभि** मृदा सुगन्धि तस्या आननं **तदाननं** सुदक्षिणामुखम् **उपाघ्राय तृप्तिं नाययौ** । कः कमिव । **शुचिव्यपाये** ग्रीष्मावसाने । 'शुचिः शुद्धेऽनुपहते शृङ्गाराषाढयोः सिते । ग्रीष्मे हुतवहेऽपि स्यादुपधाशुद्धमन्त्रिणि ॥' इति विश्वः । **पयोमुचां** मेघानां **पृषतैः** बिन्दुभिः । 'पृषन्ति बिन्दुपृषताः' इत्यमरः । **सिक्तम्** उक्षितं [ **वनराजिपल्वलम्** ] वनराज्याः पल्वलम् उपाघ्राय **करी** गज

---

१ इक्ष्वाकुर्नाम वैवस्वतमनोः पुत्रः । तदुत्पत्तिर्भागवते—'क्षवतस्तु मनोर्जज्ञ इक्ष्वाकुर्घ्राणतः सुतः ।' इति ।

२ **मुखेन सा केतकपत्रपाण्डुना कृशाङ्गयष्टिः परिमेयभूषणा ।**
**स्थिताल्पतारां करुणेन्दुमण्डलां विभातकल्पां रजनीं व्यडम्बयत ॥**

इति वल्लभसुमत्यादयः पठन्ति । ३ अर्हे कृत्यतृचश्चेति योग्यतायामचो यत् । ४ 'रहःसमाघ्राय' इति ब. चा. पठतः । ५ 'सरसि जलपाते सौरभ्यमिति पल्वलोक्तिः' इति चा० ।

इव । अत्र *रिवनराजिपल्वलानां कान्तकामिनीवदनसमाधिरनुसंधेयः । गर्भिणीनां मृद्भक्षणं लोकप्रसिद्धमेव । एतेन दोहदाख्यं गर्भलक्षणमुच्यते ॥

दोहदलक्षणे मृद्भक्षणे हेत्वन्तरमुत्प्रेक्षते—

**दिवं मरुत्वानिव भोक्ष्यते भुवं दिगन्तविश्रान्तरथो हि तत्सुतः ।**
**अतोऽभिलाषे प्रथमं तथाविधे मनो बबन्धान्यरसान्विलङ्घ्य सा ॥४॥**

हि यस्माद् **दिगन्तविश्रान्तरथः** चक्रवर्ती तस्याः सुतः **तत्सुतः मरुत्वान्** इन्द्रः । 'इन्द्रो मरुत्वान्मघवा' इत्यमरः । **दिवं** स्वर्गम् **इव** । **भुवं भोक्ष्यते** । 'भुजोऽनवने' इत्यात्मनेपदम् । **अतः प्रथमं सा** सुदक्षिणा **तथाविधे** भूविकारे मृद्रूपे । अभिलष्यत इत्यभिलाषो भोग्यवस्तु तस्मिन् [ **अभिलाषे** ] । कर्मणि घञ्प्रत्ययः । रस्यन्ते स्वाद्यन्त इति रसा भोग्यार्थाः । अन्ये च ते रसाश्च तान् [ **अन्यरसान्** ] **विलङ्घ्य** विहाय **मनः बबन्ध** । विदधावित्यर्थः । दोहदहेतुकस्य मृद्भक्षणस्य पुत्रभूभोगसूचनार्थत्वमुत्प्रेक्षते ॥

**न मे ह्रिया शंसति किंचिदीप्सितं स्पृहावती वस्तुषु केषु मागधी ।**
**इति स्म पृच्छत्यनुवेलमादृतः प्रियासखीरुत्तरकोसलेश्वरः ॥ ५ ॥**

मगधस्य राज्ञोऽपत्यं स्त्री **मागधी** सुदक्षिणा । 'द्व्यञ्मगधकलिङ्गसूरमसादण्' इत्यण्प्रत्ययः । **ह्रिया किंचित्** किमपि **ईप्सितम्** इष्टं **मे** मह्यं **न शंसति** नाचष्टे । **केषु वस्तुषु स्पृहावती इत्यनुवेलम्** अनुक्षणम् **आदृतः** आदृतवान् । कर्तरि क्तः । 'आदृतौ सादरार्चितौ' इत्यमरः । [ **प्रियासखीः** ] प्रियायाः सखीः सहचरीः **उत्तरकोसलेश्वरः** दिलीपः **पृच्छति स्म** पप्रच्छ । 'लट् स्मे' इत्यनेन भूतार्थे लट् । सखीनां विश्रम्भभूमित्वादिति भावः ॥

**उपेत्य सा दोहददुःखशीलतां यदेव वव्रे तदपश्यदाहृतम् ।**
**न हीष्टमस्य त्रिदिवेऽपि भूपतेरभूदनासाद्यमधिज्यधन्वनः ॥ ६ ॥**

दोहदं गर्भिणीमनोरथः । 'दोहदं दौहृदं श्रद्धा लालसं च समं स्मृतम् ।' इति हलायुधः । **सा** सुदक्षिणा । [ **दोहददुःखशीलतां** ] दोहदेन गर्भिणीमनोरथेन दुःखशीलतां दुःखस्वभावताम् **उपेत्य** प्राप्य **यद्** वस्तु **वव्रे** आचकाङ्क्ष **तद् आहृतम्** आनीतम् । भर्त्रेति शेषः । **अपश्यदेव** । अलभतेत्यर्थः । कुतः । **हि** यस्माद् **अस्य भूपतेः त्रिदिवेऽपि** स्वर्गेऽपि **इष्टं** वस्तु **अनासाद्यम्** अनवाप्यं **नाभूत्** । किं याच्ञया

---

१ 'भुवम्' इत्यत्र 'महान्' इति 'तत्सुतः' इत्यत्र 'मत्सुतः' इति केचित्पठन्ति । २ त्रिदिवे—त्रयो ब्रह्मविष्णुरुद्रा दीव्यन्त्यत्रेति त्रिदिवः । हलश्चेति घञ् । संज्ञापूर्वकत्वान्न गुणः । यद्वा सात्त्विकराजसतामसभेदेन त्रिविधा दीव्यन्ति व्यवहरन्ति प्रकाशन्ते वा । घञर्थे कविधानम् । वृत्तिविषये संख्याशब्दस्य पूरणार्थत्वम् । अपिशब्दबलेन का कथा मर्त्यलोके इति गम्यते । ३ 'अस्य' इत्यत्र 'अस्याः' इति 'अभूदनासाद्यम्' इत्यत्र 'बभूव दुष्प्राप्यम्' इति चा० आदयः पठन्ति ।

नेत्याह-**अधिज्यधन्वनः** इति । न हि वीरपत्नीनामलभ्यं नाम किंचिदस्तीति भावः । अत्र वाग्भटः-'पादशोफो विदाहोन्ते श्रद्धा च विविधात्मिका' इति । एतच्च पत्नीमनोरथपूरणाकरणे दृष्टदोषसंभवात् । न तु राज्ञः प्रीतिलौल्यात् । तदुक्तम्—'देयमप्यहितं तस्यै हिताय हितमल्पकम् । श्रद्धाविघाते गर्भस्य विकृतिश्च्युतिरेव वा ॥' अन्यत्र च—'दोहदस्याप्रदानेन गर्भो दोषमवाप्नुयात् ।' इति ॥

**क्रमेण निस्तीर्य च दोहदव्यथां प्रचीयमानावयवा रराज सा ।**
**पुराणपत्रापगमादनन्तरं लतेव सनंद्धमनोज्ञपल्लवा ॥ ७ ॥**

**सा** सुदक्षिणा **क्रमेण दोहदव्यथां च निस्तीर्य प्रचीयमानावयवा** पुष्यमाणावयवा सती । पुराणपत्राणामपगमान्नाशात [ **पुराणपत्रापगमात्** ] **अनन्तरं** संनद्धाः सञ्जाताः प्रत्यग्रत्वान्मनोज्ञाः पल्लवा यस्याः सा [ **संनद्धमनोज्ञपल्लवा** ] **लतेव रराज** ॥

लक्षणान्तरं वर्णयति—

**दिनेषु गच्छत्सु नितान्तपीवरं तदीयमानीलमुखं स्तनद्वयम् ।**
**तिरश्चकार भ्रमराभिलीनयोः सुजातयोः पङ्कजकोशयोः श्रियम् ॥ ८ ॥**

**दिनेषु** दोहददिवसेषु **गच्छत्सु** सत्सु **नितान्तपीवरम्** अतिस्थूलम् । [ **आनीलमुखम्** ] आ समन्तान्नीले मुखे चूचुके यस्य तत् । **तदीयं स्तनद्वयम्** [ **भ्रमराभिलीनयोः** ] भ्रमरैरभिलीनयोरभिव्याप्तयोः **सुजातयोः** सुन्दरयोः **पङ्कजकोशयोः** पद्ममुकुलयोः **श्रियं तिरश्चकार** । अत्र वाग्भटः—'अम्लेष्टता स्तनौ पीनौ श्वेतान्तौ कृष्णचूचुकौ' इति ॥

**निधानगर्भामिव सागराम्बरां शमीमिवाभ्यन्तरलीनपावकाम् ।**
**नदीमिवान्तःसलिलां सरस्वतीं नृपः ससत्त्वां महिषीममन्यत ॥ ९ ॥**

**नृपः ससत्त्वाम्** आपन्नसत्त्वाम् । गर्भिणीमित्यर्थः । 'आपन्नसत्त्वा स्याद्गुर्विण्यन्तर्वत्नी च गर्भिणी ।' इत्यमरः । **महिषीम्** । निधानं निधिर्गर्भे यस्यास्तां [ **निधानगर्भाम्** ] **सागराम्बरां** समुद्रवसनाम् [ **इव** ] । भूमिमिवेत्यर्थः । 'भूतधात्री रत्नगर्भा विपुला सागराम्बरा ।' इति कोशः । अभ्यन्तरे लीनः पावको यस्यास्तां [ **अभ्यन्त-**

---

१ गर्भिण्यास्तत्तदिच्छायां विशेषेण प्रयुज्यते। दोहदस्या० इ. संपूर्णः श्लोकः। २ उपोढगात्रोपचया इति, सन्नद्धेत्यत्र सम्बद्धेति च पा०. ३ 'तामङ्कमारोप्य कृशाङ्गयष्टिं वर्णान्तराक्रान्तपयोधराग्राम् ।' इति [ १४ सर्गे ]। सुजातयोः-'सुजातं सुन्दरं प्रोक्तं सत्यजातं च वस्तुनि ।' इति विक्रमः। तिरश्चकार-अत्रोपमानादप्युपमेयस्य शोभाधिक्यवर्णनात् व्यतिरेकालंकारः। 'उपमानाद्यदन्यस्य व्यतिरेकः स एव सः ।' इति तल्लक्षणम्। नितान्तपीवरमित्यत्र 'मधूकपाण्डुरम्' 'आनील-' इत्यत्र 'आश्याम-' 'भ्रमराभिलीनयोः' इत्यत्र च 'भ्रमरावलीढयोः' इति पाठान्तराणि । 'दिनेषु गच्छत्सु मधूकपाण्डुरं तदीयमाश्याममुखं स्तनद्वयम् । समुद्रयोर्वारणदन्तकोषयोर्बिभार कान्तिं गवलापिधानयोः ॥' इत्यपि केचित्पठन्ति ।

**रलीनपावकाम्** ] **शमीमिव**। शमीतरौ वह्निरस्तीत्यत्र लिङ्गं शमीगर्भादग्निं जनयतीति। **अन्तःसलिलाम्** अन्तर्गतजलां **सरस्वतीं नदीमिव**। **अमन्यत**। एतेन गर्भस्य भाग्यवत्त्वतेजस्वित्वपावनत्वानि विवक्षितानि॥

**प्रियानुरागस्य मनःसमुन्नतेर्भुजार्जितानां च दिगन्तसंपदाम्।**
**यथाक्रमं पुंसवनादिकाः क्रिया धृतेश्च धीरः सदृशीर्व्यधत्त सः॥१०॥**

**धीरः स** राजा प्रियायामनुरागस्य स्नेहस्य [ **प्रियानुरागस्य** ] मनसः समुन्नतेरौदार्यस्य [ **मनःसमुन्नतेः** ] [ **च** ]। भुजेन भुजबलेन करेण वार्जितानाम्। न तु वाणिज्यादिना [ **भुजार्जितानाम्** ] दिगन्तेषु संपदाम् [ **दिगन्तसंपदाम्** ]। **धृतेः** पुत्रो मे भविष्यतीति संतोषस्य **च**। 'धृतिर्योगान्तरे धैर्ये धारणाध्वरतुष्टिषु।' इति विश्वः। **सदृशीः** अनुरूपाः। पुमान्सूयतेऽनेनेति पुंसवनम्। तदादिर्यासां ताः [ **पुंसवनादिकाः** ] **क्रियाः यथाक्रमं** क्रममनतिक्रम्य **व्यधत्त** कृतवान्। आदिशब्देनानवलोभनसीमन्तोन्नयने गृह्येते। अत्र मासि द्वितीये तृतीये वा पुंसवनम्। यदाह—'पुंसा नक्षत्रेण चन्द्रमा युक्तः स्यात्।' इति पारस्करः। 'चतुर्थेऽनवलोभनम्' इत्याश्वलायनः। 'षष्ठेऽष्टमे वा सीमन्तोन्नयनम्' इति याज्ञवल्क्यः॥

**सुरेन्द्रमात्राश्रितगर्भगौरवात्प्रयत्नमुक्तासनया गृहागतः।**
**तयोपचाराञ्जलिखिन्नहस्तया ननन्द पारिप्लवनेत्रया नृपः॥ ११॥**

**गृहागतः नृपः** सुरेन्द्राणां लोकपालानां मात्राभिरंशैराश्रितस्यानुप्रविष्टस्य गर्भस्य गौरवाद्भारात् [ **सुरेन्द्रमात्राश्रितगर्भगौरवात्** ] प्रयत्नेन मुक्तासनया [ **प्रयत्नमुक्ता-**

---

१ पुरा किल तारकवधार्थं सेनान्यं स्रष्टुकामा देवा ब्रह्मोपदेशादितस्ततोऽग्निमन्विष्यन्तस्तं शमीगर्भे ददृशुः देवकार्ये च नियोजयामासुः। ततः प्रभृति शमीगर्भ एवाग्नेश्चिरवासस्थानमभूत्। इत्युक्त्वा निसृतोऽश्वत्थादग्निर्वारणसूचितः। प्रविवेश शमीगर्भमथ वह्निः सुषुप्सया॥ ...इत्युक्त्वा तं शमीगर्भं वह्निमालक्ष्य देवताः। तदेवायतनं चक्रुः पुण्यं सर्वक्रियास्वपि॥ इत्यादि भारतकथात्रानुसन्धेया। विशेषस्त्वनुशासनपर्वणि पञ्चाशीतितमेऽध्याये द्रष्टव्यः। शमीगर्भस्थोऽग्निर्मन्थनादेव व्यज्यते इति सुप्रसिद्धमेतत्। अनुरूपभावः शाकुन्तले—'दुष्यन्तेनाहितं तेजो दधानां भूतये भुवः। अवेहि तनयां ब्रह्मन्नग्निगर्भां शमीमिव॥ इति। नदीति—'म्लेच्छदेशेषु सा ह्यन्तर्धाय भूयः पुण्यप्रदेशेषूद्भवति' इति वल्लभः। सरस्वत्या ऊर्ध्वं वालुकाः पातालान्तर्गतं जलमिति वार्तामात्रम्।' इति चा.। अत्रोपमेयभूतायाः ससत्त्वाया महिष्या एकस्या एव बहूपमानत्वान्मालोपमालंकारः। 'मालोपमा यदेकस्योपमानं बहु दृश्यते।' इति साहित्यदर्पणोक्तेः।

२ पुंसवनं नाम सुपुत्रजननार्थं गर्भिण्याः संस्कारविशेषः। स च तृतीयमासोपक्रमे शुद्धदिने दंपतीभ्यां करणीयः। यदाह शौनकः—'व्यक्ते गर्भे तृतीये तु मासे पुंसवनं भवेत्। गर्भेऽव्यक्ते तृतीये चेच्चतुर्थे मासि वा भवेत्॥' इति। वसिष्ठश्च—'कुर्यात्पुंसवनं प्रसिद्धविषये गर्भे तृतीयेऽथवा। मासि स्फीततनौ तुषारकिरणे पुष्येऽथवा वैष्णवे'॥ इति। अस्मिन्विधौ पतिः पत्न्याः पृष्ठदेशे स्थितोऽव्यवहितं तस्या नाभिदेशं स्पृशन् इमं मन्त्रं पठति—'पुमांसौ मित्रावरुणौ पुमांसावश्विनावुभौ। पुमानग्निश्च वायुश्च पुमान्गर्भस्तवोदरे'॥ अन्यं च—'पुमानग्निः पुमानिन्द्रः पुमान्देवो बृहस्पतिः। पुमांसं पुत्रं विन्दस्व तं पुमाननुजायताम्'॥ इति। 'धृतेः' इत्यत्र 'श्रुतेः' इति दिनकरस्य पाठः। तत्र श्रुतेः श्रुतिज्ञानस्येत्यर्थः।

**सनया** ]। आसनादुत्थितयेत्यर्थः। उपचारस्याञ्जलावञ्जलिकरणे खिन्नहस्तया [ **उपचाराञ्जलिखिन्नहस्तया** ] **पारिप्लवनेत्रया** तरलाक्ष्या। 'चञ्चलं तरलं चैव पारिप्लवपरिप्लवे।' इत्यमरः। **तया** सुदक्षिणया **ननन्द**। 'सुरेन्द्रमात्राश्रित–' इत्यत्र मनुः—'अष्टाभिश्च सुरेन्द्राणां मात्राभिर्निर्मितो नृपः।' इति ॥

**कुमारभृत्याकुशलैरनुष्ठिते भिषग्भिराप्तैरथ गर्भभर्मणि।**
**पतिः प्रतीतः प्रसवोन्मुखीं प्रियां ददर्श काले दिवमभ्रितामिव ॥ १२ ॥**

**अथ**। कुमारभृत्या बालचिकित्सा। 'संज्ञायां समजनिषद–' इत्यादिना क्यप्। तस्यां कुशलैः कृतिभिः [ **कुमारभृत्याकुशलैः** ] 'कृती कुशलः' इत्यमरः। **आप्तैः** हितैः **भिषग्भिः** वैद्यैः। 'भिषग्वैद्यौ चिकित्सके' इत्यमरः। गर्भस्य भर्मणि भरणे [ **गर्भभर्मणि** ]। 'भरणे पोषणे भर्म' इति हैमः। 'भृतिर्भर्म' इति शाश्वतः। भृञो मनिच्प्रत्ययः। 'गर्भकर्मणि' इति पाठे गर्भाधानप्रतीतावौचित्यभङ्गः। **अनुष्ठिते** कृते सति। **काले** दशमे मासि। अन्यत्र ग्रीष्मावसाने। प्रसवस्य गर्भमोचनस्योन्मुखीं [ **प्रसवोन्मुखीम्** ]। आसन्नप्रसवामित्यर्थः। 'स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचने।' इत्यमरः। **प्रियां** भार्याम्। अभ्राण्यस्याः सञ्जातान्यभ्रिता ताम् [ **अभ्रिताम्** ] 'तदस्य सञ्जातं तारकादिभ्य इतच्।' इतीतच्प्रत्ययः। **दिवमिव**। **पतिः** भर्ता **प्रतीतः** हृष्टः सन्। 'ख्याते हृष्टे प्रतीतः' इत्यमरः। **ददर्श** दृष्टवान्।

**ग्रहैस्ततः पञ्चभिरुच्चसंश्रयैरसूर्यगैः सूचितभाग्यसंपदम्।**
**असूत पुत्रं समये शचीसमा त्रिसाधना शक्तिरिवार्थमक्षयम् ॥ १३ ॥**

**ततः** शच्येन्द्राण्या समा [ **शचीसमा** ]। 'पुलोमजा शचीन्द्राणी' इत्यमरः। सा सुदक्षिणा **समये** प्रसूतिकाले सति। दशमे मासीत्यर्थः। 'दशमे मासि जायते' इति श्रुतेः। **उच्चसंश्रयैः** उच्चसंस्थैस्तुङ्गस्थानगैः **असूर्यगैः** अनस्तमितैः कैश्चिद्यथासंभवं

---

१ तदुक्तं भावप्रकाशे– आक्षिपक्ष्माणि चाप्यस्याः संमील्यन्ते विशेषतः। इति। २ कुमारभृत्या नामाष्टाङ्गस्यायुर्वेदस्याङ्गविशेषः। तदुक्तं सुश्रुते–'शल्यं शालाक्यं कायचिकित्सा भूतविद्या कौमारभृत्यं अगदतन्त्रं रसायनतन्त्रं वाजीकरणतन्त्रमिति। कौमारभरणं नाम कुमारभरणधात्रीशोधनार्थं दुष्टस्तन्यग्रहसमुत्थानां च व्याधीनामुपशमनार्थम्'। इति। 'अजातेऽपि कुमारे कुमारभृत्याप्रयोगो न दोषाय, कुमारभृत्या गर्भभर्मणि प्रजने च क्रियते, इति कौटिल्यवचनात्'। इति चा.। ३ 'गर्भभर्मणि' इत्यत्र 'गर्भकर्मणि' 'गर्भवेश्मनि' 'गर्भरक्षणे' इति पाठान्तराणि। 'पतिः प्रतीतः प्रसवोन्मुखीम्' इत्यत्र 'निरत्ययाय प्रसवाय तस्थुषीम्' इति पाठान्तरं चारित्रवर्धनः समुद्धरति। ४ अत्र चारित्रवर्धनव्याख्या यथा–ग्रहाणां द्विविधमुच्चत्वं राशिकृतं भागकृतं च। तत्र प्रथमराशौ सूर्यस्योच्चता दशभागेषु। वृषे शीतगोस्त्रिषु भागेषु हरौ कुजस्याष्टाविंशेषु। कन्यायां बुधस्य पञ्चदशसु भागेषु। कर्के गुरोः पञ्चसु भागेषु। मीने शुक्रस्य सप्तविंशतिभागेषु। तुलायां शनेर्विंशतिभागेषु ॥ असूर्यगैः–सर्वे ग्रहाः सूर्यराशिगता अस्तमिता उच्यन्ते। उक्तं च 'क्रूराक्रान्तः क्रूरगतः क्रूरदृष्टस्तु यो ग्रहः। विरश्मितां प्रपन्नश्च स विनष्टो बुधैः स्मृतः ॥' इति। पञ्चभिः सूचितभाग्यसम्पदम्–[ एकेन ग्रहेण सुखी द्वाभ्यां श्रेष्ठः त्रिभिर्नृपतुल्यश्चतुर्भिर्नृपः पञ्चभिर्देवतुल्यः' इति भाग्यसम्पत्। इति च ]

**पञ्चभिः ग्रहैः** सूचिता भाग्यसंपद्यस्य तं [ **सूचितभाग्यसंपदम्** ] **पुत्रम्** । त्रीणि प्रभावमन्त्रोत्साहात्मकानि साधनान्युत्पादकानि यस्याः सा **त्रिसाधना शक्तिः** । 'शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजाः ।' इत्यमरः । **अक्षयमर्थमिव** । **असूत** । 'षूङ् प्राणिगर्भविमोचने' इत्यात्मनेपदिषु पठ्यते । तस्माद्धातोः कर्तरि लङ् । अत्रेदमनुसंधेयम्—'अजवृषभमृगाङ्गनाकुलीरा झषवणिजौ च दिवाकरादितुङ्गाः । दशशिखिमनुयुक्तिथीन्द्रियांशैस्त्रिनवकविंशतिभिश्च तेऽस्तनीचाः ॥' इति । सूर्यादीनां सप्तानां ग्रहाणां मेषवृषभादयो राशयः श्लोकोक्तक्रमविशिष्टा उच्चस्थानानि । स्वस्वतुङ्गापेक्षया सप्तमस्थानानि च नीचानि । तत्रोच्चेष्वपि दशमादयो राशित्रिंशांशा यथाक्रममुच्चेषु परमोच्चा नीचेषु परमनीचा इति जातकश्लोकार्थः । अत्रांशस्त्रिंशो भागः । यथाह नारदः—'त्रिंशद्भागात्मकं लग्नम्' इति । सूर्यप्रत्यासत्तिर्ग्रहाणामस्तमयो नाम । तदुक्तं लघुजातके—'रविणास्तमयो योगो वियोगस्तूदयो भवेत् ।' इति । ते च स्वोच्चस्थाः फलन्ति नास्तगा नापि नीचगाः । तदुक्तं राजमृगाङ्के—'स्वोच्चे पूर्णं स्वर्क्षकेऽर्धं सुहृद्भे पादं द्विड्भेऽल्पं शुभं खेचरेन्द्रः । नीचस्थायी नास्तगो वा न किंचित्पादं नूनं स्वत्रिकोणे ददाति ॥' इति । तदिदमाह कविरुच्चसंस्थितैरसूर्यगैरिति च । एवं सति यस्य जन्मकाले पञ्चप्रभृतयो ग्रहाः स्वोच्चस्थाः स एव तुङ्गो भवति । तदुक्तं कूटस्थीये—'सुखिनः प्रकृष्टकार्या राजप्रतिरूपकाश्च राजानः । एकद्वित्रिचतुर्भिर्जायन्तेऽतः परं दिव्याः ॥' इति । तदिदमाह पञ्चभिरिति ॥

**दिशः प्रसेदुर्मरुतो ववुः सुखाः प्रदक्षिणार्चिर्हविरग्निराददे ।**
**बभूव सर्वं शुभशंसि तत्क्षणं भवो हि लोकाभ्युदयाय तादृशाम् ॥ १४ ॥**

**तत्क्षणं** तस्मिन्क्षणे । कालाध्वनोरत्यन्तसंयोगे द्वितीया । **दिशः प्रसेदुः** प्रसन्ना बभूवुः । **मरुतः** वाताः **सुखाः** मनोहराः **ववुः** । **अग्निः प्रदक्षिणार्चिः** सन् **हविराददे** स्वीचकार । इत्थं **सर्वं शुभशंसि** शुभसूचकं **बभूव** । तथा **हि** । **तादृशां** रघुप्रकाराणां **भवः** जन्म **लोकाभ्युदयाय** । भवतीति शेषः । ततो देवा अपि संतुष्टा इत्यर्थः ॥

**अरिष्टशय्यां परितो विसारिणा सुजन्मनस्तस्य निजेन तेजसा ।**
**निशीथदीपाः सहसा हतत्विषो बभूवुरालेख्यसमर्पिता इव ॥ १५ ॥**

---

१ अजेति मल्लिनाथोद्धृतश्लोकस्यायमर्थः-रवेरुच्चस्थानं मेषराशिः, सोमस्य वृषराशिः, मङ्गलस्य मकरराशिः, बुधस्य कन्याराशिः, बृहस्पतेः कर्कटकराशिः, शुक्रस्य मीनराशिः, शनेश्च तुलाराशिः (वणिक्)। दश-दशांशाः, शिखि-त्र्यंशा, मनुयुक्-द्विगुणिताश्चतुर्दश ( अष्टाविंशतिः ) अंशाः, तिथि-पञ्चदशांशाः इन्द्रिय-पञ्चांशाः, त्रिनवक-सप्तविंशतिरंशाः, विंशतिरंशाश्च । एतेषु भागेषु तुङ्गाः । ते पूर्वोक्ताः सूर्यादयोऽस्ते स्वस्थानापेक्षया सप्तमस्थाने स्थिता नीचाः । असूर्यगैरित्यनेन कुमारस्य यशःसौभाग्यं न कदाप्यस्मिञ्जगत्यस्तमेष्यतीति सूचितम् । २ अनुरूपवर्णनं कुमारसंभवे-प्रसन्नदिक्पांशुविविक्तवातं शङ्खस्वनानन्तरपुष्पवृष्टि । शरीरिणां स्थावरजङ्गमानां सुखाय तज्जन्मदिनं बभूव'॥ इति । अग्रे दशमसर्गेऽपि-निर्दोषमभवत्सर्वमाविष्कृतगुणं जगत् । इति ।

'अरिष्टं सूतिकागृहम्' इत्यमरः । अरिष्टे सूतिकागृहे शय्यां तल्पं [ **अरिष्टशय्यां** ] **परितः** अभितः । 'अभितःपरितःसमयानिकषाहाप्रतियोगेषु दृश्यते' इति द्वितीया । **विसारिणा** । **सुजन्मनः** शोभनोत्पत्तेः । 'जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भवः ।' इत्यमरः । **तस्य** शिशोः **निजेन** नैसर्गिकेण **तेजसा सहसा हतत्विषः** क्षीणकान्तयो **निशीथदीपाः** । 'अर्धरात्रनिशीथौ द्वौ' इत्यमरः । **आलेख्यसमर्पिताः** चित्रार्पिताः **इव बभूवुः** । निशीथशब्दो दीपानां प्रभाधिक्यसंभावनार्थः ॥

**जनाय शुद्धान्तचराय शंसते कुमारजन्मामृतसम्मिताक्षरम् ।**
**अदेयमासीत्त्रयमेव भूपतेः शशिप्रभं छत्रमुभे च चामरे ॥ १६ ॥**

**भूपतेः** दिलीपस्य **अमृतसम्मिताक्षरम्** अमृतसमानाक्षरम् । 'सरूपसमसम्मिताः' इत्याह दण्डी । **कुमारजन्म** पुत्रोत्पत्तिं **शंसते** कथयते **शुद्धान्तचराय** अन्तःपुरचारिणे **जनाय त्रयमेवादेयमासीत्** । किं तत् । **शशिप्रभम्** उज्ज्वलं **छत्रम् उभे चामरे च** । छत्रादीनां राज्ञः प्रधानाङ्गत्वादिति भावः ॥

**निवातपद्मस्तिमितेन चक्षुषा नृपस्य कान्तं पिबतः सुताननम् ।**
**महोदधेः पूर इवेन्दुदर्शनाद्गुरुः प्रहर्षः प्रबभूव नात्मनि ॥ १७ ॥**

निर्वातो निर्वातप्रदेशः । 'निवातावाश्रयावातौ' इत्यमरः । तत्र यत्पद्मं तद्वत्स्तिमितेन निष्पन्देन [ **निवातपद्मस्तिमितेन** ] **चक्षुषा** नेत्रेण **कान्तं** सुन्दरं **सुताननं** पुत्रमुखं **पिबतः** तृष्णया पश्यतः **नृपस्य गुरुः** उत्कटः **प्रहर्षः** कर्ता **इन्दुदर्शनाद्** गुरुः **महोदधेः पूरः** जलौघः **इव आत्मनि** शरीरे **न प्रबभूव** स्थातुं न शशाक । अन्तर्न माति स्मेति यावत् । नह्यल्पाधारेऽधिकं मीयत इति भावः । यद्वा हर्ष आत्मनि स्वस्मिन्विषय न प्रबभूव । आत्मानं नियन्तुं न शशाक । किंतु बहिर्निर्जगामेत्यर्थः ॥

**स जातकर्मण्यखिले तपस्विना तपोवनादेत्य पुरोधसा कृते ।**
**दिलीपसूनुर्मणिराकरोद्भवः प्रयुक्तसंस्कार इवाधिकं बभौ ॥ १८ ॥**

**स दिलीपसूनु** । **तपस्विना पुरोधसा** पुरोहितेन । 'पुरोधास्तु पुरोहितः' इत्यमरः । वसिष्ठेन तपस्वित्वात्तदनुष्ठितं कर्म सवीर्यं स्यादिति भावः । **तपोवनादेत्य** आगत्य । **अखिले** समग्रे **जातकर्मणि** जातस्य कर्तव्यसंस्कारविशेषे **कृते**

---

१ अनुरूपः श्लोकोऽग्रे दशमे-रघुवंशप्रदीपेन—इत्यादि । २ अस्मात्परं चा. व. मु. प्रभृतयः श्लोकमेकमधिकं योजयन्ति—

**समीक्ष्य पुत्रस्य चिरात्पिता मुखं निधानकुम्भस्य युवेव दुर्गतः ।**
**मुदा शरीरे प्रबभूव नात्मनः पयोधिरिन्दूदयमूर्च्छितो यथा ॥**

३ 'शुद्धान्तः स्यादन्तःपुरम्' इत्यभिधानचिन्तामणिः । ४ 'वातस्याभावो निवातम्' इति चा. । अनुरूपः श्लोकः कुमारे-'भवत्संभावनोत्थाय परितोषाय मूर्च्छते । अपि व्याप्तदिगन्तानि नाङ्गानि प्रभवन्ति मे ॥ इति'।

सति । प्रयुक्तः संस्कारः शाणोल्लेखनादिर्यस्य स तथोक्तः [ **प्रयुक्तसंस्कारः** ] । **आकरोद्भवः** खनिप्रभवः । 'खनिः स्त्रियामाकरः स्यात्' इत्यमरः । **मणिरिव** । **अधिकं बभौ** । वसिष्ठमन्त्रप्रभावात्तेजिष्ठोऽभूदित्यर्थः । अत्र मनुः—'प्राङ्नाभिवर्धनात्पुंसो जातकर्म विधीयते ।' इति ॥

**सुखश्रवा मङ्गलतूर्यनिस्वनाः प्रमोदनृत्यैः सह वारयोषिताम् ।**
**न केवलं सद्मनि मागधीपतेः पथि व्यजृम्भन्त दिवौकसामपि ॥१९॥**

सुखः सुखकरः श्रवः श्रवणं येषां ते **सुखश्रवाः** । श्रुतिसुखा इत्यर्थः । **मङ्गलतूर्यनिस्वनाः** मङ्गलवाद्यध्वनयो **वारयोषितां** वेश्यानाम् । 'वारस्त्री गणिका वेश्या रूपाजीवा' इत्यमरः । **प्रमोदनृत्यैः** हर्षनर्तनैः **सह मागधीपतेः** दिलीपस्य **सद्मनि केवलं** गृह एव **न व्यजृम्भन्त** । किंतु । द्यौरोको येषां ते दिवौकसो देवाः । पृषोदरादित्वात्साधुः । तेषां [ **दिवौकसाम्** ] **पथि** आकाशे **अपि** व्यजृम्भन्त । तस्य देवांशत्वाद्देवोपकारित्वाच्च देवदुन्दुभयोऽपि नेदुरिति भावः ॥

**न संयतस्तस्य बभूव रक्षितुर्विसर्जयेद्यं सुतजन्महर्षितः ।**
**ऋणाभिधानात्स्वयमेव केवलं तदा पितॄणां मुमुचे स बन्धनात् ॥ २० ॥**

**रक्षितुः** सम्यक्पालनशीलस्य **तस्य** दिलीपस्य । अत एव चौराद्यभावात् । **संयतः** बद्धो **न बभूव** नाभूत् । किं तेनात आह—विसर्जयेदिति । सुतजन्मना हर्षितस्तोषितः [ **सुतजन्महर्षितः** ] सन् । **यं** बद्धं **विसर्जयेद्** विमोचयेत् । किंतु **स** राजा **तदा पितॄणामृणाभिधानात् बन्धनात् केवलम्** एकं यथा तथा । **स्वयमेव** । एक एवेत्यर्थः । 'केवलः कृत्स्न एकश्च केवलश्चावधीरितः ।' इति शाश्वतः । **मुमुचे** । कर्मकर्तरि लिट् । स्वयमेव मुक्त इत्यर्थः । अस्मिन्नर्थे—'एष वा अनृणो यः पुत्री' इति श्रुतिः प्रमाणम् ॥

**श्रुतस्य यायादयमन्तमर्भकस्तथा परेषां युधि चेति पार्थिवः ।**
**अवेक्ष्य धातोर्गमनार्थमर्थविच्चकार नाम्ना रघुमात्मसंभवम् ॥ २१ ॥**

**अर्थवित्** शब्दार्थज्ञः **पार्थिवः** पृथिवीश्वरो दिलीपः । **अयमर्भकः** बालकः **श्रुतस्य** शास्त्रस्य **अन्तं** पारं **यायात्** । **तथा युधि परेषां** शत्रूणामन्तं पारं **च** यायात् । यातुं शक्नुयादित्यर्थः । 'शकि लिङ् च' इति शक्यार्थे लिङ् । **इति** हेतोः **धातोः** 'अधिवघिलघि गत्यर्थाः' इति लघिधातोर्गमनाख्यमर्थं [ **गमनार्थम्** ] अर्थवित्त्वाद्

---

१ स्वर्गपक्षे स्वर्गवासिनीनामुर्वशीमेनकारम्भाद्यानाम् । समानभावो दशमे–पुत्रजन्मप्रवेश्यानां तूर्याणां तस्य पुत्रिणः । आरम्भं प्रथमं चक्रुर्देवदुन्दुभयो दिवि ॥ २ उत्सवविशेषे राज्ञामपराधिविमोचनं प्रसिद्धम्–युवराजाभिषेके च परचक्रावमर्दने । पुत्रजन्मनि वा मोक्षो बद्धस्य हि विधीयते ॥ इ. हेमा. ३ तल्लक्षणं यथा–क्रियमाणं तु यत्कर्म स्वयमेव प्रसिद्ध्यति । सुकरैः स्वैर्गुणैः कर्तुः कर्मकर्तेति तद्विदुः ॥ अत्र पुत्रवत्तारूपेण गुणेनैव मुक्तत्वात्कर्मकर्तरिप्रयोगः ।'विसर्जयेत्' इत्यत्र 'विमोचयेत्' इति दि. चा. पठतः ।

**अवेक्ष्य** आलोच्य। **आत्मसंभवं** पुत्रं **नाम्ना रघुं चकार**। ‘ लङ्घिबंह्योर्नलोपश्च ’ इत्युप्रत्यये ‘ वालमूललघ्वलमङ्गुलीनां वा लो रत्वमापद्यते इति वैकल्पिके ’ रेफादेशे रघुरिति रूपं सिद्धम्। अत्र शङ्खः—‘ अशौचे तु व्यतिक्रान्ते नामकर्म विधीयते । ’ इति ॥

**पितुः प्रयत्नात्स समग्रसंपदः शुभैः शरीरावयवैर्दिने दिने ।**
**पुपोष वृद्धिं हरिदश्वदीधितेरनुप्रवेशादिव बालचन्द्रमाः ॥ २२ ॥**

स रघुः **समग्रसंपदः** पूर्णलक्ष्मीकस्य **पितुः** दिलीपस्य **प्रयत्नात् शुभैः** मनोहरैः **शरीरावयवैः हरिदश्वदीधितेः** सूर्यस्य रश्मेः। ‘भास्वद्विवस्वत्सप्ताश्वहरिदश्वोष्णरश्मयः’ इत्यमरः। **अनुप्रवेशाद्बालचन्द्रमा इव । दिने दिने** प्रतिदिनम् । ‘ नित्यवीप्सयोः ’ इति द्विर्वचनम्। **वृद्धिं पुपोष**। अत्र वराहसंहितावचनम्—‘ सलिलमये शशिनि रवेर्दीधितयो मूर्छितास्तमो नैशम्। क्षपयन्ति दर्पणोदरनिहिता इव मन्दिरस्यान्तः ॥ ’ इति ॥

**उमावृषाङ्कौ शरजन्मना यथा यथा जयन्तेन शचीपुरन्दरौ ।**
**तथा नृपः सा च सुतेन मागधी ननन्दतुस्तत्सदृशेन तत्समौ ॥२३॥**

**उमावृषाङ्कौ** पार्वतीवृषभध्वजौ **शरजन्मना** कार्तिकेयेन। ‘ कार्तिकेयो महासेनः शरजन्मा षडाननः। ’ इत्यमरः। **यथा** ननन्दतुः। **शचीपुरन्दरौ जयन्तेन** जयन्ताख्येन सुतेन। ‘ जयन्तः पाकशासनिः ’ इत्यमरः। **यथा** ननन्दतुः। **तथा तत्समौ** ताभ्यामुमावृषाङ्काभ्यां शचीपुरन्दराभ्यां च समौ समानौ **सा मागधी नृपश्च तत्सदृशेन** ताभ्यां कुमारजयन्ताभ्यां सदृशेन **सुतेन ननन्दतुः**। मागधी प्राग्व्याख्याता ॥

**रथाङ्गनाम्नोरिव भावबन्धनं बभूव यत्प्रेम परस्पराश्रयम् ।**
**विभक्तमप्येकसुतेन तत्तयोः परस्परस्योपरि पर्यचीयत ॥ २४ ॥**

रथाङ्गनाम्नी च रथाङ्गनामा रथाङ्गनामानौ चक्रवाकौ। ‘ पुमान्स्त्रिया’ इत्येकशेषः। तयोः

---

१ आत्म०–सम्भवत्यस्मादिति सम्भवः। आत्मा सम्भवो यस्य तम्। ‘आत्मा वै पुत्रनामासि’ इति श्रुतेः। २ ‘श्रीसूर्यस्य सुषुम्ना ( अमा ) नाम कला तस्याः प्रवेशाद्वृद्धिं पुष्णाति। चन्द्रमाः किल सूर्यस्य सुषुम्नां नाम नाडिकामनुप्रविश्य वर्धते ’ इति वल्ल.। अमावास्यायां चंद्रो रवौ गच्छति प्रतिपदि निःसरति, तत उदयं प्राप्य यथा दिने दिने वर्धते तथा अयमपि ववृधे । इ. चा०। अनुरूपवर्णनं कुमारसंभवे-दिने दिने सा परिवर्धमाना लब्धोदया चान्द्रमसीव लेखा।पुपोष लावण्यमयान्विशेषान् ज्योत्स्नान्तराणीव कलान्तराणि॥ इति ३। शरेषु जन्मास्य। तस्य शरवणे उत्पन्नत्वात्। इथं कथा कुमारसंभवे दशमसर्गे द्रष्टव्या। अत्र वामनपुराणम्–एतस्मिन्नन्तरे देव्यः कृत्तिकाः षट् सुतेजसः। ददृशुः स्वेच्छया यान्त्यो बालं शरवणे स्थितम् ॥ इत्यादि। ४ ‘ विभक्तमप्येकसुते न तत्तयोः परस्परस्योपरि पर्यहीयत ’ इति वल्लभः पठति। न व्यहीयत इ. चारित्रवर्धनदिनकरादयः।

[ **रथाङ्गनाम्नोः** ] **इव तयोः** दंपत्योः **भावबन्धनं** हृदयाकर्षकं **परस्पराश्रयम्** अन्योन्यविषयं **यत्प्रेम बभूव तद्** एकेन केवलेन ताभ्यामन्येन वा । 'एके मुख्यान्यकेवलाः' इत्यमरः । सुतेन [ **एकसुतेन**] **विभक्तमपि** कृतविभागमपि **परस्परस्योपरि पर्यचीयत** ववृधे । कर्मकर्तरि लङ् । अकृत्रिमत्वात्स्वयमेवोपचितामित्यर्थः । यदेकाधारं वस्तु तदाधारद्वये विभज्यमानं हीयते । अत्र तु तयोः प्रागेकैककर्तृकमेकैकविषयं प्रेम संप्रति द्वितीयविषयलाभेऽपि नाहीयत । प्रत्युतोपचितमेवाभूदिति भावः ॥

**उवाच धात्र्या प्रथमोदितं वचो ययौ तदीयामवलम्ब्य चाङ्गुलिम् ।**
**अभूच्च नम्रः प्रणिपातशिक्षया पितुर्मुदं तेन ततान सोऽर्भकः॥२५॥**

**सोऽर्भकः** शिशुः । 'पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः ।' इत्यमरः । **धात्र्या** उपमात्रा । 'धात्री जनन्यामलकीवसुमत्युपमातृषु ।' इति विश्वः । प्रथममुदितमुपदिष्टं [ **प्रथमोदितं** ] **वचः उवाच** । **तदीयामङ्गुलिमवलम्ब्य ययौ च** । [ **प्रणिपातशिक्षया** ] प्रणिपातस्य शिक्षयोपदेशेन **नम्रः अभूच्च** । इति यत् **तेन पितुर्मुदं ततान** ॥

**तमङ्कमारोप्य शरीरयोगजैः सुखैर्निषिञ्चन्तमिवामृतं त्वचि ।**
**उपान्तसंमीलितलोचनो नृपश्चिरात्सुतस्पर्शरसज्ञतां ययौ ॥ २६ ॥**

**शरीरयोगजैः सुखैः त्वचि** त्वगिन्द्रिये **अमृतं निषिञ्चन्तं** वर्षन्तम् **इव तं** पुत्रम् **अङ्कमारोप्य** मुदाविर्भावादुपान्तयोः प्रान्तयोः संमीलितलोचनः [ **उपान्तसंमीलितलोचनः** ] सन् । **नृपश्चिरात्सुतस्पर्शरसज्ञतां ययौ** । रसः स्वादः ॥

**अमंस्त चानेन परार्ध्यजन्मना स्थितेरभेत्ता स्थितिमन्तमन्वयम् ।**
**स्वमूर्तिभेदेन गुणाग्र्यवर्तिना पतिः प्रजानामिव सर्गमात्मनः॥२७॥**

**स्थितेः अभेत्ता** मर्यादापालकः स नृपः **परार्ध्यजन्मना** उत्कृष्टजन्मना **अनेन**

---

१ भावस्यान्योन्यचित्तवृत्तेर्बन्धनं संश्लेषणम् । 'चेतोवृत्तिगुम्फनम्' इति व० । 'चित्तवृत्तिबन्धनस्थानं मैत्रीकरणम्' इति चा० । अनुरूपभाव उत्तरचरिते–'आनन्दग्रन्थिरेकोयमपत्यामिति बध्यते' इति । २ अयं श्लोकः वत्सलरसस्योदाहरणत्वेनोदाहृतः साहित्यदर्पणकृता । वत्सलरसस्य लक्षणं च तेनोक्तम्–'स्फुटं चमत्कारितया वत्सलं च रसं विदुः ।' तस्य स्थाय्यादिभावविचारस्तत्रैवालोच्यः । 'उवाच' इत्यत्र 'यदाह' इति 'ततान सोऽर्भकः' इत्यत्र 'शिशुस्ततान सः' इति पा. ३ सुतस्पर्शो हि निरतिशयसुखकारित्वेन प्रसिद्धः । उक्तं च भारते–'न वाससां न रामाणां नापां स्पर्शस्तथाविधः । शिशोरालिङ्ग्यमानस्य स्पर्शः सूनोर्यथा सुखः'॥ 'पुत्रस्पर्शात्सुखतरः स्पर्शो लोके न विद्यते' इति च । अनुरूपभावो हर्षचरिते–ससंभ्रममुपसृतं चैनं (पुत्रम्)...उरसि निवेश्य विशन्निव प्रेम्णा सुधाकरमण्डलमध्ये मज्जन्निवामृतमये महासरसि इ० । 'सर्वाङ्गीणः स्पर्शः सुतस्य किल–' इ. विक्रमोर्वशीये (५।११)च । ४परस्मिन्नर्धे भवं परार्ध्यं श्रेष्ठम् । रघुपक्षे लोकपालांशत्वादिना विष्णुपक्षे विश्वपालनादिना च श्रेष्ठत्वं ज्ञेयम् ।

रघुणा **अन्वयं** वंशम् । **प्रजानां पतिः** ब्रह्मा । गुणाः सत्त्वादयः । तेष्वग्र्येण मुख्येन सत्त्वेन वर्तते व्याप्रियत इति गुणाग्र्यवर्ती तेन [ **गुणाग्र्यवर्तिना** ] स्वस्य मूर्तिभेदेन [ **स्वमूर्तिभेदेन** ] अवतारविशेषेण विष्णुना **आत्मनः सर्गं** सृष्टिम् **इव** । **स्थितिमन्तं** प्रतिष्ठावन्तम् **अमंस्त** मन्यते स्म **च** । मन्यतेरनुदात्तत्वादिट्प्रतिषेधः । अत्रोपमानोपमेययोरितरेतरविशेषणानीतरेतरत्र योज्यानि । तत्र रघुपक्षे गुणा विद्याविनयादयः । 'गुणोऽप्रधाने रूपादौ मौर्व्यां सूदे वृकोदरे । स्तम्भे सत्त्वादिसंध्यादिविद्यादिहरितादिषु ॥' इति विश्वः । शेषं सुगमम् ॥

**स वृत्तचूलश्चलकाकपक्षकैरमात्यपुत्रैः सवयोभिरन्वितः ।**
**लिपेर्यथावद्ग्रहणेन वाङ्मयं नदीमुखेनेव समुद्रमाविशत् ॥ २८ ॥**

'चूडा कार्या द्विजातीनां सर्वेषामेव धर्मतः । प्रथमेऽब्दे तृतीये वा कर्तव्या श्रुतिचोदनात् ॥' इति मनुस्मरणात्तृतीये वर्षे **वृत्तचूलः** निष्पन्नचूडाकर्मा सन् । डलयोरभेदः । **स** रघुः । 'प्राप्ते तु पञ्चमे वर्षे विद्यारम्भं च कारयेत् ।' इति वचनात्पञ्चमे वर्षे **चलकाकपक्षकैः** चञ्चलशिखण्डकैः ; 'बालानां तु शिखा प्रोक्ता काकपक्षः शिखण्डकः ।' इति हलायुधः । **सवयोभिः** स्निग्धैः । 'स्निग्धो वयस्यः सवयाः' इत्यमरः । **अमात्यपुत्रैः अन्वितः** सन् **लिपेः** पञ्चाशद्वर्णात्मिकाया मातृकायाः **यथावद्ग्रहणेन** सम्यग्बोधेनोपायभूतेन **वाङ्मयं** शब्दजातम् । नद्या मुखं द्वारम् । 'मुखं तु वदने मुख्यारम्भे द्वाराभ्युपाययोः ।' इति यादवः । तेन [ **नदीमुखेन** ] कश्चिन्मकरादिः **समुद्रमिव** । **आविशत्** प्रविष्टः । ज्ञातवानित्यर्थः ॥

**अथोपनीतं विधिवद्विपश्चितो विनिन्युरेनं गुरवो गुरुप्रियम् ।**
**अवन्ध्ययत्नाश्च बभूवुरत्र ते क्रिया हि वस्तूपहिता प्रसीदति ॥२९॥**

'गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम् । गर्भादेकादशे राज्ञो गर्भाच्च द्वादशे विशः ॥' इति मनुस्मरणाद् **अथ** गर्भैकादशेऽब्दे **विधिवदुपनीतं गुरुप्रियम्**

---

१ स्वमूर्तिभेदेन–पुत्रपक्षे स्वस्य आत्मन एव मूर्तिभेदो रूपान्तरेण प्रादुर्भावः तेन । 'आत्मा वै जायते पुत्रः' इति स्मरणात् । विष्णुपक्षे मूर्तिभेदः स्वरूपान्तरम् । तदुक्तं कुमारसंभवे–'एकैव मूर्तिर्बिभिदे त्रिधा सा–' इत्यादि । कौर्मे च 'रजोगुणमयं चान्यरूपं तस्यैव धीमतः । चतुर्मुखः स भगवान् जगत्सृष्टौ प्रवर्तते ॥ सत्त्वं गुणमुपाश्रित्य विष्णुर्विश्वेश्वरः स्वयम् । इ. 'ब्रह्मत्वे सृजते लोकान्विष्णुत्वे पालयत्यपि । रुद्रत्वे संहरत्येव तिस्रोऽवस्थाः स्वयंभुवः ।' इत्युक्तत्वान्मूर्तिभेदत्वम् । इ. चा. दिनकरश्च । २ वृत्तचूडः । वृत्तचौलः इ. पा. ३ वेदचतुष्टयं तदङ्गत्वान्यत्सर्वं शास्त्रजातमित्यर्थः । लिपेर्ग्रहणेन–तया तद्व्यापनात् । तदुक्तं–अकारादिक्षकारान्ता वर्णमाला यया पुनः । समस्तं वाङ्मयं व्याप्तं त्रैलोक्यमिव विष्णुना ॥ ४ गुरवः प्रियाः यस्य स तम् । गुरुभक्तमित्यर्थः । न हि विद्या गुरुभक्तिं विना फलति । तदुक्तं श्वेताश्वतरोपनिषदि–यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥ इति । यद्वा प्रीणातीति प्रियः । इगुपधेत्यादिना प्रीधातोः कः । गुरूणां प्रियस्तम् । गुरोः शिष्यवात्सल्यं विना शिष्यस्य विद्यालाभासंभवात् ।

**एवं** रघुं **विपश्चितः** विद्वांसः **गुरवो विनिन्युः** शिक्षितवन्तः । ते गुरवः **अत्र** अस्मिन्रघौ **अवन्ध्ययत्नाश्च बभूवुः** । तथा **हि** । **क्रिया** शिक्षा । 'क्रिया तु निष्कृतौ शिक्षाचिकित्सोपायकर्मसु ।' इति यादवः । वस्तुनि पात्रभूत उपहिता प्रयुक्ता [ **वस्तूपहिता** ] **प्रसीदति** फलति । 'क्रिया हि द्रव्यं विनयति नाद्रव्यम्' इति कौटिल्यः ॥

**धियः समग्रैः स गुणैरुदारधीः क्रमाच्चतस्रश्चतुरर्णवोपमाः ।**
**ततार विद्याः पवनातिपातिभिर्दिशो हरिद्भिर्हरितामिवेश्वरः ॥ ३० ॥**

अत्र कामन्दकः—'शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा । ऊहापोहोऽर्थविज्ञानं तत्त्वज्ञानं च धीगुणाः ॥' इति । 'आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्च शाश्वती । एता विद्याश्चतस्रस्तु लोकसंस्थितिहेतवः ॥' इति च । **उदारधीः** उत्कृष्टबुद्धिः **स** रघुः **समग्रैर्धियः गुणैः** । चत्वारोऽर्णवा उपमा यासां ताः **चतुरर्णवोपमाः** । 'तद्धितार्थोत्तरपदसमाहारे च' इत्युत्तरपदसमासः । **चतस्रः विद्याः** । **हरितां** दिशाम् **ईश्वरः** सूर्यः **पवनातिपातिभिर्हरिद्भिः** निजाश्वैः । 'हरित्ककुभि वर्णे च तृणवाजिविशेषयोः ।' इति विश्वः । चतस्रो **दिशः इव** । **क्रमात्ततार** । चतुरर्णवोपमत्वं दिशामपि द्रष्टव्यम् ॥

**त्वचं स मेध्यां परिधाय रौरवीमशिक्षतास्त्रं पितुरेव मन्त्रवत् ।**
**न केवलं तद्गुरुरेकपार्थिवः क्षितावभूदेकधनुर्धरोऽपि सः ॥ ३१ ॥**

**स** रघुः । 'कार्ष्णरौरवबास्तानि चर्माणि ब्रह्मचारिणः । वसीरन्नानुपूर्व्येण शाणक्षौमादिकानि च ॥' इति मनुस्मरणात् **मेध्यां** शुद्धां **रौरवीं** रुरुसंबन्धिनीम् । 'रुरुर्म-

---

१ अत्र समानार्थाः श्लोकांशाः—'पात्रविशेषन्यस्तं गुणान्तरं व्रजति शिल्पमाधातुः' । इति मालविकाग्निमित्रे । 'नाद्रव्ये निहिता काचित्क्रिया फलवती भवेत्' इति हितोपदेशे । 'चीयते बालिशस्यापि सत्क्षेत्रपतिता कृषिः ।' इति मुद्राराक्षसे । 'प्रभवति शुचिर्बिम्बोद्ग्राहे मणिर्न मृदां चयः' । इति उत्तररामचरिते । 'धीरेषु सत्कविवचो लभते विकासम्' । इत्यन्यत्र च । २ 'विद्याश्चतस्र एवैता योगक्षेमाय देहिनाम्' इति पाठो वङ्गदेशमुद्रितपुस्तकेषु । आन्वीक्षिक्यात्मविज्ञानं धर्माधर्मौ त्रयीस्थितौ । अर्थानर्थौ तु वार्तायां दण्डनीतौ नयानयौ ॥ इति च का० । (१) आन्वीक्षिकी—अनु प्रत्यक्षपरोक्षाभ्यामीक्षितस्यार्थस्य श्रवणोत्तरमीक्षणं परीक्षणमन्वीक्षा सा प्रयोजनं यस्याः सा आत्मविद्या । 'प्रयोजनम्' इति ठक् । यया च ज्ञातया परमार्थतत्त्वमीक्षमाणो मुमुक्षुर्हर्षशोकौ जहाति । तदुक्तं कामन्दकेन—'आन्वीक्षिक्यात्मविद्या स्यादीक्षणात्सुखदुःखयोः । ईक्षमाणस्तया तत्त्वं हर्षशोकौ व्युदस्यति' ॥ इति । 'मत्वा धीरो हर्षशोकौ जहाति' इति काठकश्रुतेश्च । आन्वीक्षिकी तर्कविद्या तत्वज्ञानोपयोगिनी । 'आन्वीक्षिकीं चात्मविद्याम्' इति मनुना पार्थक्येन निर्देशात् । 'न्याय आन्वीक्षिकी पञ्चाध्यायी गौतमेन प्रणीता' इति मधुसूदनः । (२) त्रयी—त्रयीशब्दो वेदवाचक इति सम्यगवस्थापितं भानुजीदीक्षितैरमरटीकायाम् । तेनात्र सांगो वेदो ग्राह्यः । उक्तं च कामन्दकेन—'अंगानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः । धर्मशास्त्रं पुराणं च त्रयीदं सर्वमुच्यते' ॥ इति । (३) वार्ता—वृत्तिरस्त्यस्याम् । 'पाशुपाल्यं कृषिः पुण्यं वार्ता वार्तानुजीविनाम्' इति कामन्दकः । (४) दण्डनीतिः—अखिलं राज्यशासनतन्त्रम् । काम० २,१५. ३ 'पवनातिवर्तिभिः' इति व. चा. पठतः ।

ह्याकृष्णसारः ' इति यादवः । **त्वचं** चर्म **परिधाय** वसित्वा **मन्त्रवत्** समन्त्रकम् **अस्त्रम्** आग्नेयादिकं **पितुरेव** उपाध्यायाद् **अशिक्षत** अभ्यस्तवान् । आख्यातोपयोगे इत्यपादानसंज्ञा । पितुरेवेत्यवधारणमुपपादयति—नेति । **तद्गुरुः** एकः अद्वितीयः पार्थिवः [ **एकपार्थिवः** ] **केवलं** पृथिवीश्वर एव **नाभूत्** । किंतु **क्षितौ स** दिलीप एको धनुर्धरः [ एकधनुर्धरः ] अपि अभूत् ॥

**महोक्षतां वत्सतरः स्पृशन्निव द्विपेन्द्रभावं कलभः श्रयन्निव ।**
**रघुः क्रमाद्यौवनभिन्नशैशवः पुपोष गाम्भीर्यमनोहरं वपुः ॥ ३२ ॥**

**रघुः क्रमाद्** यौवनेन भिन्नशैशवो निरस्तशिशुभावः [ **यौवनभिन्नशैशवः** ] सन् । [ **महोक्षतां** ] महानुक्षा महोक्षो महर्षभः । ' अचतुर–' आदिसूत्रेण निपातनादकारान्तत्वम् । तस्य भावस्तत्ता तां **स्पृशन्** गच्छन् **वत्सतरः** दम्य **इव** । ' दम्यवत्सतरौ समौ ' इत्यमरः । **द्विपेन्द्रभावं** महागजत्वं **श्रयन्** व्रजन् **कलभः** करिपोतः **इव** । गाम्भीर्येणाचापलेन मनोहरं [ **गाम्भीर्यमनोहरम्** ] **वपुः पुपोष** ॥

**अथास्य गोदानविधेरनन्तरं विवाहदीक्षां निरवर्तयद्गुरुः ।**
**नरेन्द्रकन्यास्तमवाप्य सत्पतिं तमोनुदं दक्षसुता इवाबभुः ॥ ३३ ॥**

' गौर्नादित्ये बलीवर्दे क्रतुभेदर्षिभेदयोः । स्त्री तु स्याद्दिशि भारत्यां भूमौ च सुरभावपि ॥ पुंस्त्रियोः स्वर्गवज्राम्बुरश्मिदृग्बाणलोमसु ॥ ' इति केशवः । गावो लोमानि केशा दीयन्ते खण्ड्यन्तेऽस्मिन्निति व्युत्पत्त्या गोदानं नाम ब्राह्मणादीनां षोडशादिषु वर्षेषु कर्तव्यं केशान्ताख्यं कर्मोच्यते । तदुक्तं मनुना—' केशान्तः षोडशे वर्षे ब्राह्मणस्य विधीयते । राजन्यबन्धोर्द्वाविंशे वैश्यस्य द्व्यधिके ततः ॥ ' इति । **अथ गुरुः** पिता । ' गुरुर्गीष्पतिपित्रादौ ' इत्यमरः । **अस्य गोदानविधेरनन्तरं विवाहदीक्षां निरवर्तयत्** । कृतवानित्यर्थः । अथ **नरेन्द्रकन्यास्तं** रघुम् । [ **दक्षसुताः** ] दक्षस्य सुता रोहिण्यादयः **तमोनुदं** चन्द्रम् **इव** । ' तमोनुदोऽग्निचन्द्रार्काः ' इति विश्वः । **सत्पतिमवाप्याबभुः** । रघुरपि तमोनुत् । अत्र मनुः—' वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम् । अविप्लुतब्रह्मचर्यो गृहस्थाश्रममाविशेत् ॥ ' इति ॥

संप्रति यौवराज्ययोग्यतामाह—

**युवा युगव्यायतबाहुरंसलः कपाटवक्षाः परिणद्धकंधरः ।**
**वपुःप्रकर्षादजयद्गुरुं रघुस्तथापि नीचैर्विनयाददृश्यत ॥ ३४ ॥**

---

१ कलभः—'पञ्चवर्षदेशीयः करिशावकः' इति सुभूतिः । 'त्रिंशद्वर्षस्तु कलभः' इति वैजयन्ती । २ गंभीरम० इ. पा. गाम्भीर्यम्—भयशोकादिभिर्मनसोऽविकृतत्वम् । 'भीशोकक्रोधहर्षाद्यैर्गाम्भीर्यं निर्विकारता ' । इति साहित्यदर्पणे । ३ 'गोप्रशंसारूपस्तद्दानप्रकारः ' इ. हे. । मंगलार्थो गोवितरणरूप आचारविशेषः इ. केचित् । ब्रह्मचर्यमाषोडशान्तु ततो गोदानानन्तरं दारकर्म । इ. चाणक्यः । ४ अश्विन्याद्याः सप्तविंशतिः । तदुक्तं पाद्मे–' अश्विन्याद्यास्तु दक्षस्य उपयेमे सुता विधुः । ' इति । तमोनुदम्–रघुपक्षे तमः पापमोहादिवृत्तीर्निवारयतीति स तम् । ' तमोपहम् ' इति दि. व. पठतः ।

**युवा** । युगो नाम धुर्यस्कन्धगः सच्छिद्रप्रान्तो यानाङ्गभूतो दारुविशेषः । 'यानाद्यङ्गे युगः पुंसि युगं युग्मे कृतादिषु ।' इत्यमरः । युगवद्व्यायतौ दीर्घौ बाहू यस्य सः [ **युगव्यायतबाहुः** ] । अंसावस्य स्त इति **अंसलः** बलवान् । मांसलश्चेति वृत्तिकारः । 'बलवान्मांसलोंऽसलः' इत्यमरः । 'वत्सांसाभ्यां कामबले' इति लच्प्रत्ययः । **कपाटवक्षाः परिणद्धकंधरः** विशालग्रीवः । 'परिणाहो विशालता' इत्यमरः । **रघुः** [ **वपुःप्रकर्षात्** ] वपुषः प्रकर्षाद् आधिक्याद्यौवनकृतात् **गुरुं** पितरम् **अजयत्** । **तथापि विनयात्** नम्रत्वेन **नीचैः** अल्पकः **अदृश्यत** । अनौद्धत्यं च विवक्षितम् ॥

संप्रति तस्य यौवराज्यमाह—

**ततः प्रजानां चिरमात्मना धृतां नितान्तगुर्वीं लघयिष्यता धुरम् ।**
**निसर्गसंस्कारविनीत इत्यसौ नृपेण चक्रे युवराजशब्दभाक् ॥३५॥**

ततः आत्मना **चिरं धृतां नितान्तगुर्वीम्** । 'वोतो गुणवचनात्' इति ङीष् । **प्रजानां धुरं** पालनप्रयासं **लघयिष्यता** लघुं करिष्यता । 'तत्करोति तदाचष्टे' इति लघुशब्दाण्णिच् । ततो 'लटः सद्वा' इति शतृप्रत्ययः । **नृपेण** दिलीपेन **असौ** रघुर्निसर्गेण स्वभावेन संस्कारेण शास्त्राभ्यासजनितवासनया च विनीतो नम्रः [ **निसर्गसंस्कारविनीतः** ] इति हेतोः । [ **युवराजशब्दभाक्** ] युवराज इति शब्दं भजतीति तथोक्तः । 'भजो ण्विः' इति ण्विप्रत्ययः । **चक्रे** कृतः । 'द्विविधो विनयः स्वाभाविकः कृत्रिमश्च' इति कौटिल्यः । तदुभयसंपन्नत्वात्पुत्रं युवराजं चकारेत्यर्थः । अत्र कामन्दकः—'विनयोपग्रहान्भूत्यै कुर्वीत नृपतिः सुतान् । अविनीतकुमारं हि कुलमाशु विशीर्यते । विनीतमौरसं पुत्रं यौवराज्येऽभिषेचयेत् ॥' इति ॥

**नरेन्द्रमूलायतनादनन्तरं तदास्पदं श्रीर्युवराजसंज्ञितम् ।**
**अगच्छदंशेन गुणाभिलाषिणी नवावतारं कमलादिवोत्पलम् ॥३६॥**

गुणान्विनयादीन्सौरभ्यादींश्चाभिलषतीति **गुणाभिलाषिणी श्रीः** राज्यलक्ष्मीः पद्माश्रया च नरेन्द्रो दिलीप एव मूलायतनं प्रधानस्थानं तस्मात् [ **नरेन्द्रमूलायतनाद्** ] अपादानात् **अनन्तरं** संनिहितम् । युवराज इति संज्ञास्य संजाता तं **युवराजसंज्ञितम्** । तारकादित्वादितच्प्रत्ययः । आत्मनः पदं स्थानमास्पदम् । 'आस्पदं प्रतिष्ठायाम्' इति निपातः । स रघुरित्यास्पदं **तदास्पदम्** । **कमलात्** चिरोत्पन्नात् **नवावतारम्** अचिरोत्पन्नम् **उत्पलमिव** । **अंशेनागच्छत्** । स्त्रियो हि यूनि रज्यन्ते इति भावः ॥

**विभावसुः सारथिनेव वायुना घनव्यपायेन गभस्तिमानिव ।**
**बभूव तेनातितरां सुदुःसहः कटप्रभेदेन करीव पार्थिवः ॥ ३७ ॥**

---

१ 'मनोज्ञस्कन्धः' इति सु० । २ युवा चासौ राजा च युवराजः । राजाहःसखिभ्यष्टच् । ३ 'प्रभावः शुचिता मैत्री त्यागः सत्यं क्षमार्जवम् । कुलं शीलं दमश्चेति गुणाः सम्पत्तिहेतवः' ॥ इति कामन्दकः ॥

**सारथिना** सहायभूतेन । एतद्विशेषणमुत्तरवाक्येष्वप्यनुषञ्जनीयम् । **वायुना विभावसुः** वह्निः **इव** । 'सूर्यवह्नी विभावसू' इत्यमरः । **घनव्यपायेन** शरत्समयेन सारथिना **गभस्तिमान्** सूर्यः **इव** । [**कटप्रभेदेन**] कटो गण्डः । 'गण्डः कटो मदो दानम्' इत्यमरः । तस्य प्रभेदः स्फुटनम् । मदोदय इत्यर्थः । तेन **करीव** । **पार्थिवः** दिलीपः **तेन** रघुणा **अतितरां** अत्यन्तं **सुदुःसहः** सुष्टुसह्यो **बभूव** ॥

**नियुज्य तं होमतुरङ्गरक्षणे धनुर्धरं राजसुतैरनुद्रुतम् ।**
**अपूर्णमेकेन शतक्रतूपमः शतं क्रतूनामपविघ्नमाप सः ॥ ३८ ॥**

शतक्रतुरिन्द्र उपमा यस्य स **शतक्रतूपमः स** दिलीपः । 'शतं वै बल्या राजपुत्रा देवा आशापालाः' इत्यादिश्रुत्या **राजसुतैरनुद्रुतम्** अनुगतं **धनुर्धरं तं** रघुं [**होमतुरङ्गरक्षणे**] होमतुरङ्गाणां रक्षणे **नियुज्य** । **एकेन** क्रतुना **अपूर्णम्** एकोनं **क्रतूनाम्** अश्वमेधानां **शतम् अपविघ्नं** अपगतविघ्नं यथा तथा **आप** ॥

**ततः परं तेन मखाय यज्वना तुरङ्गमुत्सृष्टमनर्गलं पुनः ।**
**धनुर्भृतामग्रत एव रक्षिणां जहार शक्रः किल गूढविग्रहः ॥ ३९ ॥**

**ततः परम्** एकोनशतक्रतुप्राप्त्यनन्तरं **यज्वना** विधिनेष्टवता **तेन** दिलीपेन **पुनः** पुनरपि **मखाय** मखं कर्तुम् । 'क्रियार्थोपपदस्य–' इत्यादिना चतुर्थी । **उत्सृष्टं** मुक्तम् **अनर्गलम्** अप्रतिबन्धम् । अव्याहतस्वैरगतिमित्यर्थः । 'अपर्यावर्तयन्तोऽश्वमनुचरन्ति' इत्यापस्तम्बस्मरणात् । **तुरङ्गं धनुर्भृतां रक्षिणां** रक्षकाणाम् **अग्रतः एव शक्रः गूढविग्रहः** सन् । **जहार किल** । किलेत्यैतिह्ये ॥

**विषादलुप्तप्रतिपत्ति विस्मितं कुमारसैन्यं सपदि स्थितं च तत् ।**
**वसिष्ठधेनुश्च यदृच्छयागता श्रुतप्रभावा ददृशेऽथ नन्दिनी ॥ ४० ॥**

**तत्** [**कुमारसैन्यम्**] कुमारस्य सैन्यं सेना **सपदि** [**विषादलुप्तप्रतिपत्ति**] विषाद इष्टनाशकृतो मनोभङ्गः । तदुक्तम्—'विषादश्चेतसो भङ्ग उपायाभावनाशयोः ।' इति । तेन लुप्ता प्रतिपत्तिः कर्तव्यज्ञानं यस्य तत्तथोक्तम् । **विस्मितम्** अश्वनाशस्याकस्मिकत्वादाश्चर्याविष्टं सत् **स्थितं** तस्थौ **च** । **अथ श्रुतप्रभावा यदृच्छया** स्वेच्छया **आगता** । रघोः स्वप्रसादलब्धत्वादनुजिघृक्षयेति भावः । **नन्दिनी** नाम **वसिष्ठधेनुश्च ददृशे** । द्वौ चकारावविलम्बसूचकौ ॥

**तदङ्गनिस्यन्दजलेन लोचने प्रमृज्य पुण्येन पुरस्कृतः सताम् ।**
**अतीन्द्रियेष्वप्युपपन्नदर्शनो बभूव भावेषु दिलीपनन्दनः ॥ ४१ ॥**

**सतां पुरस्कृतः** पूजितो **दिलीपनन्दनः** रघुः **पुण्येन** तस्या नन्दिन्या यदङ्ग

---

१ घनानां मेघानां व्यपायोऽत्ययो यस्मिन्काले स कालः शरत्समय इत्यर्थः । 'सुदुःसहः' इत्यत्र 'दुरासदः' इति पा. २ अतः, रक्षिणाम्—'पश्यताम्' इ. पा. ३ श्रुतः प्रभावो रघूत्पत्तिवरप्रदानलक्षणो यस्याः सा आकर्णितमाहात्म्या । द्वौ चकारौ तुल्यकालापेक्षां गमयेते । इति च चा० ।

तस्य निस्यन्दो द्रवः स एव जलम् । मूत्रमित्यर्थः । तेन [ **तदङ्गनिस्यन्दजलेन** ] **लोचने प्रमृज्य** शोधयित्वा । **अतीन्द्रियेषु** इन्द्रियाण्यतिक्रान्तेषु । 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया ।' इति समासः । द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु परवल्लिङ्गताप्रतिषेधा द्विशेष्यनिघ्नत्वम् । **भावेषु** वस्तुषु **अपि उपपन्नदर्शनः** संपन्नसाक्षात्कारशक्तिः **बभूव** ॥

**स पूर्वतः पर्वतपक्षशातनं ददर्श देवं नरदेवसंभवः ।**
**पुनः पुनः सूतनिषिद्धचापलं हरन्तमश्वं रथरश्मिसंयतम् ॥४२॥**

**नरदेवसंभवः स पुनः पुनः** [ **सूतनिषिद्धचापलं** ] सूतेन निषिद्धचापलं निवारितौद्धत्यं [ **रथरश्मिसंयतं** ] रथस्य रश्मिभिः प्रग्रहैः । 'किरणप्रग्रहौ रश्मी' इत्यमरः । संयतं बद्धम् **अश्वं हरन्तं** [ **पर्वतपक्षशातनं** ] पर्वतपक्षाणां शातनं छेदकं **देवम्** इन्द्रं **पूर्वतः** पूर्वस्यां दिशि **ददर्श** ॥

**शतैस्तमक्ष्णामनिमेषवृत्तिभिर्हरिं विदित्वा हरिभिश्च वाजिभिः ।**
**अवोचदेनं गगनस्पृशा रघुः स्वरेण धीरेण निवर्तयन्निव ॥ ४३ ॥**

**रघुस्तं** अश्वहर्तारं **अनिमेषवृत्तिभिः** निमेषव्यापारशून्यैः **अक्ष्णां शतैर्हरिभिः** हरिद्वर्णैः । 'हरिर्वाच्यवदाख्यातो हरित्कपिलवर्णयोः ।' इति विश्वः । **वाजिभिः** अश्वैः **च हरिं** इन्द्रं **विदित्वा** । 'हरिर्वातार्कचन्द्रेन्द्रयमोपेन्द्रमरीचिषु ।' इति विश्वः । **एनं** इन्द्रं **गगनस्पृशा** व्योमव्यापिना **धीरेण** गभीरेण **स्वरेण** ध्वनिनैव **निवर्तयन्निव अवोचत्** ॥

**मखांशभाजां प्रथमो मनीषिभिस्त्वमेव देवेन्द्र सदा निगद्यसे ।**
**अजस्रदीक्षाप्रयतस्य मद्गुरोः क्रियाविघाताय कथं प्रवर्तसे ॥ ४४ ॥**

हे **देवेन्द्र मनीषिभिस्त्वमेव मखांशभाजां** यज्ञभागभुजां **प्रथमः**, **सदा निगद्यसे** । तथाप्यजस्रदीक्षायां नित्यदीक्षायां प्रयतस्य [ **अजस्रदीक्षाप्रयतस्य** ] **मद्गुरोः क्रियाविघाताय** क्रतुविघाताय । क्रियां विहन्तुमित्यर्थः । 'तुमर्थाच्च भाववचनात्' इति चतुर्थी । **कथं प्रवर्तसे** ॥

**त्रिलोकनाथेन सदा मखद्विषस्त्वया नियम्या ननु दिव्यचक्षुषा ।**
**स चेत्स्वयं कर्मसु धर्मचारिणां त्वमन्तरायो भवसि च्युतो विधिः ॥४५॥**

---

१ 'स्वेदेन' इति चा० । 'दुग्धेन' इत्यपि केचित् । २ पुरा किल हिरण्याक्षमायया सञ्जातपक्षान्स्वस्थानप्रचलितान् पर्वतान् लोकक्षयाय प्रवृत्तानालोच्येन्द्रो वज्रेण तेषां पक्षान् चिच्छेद । तदुक्तं हरिवंशे—कदाचित्तु सपक्षास्ते पर्वता धरणीधराः । प्रस्थिता धरणीं त्यक्त्वा नूनं तस्यैव मायया ॥...स्थैर्यहेतोर्धरण्यास्तु ज्ञात्वा चागस्कृतान्गिरीन् । स्वेषु स्थानेषु संस्थाप्य पर्वतानां पुरन्दरः । चिच्छेद भगवान् पक्षान् वज्रेण शतपर्वणा ॥ सर्वेषामेव पक्षास्तु छिन्नाः शक्रेण धीमता । एकः सपक्षो मैनाकः सुरैस्तत्समयः कृतः ॥ इत्या० ३ नास्ति निमेषेऽक्षिस्पन्दे वृत्तिः व्यापारो येषां तैः । निमेषशून्यत्वं हि देवानां लक्षणम् । 'सुरमत्स्यावनिमिषौ' इत्यमरः । ४ 'गगनस्पृशा धीरेण चेति भीत्यभावोक्तिः' इति चा० ।

त्रयाणां लोकानां नाथस्त्रिलोकनाथः । 'तद्धितार्थ–' इत्यादिनोत्तरपदसमासः । तेन [ **त्रिलोकनाथेन** ] त्रैलोक्यनियामकेन **दिव्यचक्षुषा** अतीन्द्रियार्थदर्शिना **त्वया मखद्विषः** क्रतुविघातकाः **सदा नियम्या ननु** शिक्ष्याः खलु । **स त्वं धर्मचारिणां कर्मसु** क्रतुषु **स्वयमन्तरायः** विघ्नः **भवसि चेत्** । **विधिः** अनुष्ठानं **च्युतः** क्षतः । लोके सत्कर्मकथैवास्तमियादित्यर्थः ॥

**तदङ्गमग्र्यं मघवन्महाक्रतोरमुं तुरङ्गं प्रतिमोक्तुमर्हसि ।**
**पथः श्रुतेर्दर्शयितार ईश्वरा मलीमसामाददते न पद्धतिम् ॥ ४६ ॥**

हे **मघवन् तत्** तस्मात्कारणात् **महाक्रतोः** अश्वमेधस्य **अग्र्यं** श्रेष्ठं **अङ्गं** साधनं **अमुं तुरङ्गं प्रतिमोक्तुमर्हसि** । तथाहि । **श्रुतेः पथः दर्शयितारः** सन्मार्गप्रदर्शकाः **ईश्वराः** महान्तः **मलीमसां** मलिनां **पद्धतिं न आददते** न स्वीकुर्वते । असन्मार्गं नावलम्बन्त इत्यर्थः । 'मलीमसं तु मलिनं कच्चरं मलदूषितम् ।' इत्यमरः ॥

**इति प्रगल्भं रघुणा समीरितं वचो निशम्याधिपतिर्दिवौकसाम् ।**
**निवर्तयामास रथं सविस्मयः प्रचक्रमे च प्रतिवक्तुमुत्तरम् ॥ ४७ ॥**

**इति रघुणा समीरितं प्रगल्भं वचो निशम्य** आकर्ण्य । दिवौकसः स्वर्गौकसः । 'दिवं स्वर्गेऽन्तरिक्षे च' इति विश्वः । तेषां [ **दिवौकसाम्** ] **अधिपतिः** देवेन्द्रो रघुप्रभावात् **सविस्मयः** सन् । **रथं निवर्तयामास** । **उत्तरं प्रतिवक्तुं प्रचक्रमे च** ॥

**यदात्थ राजन्यकुमार तत्तथा यशस्तु रक्ष्यं परतो यशोधनैः ।**
**जगत्प्रकाशं तदशेषमिज्यया भवद्गुरुर्लङ्घयितुं ममोद्यतः ॥ ४८ ॥**

हे **राजन्यकुमार** क्षत्रियकुमार । 'मूर्धाभिषिक्तो राजन्यो बाहुजः क्षत्रियो विराट् ।' इत्यमरः । **यद्** वाक्यं **आत्थ** ब्रवीषि । 'ब्रुवः पञ्चानाम्–' इत्यादिनाहादेशः । **तत्तथा** सत्यम् । किं **तु यशोधनैः** अस्मादृशैः **परतः** शत्रुतः **यशः रक्ष्यम्** । ततः किमत आह–**भवद्गुरुः** त्वत्पिता **जगत्प्रकाशं** लोकप्रसिद्धं **अशेषं** सर्वं **मम तद्** यशः **इज्यया** यागेन **लङ्घयितुं** तिरस्कर्तुं **उद्यतः** उद्युक्तः ॥

किं तद्यश इत्याह—

**हरिर्यथैकः पुरुषोत्तमः स्मृतो महेश्वरस्त्र्यम्बक एव नापरः ।**
**तथा विदुर्मां मुनयः शतक्रतुं द्वितीयगामी न हि शब्द एष नः ॥४९॥**

---

१ अन्तर्मध्ये अन्तरस्य व्यवधानस्य वायनम् । अय् गतौ, इण् वा । घञ् प्रत्ययः । अच् वा २ अश्वं विनाश्वमेधस्यासंभवात् । ३ श्रुतेः–'स्वर्गकामोऽश्वमेधेन यजेत' इत्यादिरूपायाः । मलीमसाम्–मलोऽस्या अस्तीति ताम् । 'ज्योत्स्नातमिस्रा–' इति निपातितः । 'श्रुतेः' इत्यत्र 'शुचेः' इति व. दिनकरादयः पठन्ति । एतत्पाठे 'पथः' इति षठ्यन्तं पदम् । ४ गूढविग्रहमपि मां कथमयमदिव्यः पश्यति निर्भयं सदर्पं च भाषते इति समुपजातविस्मयः इति भावः । ५ क्रमितुमुद्युक्तः । 'व्रजयजोर्भावे क्यप्' इति इज्या । इति चा०

पुरुषेषूत्तम इति सप्तमीसमासः । ' न निर्धारणे ' इति षष्ठीसमासनिषेधात् । कर्मधारये तु ' सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः ' इत्युत्तमपुरुष इति स्यात् । **यथा हरिः** विष्णुः **एक एव पुरुषोत्तमः स्मृतः** । यथा च **त्र्यम्बकः** शिवः **एव महेश्वरः** स्मृतः । **नापरः** अपरः पुमान्न । **तथा मां मुनयः शतक्रतुं विदुः** विदन्ति । ' विदो लटो वा ' इति झेर्जुसादेशः । **नः** अस्माकम् । हरिहरयोर्मम चेत्यर्थः । **एष त्रितयोऽपि शब्दः द्वितीयगामी न हि** । द्वितीयाप्रकरणे गामिगम्यादीनामुपसंख्यानात्समासः ॥

**अतोऽयमश्वः कपिलानुकारिणा पितुस्त्वदीयस्य मयापहारितः ।**
**अलं प्रयत्नेन तवात्र मा निधाः पदं पदव्यां सगरस्य संततेः॥५०॥**

यतोऽहमेव शतक्रतुः **अतस्त्वदीयस्य पितु अयं** शततमः **अश्वः कपिलानुकारिणा** कपिलमुनितुल्येन **मया अपहारितः** अपहृतः । अपहारित इति स्वार्थे णिच् । **तवात्र** अश्वे **प्रयत्नेन अलम्** । प्रयत्नो मा कारीत्यर्थः । निषेध्यस्य निषेधं प्रति कारणत्वात्तृतीया । **सगरस्य** राज्ञः **संततेः** संतानस्य **पदव्यां पदं मा निधाः** न निधेहि । निपूर्वाद्धाङ्धातोर्लुङ् । ' माङ्योगे ' इत्यडागमप्रतिषेधः । महदास्कन्दनं ते विनाशमूलं भवेदिति भावः ॥

**ततः प्रहस्यापभयः पुरन्दरं पुनर्बभाषे तुरगस्य रक्षिता ।**
**गृहाण शस्त्रं यदि सर्ग एष ते न खल्वनिर्जित्य रघुं कृती भवान्॥५१॥**

**ततः तुरगस्य रक्षिता** रघुः **प्रहस्य** प्रहासं कृत्वा । **अपभयः** निर्भीकः सन् । **पुनः पुरन्दरं बभाषे** । किमिति–हे देवेन्द्र **यदि एष** अश्वामोचनरूपः **ते** तव **सर्गः** निश्चयः । ' सर्गः स्वभावनिर्मोक्षनिश्चयाध्यायसृष्टिषु । ' इत्यमरः । तर्हि **शस्त्रं गृहाण** ।

---

१ पुरुषोत्तमादीनां निरुक्तिर्महाभारते यथा—' नराणामयनाच्चापि ततो नारायणः स्मृतः । पुराणात्सदनाच्चापि ततोऽसौ पुरुषोत्तमः ॥' 'तिस्रो देव्यो यदा चैनं भजन्ते भुवनेश्वरम् । द्यौरपः पृथिवी चैव त्र्यम्बकस्तु ततः स्मृतः ॥ नित्येन ब्रह्मचर्येण लिङ्गमस्य यदा स्थितम् । महानस्त्येष लोकाच्च महेश्वर इति स्मृतः ॥ ' इति । अनुरूपभाव एकादशसर्गे अन्यदा जगाति–इ. श्लो. ७३. २ ' पुरा यज्ञाश्वमन्वेषयमाणाः सगरसुतास्तुरगापहारी अयमिति वदन्तः कपिलमुनिना व्यापादितास्तथा त्वमपि इति कपिलानुकृत्या सूचयति' इति चा. । अत्रेयं कथानुसन्धेया-पुरा किलेन्द्रः राक्षसीं तनुमास्थाय सगरस्य राज्ञो यज्ञियमश्वमपहृत्य पातालं निनाय । अथ सगरस्य षष्टिसहस्राणि पुत्रास्तदन्वेषणपरा धरणीतलमवदार्य पातालं गताः कपिलस्य नातिदूरे विचरन्तमश्वं दृष्ट्वा तमेवाश्वापहारिणं मत्वाभ्यधावन् । कुपितस्य तस्य हुङ्कारेण भस्मीभूताश्च । ( रामा. बा. का. ४० सर्गः ). कपिला०—कपिलानुसारिणा; मा कृथाः—मानुगाः इति पा. ३ ततः प्रहस्याह पुनः पुरन्दरं व्यपेतभीर्भूमिपुरन्दरात्मजः । इ. दिनकरः पठति. ४ अत्र तृन्प्रत्ययरूपकृद्योगात् ' तुरगस्य ' इति कर्मणि षष्ठी । अशीलार्थे तृन् प्रत्ययः शीलार्थे षष्ठीनिषेधात् । रघोः प्रयोजनवशादश्वरक्षणे नियुक्तत्वात् । ५ सर्गः—' सगरसुतपदवीं नेष्यामीत्येवंरूपः ' इ. चा. । ' सर्गः ' इत्यत्र ' गर्वः ' इ. व. सु. पठतः । चा० अपीमं पाठमुद्धराति ।

**भवान्रघुं** माम् **अनिर्जित्य** । कृतमनेनेति **कृती** कृतकृत्यो **न खलु** । 'इष्टादिभ्यश्च' इतीनिप्रत्ययः । रघुमित्यनेनात्मनो दुर्जयत्वं सूचितम् ॥

**स एवमुक्त्वा मघवन्तमुन्मुखः करिष्यमाणः सशरं शरासनम् ।**
**अतिष्ठदालीढविशेषशोभिना वपुःप्रकर्षेण विडम्बितेश्वरः ॥ ५२ ॥**

**स** रघुः **उन्मुखः** सन् । **मघवन्तं** इन्द्रं **एवमुक्त्वा शरासनं** चापं **सशरं करिष्यमाणः** । आलीढेनालीढाख्येन स्थानभेदेन विशेषशोभिनातिशयशोभिना [ **आलीढविशेषशोभिना** ] **वपुःप्रकर्षेण** देहौन्नत्येन **विडम्बितेश्वरः** अनुसृतपिनाकी सन् । **अतिष्ठत्** । आलीढलक्षणमाह यादवः—'स्थानानि धन्विनां पञ्च तत्र वैशाखमस्त्रियाम् । त्रिवितस्त्यन्तरौ पादौ मण्डलं तोरणाकृति ॥ अन्वर्थं स्यात्समपदमालीढं तु ततोऽग्रतः । दक्षिणे वाममाकुञ्च्य प्रत्यालीढविपर्ययः ॥' इति ॥

**रघोरवष्टम्भमयेन पत्रिणा हृदि क्षतो गोत्रभिदप्यमर्षणः ।**
**नवाम्बुदानीकमुहूर्तलाञ्छने धनुष्यमोघं समधत्त सायकम् ॥ ५३ ॥**

**रघोरवष्टम्भमयेन** स्तम्भरूपेण । 'अवष्टम्भः सुवर्णे च स्तम्भप्रारम्भयोरपि ।' इति विश्वः । **पत्रिणा** बाणेन **हृदि** हृदये **क्षतः** विद्धः । अत एव **अमर्षणः** असहनः । क्रुद्ध इत्यर्थः । **गोत्रभिद्** इन्द्रः **अपि** । 'संभावनीये चौरेऽपि गोत्रः क्षोणीधरे मतः ।' इति विश्वः । नवाम्बुदानामनीकस्य वृन्दस्य मुहूर्तं क्षणमात्रं लाञ्छने चिह्नभूते [**नवाम्बुदानीकमुहूर्तलाञ्छने**] **धनुषि** । दिव्ये धनुषीत्यर्थः । **अमोघम्** अवन्ध्यं **सायकं** बाणं **समधत्त** संहितवान् ॥

**दिलीपसूनोः स बृहद्भुजान्तरं प्रविश्य भीमासुरशोणितोचितः ।**
**पपावनास्वादितपूर्वमाशुगः कुतूहलेनेव मनुष्यशोणितम् ॥ ५४ ॥**

भीमानां भयंकराणामसुराणां शोणिते रुधिरे उचितः परिचितः [ **भीमासुरशोणितोचितः** ] **स** इन्द्रमुक्तः **आशुगः** सायकः **दिलीपसूनोः** रघोर्बृहद्विशालं भुजान्तरं वक्षः [ **बृहद्भुजान्तरं** ] **प्रविश्य** । **अनास्वादितपूर्वं** पूर्वमनास्वादितम् । सुप्सुपेति समासः । **मनुष्यशोणितं कुतूहलेनेव पपौ** ॥

**हरेः कुमारोऽपि कुमारविक्रमः सुरद्विपास्फालनकर्कशाङ्गुलौ ।**
**भुजे शचीपत्रविशेषकाङ्किते स्वनामचिह्नं निचखान सायकम् ॥५५॥**

---

१ 'नामिता पूर्वजङ्घा च पश्चिमा प्रगुणा भवेत् । असमो मध्यकायः स्यादालीढस्य च लक्षणम्' ॥ इ. चा. । कुमारसंभवेपि–स दक्षिणापाङ्गनिविष्टमुष्टिं नतांसमाकुञ्चितसव्यपादम् । इत्यालीढवर्णनम् । विडम्बितेति 'पुरा किल भगवान् त्रिपुरदिदृक्षया दिव्यं वर्षशतमालीढविशेषेण स्थानाधिक्येन ऊर्ध्वमुखोऽतिष्ठत्' । इ. व. उक्तं च भारते-'त्रिपुरस्य वधार्थाय स्थाणुः प्रहरतां वरः ।......स्थानं माहेश्वरं कृत्वा दिव्यमप्रतिमं प्रभुः । अतिष्ठत्स्थाणुभूतः स सहस्रं परिवत्सरान् ॥' इ. २ 'स्थैर्यरूपेण काञ्चनमयेन वा.' इ. चा० । 'अवष्टम्भप्रधानोऽवष्टम्भमयस्तेन रघोरभिमानमयेन पत्रिणा' इ. व. ।दिनकरोपि 'काञ्चनमयेन' इति व्याख्यायाह-प्रथमं काञ्चनमयप्रहारवर्णनं कविसमयाविरुद्धमिति केचिदाचक्षते । तन्मते अवष्टम्भमयेन स्थैर्यरूपेण । ३ आशु शीघ्रं गच्छतीति । गमेर्डः ।–इव पपौ उत्प्रेक्षालङ्कारः ।

कुमारस्य स्कन्दस्य विक्रम इव विक्रमो यस्य स तथोक्तः [ **कुमारविक्रमः** ]। 'सप्त-म्युपमानपूर्वस्य–' इत्यादिना समासः। **कुमारोऽपि** रघुरपि सुरद्विपस्यैरावतस्यास्फालनेन कर्कशा अङ्गुलयो यस्य स तस्मिन् [ **सुरद्विपास्फालनकर्कशाङ्गुलौ** ]। शच्याः पत्रविशेषकैरङ्किते **शचीपत्रविशेषकाङ्किते हरेः** इन्द्रस्य **भुजे स्वनामचिह्नं** स्वनामाङ्कितं **सायकं निचखान** निखातवान्। निष्कण्टकराज्यमाप्तस्यायं महानभिभव इति भावः॥

**जहार चान्येन मयूरपत्रिणा शरेण शक्रस्य महाशनिध्वजम्।**
**चुकोप तस्मै स भृशं सुरश्रियः प्रसह्य केशव्यपरोपणादिव॥ ५६॥**

**अन्येन मयूरपत्रिणा** मयूरपत्रवता **शरेण शक्रस्य** इन्द्रस्य **महाशनिध्वजं** महान्तमशनिरूपं ध्वजं **जहार** चिच्छेद **च**। **स** शक्रः **सुरश्रिय प्रसह्य** बलात्कृत्य केशानां व्यपरोपणादवतारणाच्छेदनाद् [ **केशव्यपरोपणाद्** ] **इव**। **तस्मै** रघवे **भृशं** अत्यर्थं **चुकोप**। तं हन्तुमियेषेत्यर्थः। 'क्रुधद्रुह–' इत्यादिना संप्रदानाच्चतुर्थी॥

**तयोरुपान्तस्थितसिद्धसैनिकं गरुत्मदाशीविषभीमदर्शनैः।**
**बभूव युद्धं तुमुलं जयैषिणोरधोमुखैरूर्ध्वमुखैश्च पत्रिभिः॥ ५७॥**

**जयैषिणोः** अन्योन्यजयाकाङ्क्षिणोः **तयोः** इन्द्ररघ्वोः। गरुत्मन्तः पक्षवन्तः। 'गरुत्पक्षच्छदाः पत्रम्' इत्यमरः। आशिषि दंष्ट्रायां विषं येषां त आशीविषाः सर्पाः। पृषोदरादित्वात्साधुः। 'स्त्री त्वाशीर्हिताशंसाहिदंष्ट्रयोः' इत्यमरः। त इव भीमदर्शनाः। सपक्षा सर्पा इव द्रष्टृणां भयावहा इत्यर्थः। तैः [ **गरुत्मदाशीविषभीमदर्शनैः** ] **अधोमुखैरूर्ध्वमुखैश्च**। धन्विनोरुपर्यधोदेशावस्थितत्वादिति भावः। **पत्रिभिः** बाणैरुपान्तस्थितास्तटस्थाः सिद्धा देवा इन्द्रस्य सैनिकाश्च रघोर्यस्मिंस्तत्तथोक्तं [ **उपान्तस्थितसिद्धसैनिकम्** ] **तुमुलं** संकुलं **युद्धं बभूव**॥

**अतिप्रबन्धप्रहितास्त्रवृष्टिभिस्तमाश्रयं दुष्प्रसहस्य तेजसः।**
**शशाक निर्वापयितुं न वासवः स्वतश्च्युतं वह्निमिवाद्भिरम्बुदः॥ ५८॥**

**वासवः** अप्रतिबन्धेनातिसातत्येन प्रहिताभिः प्रयुक्ताभिरस्त्रवृष्टिभिः [ **अतिप्रबन्धप्रहितास्त्रवृष्टिभिः** ] दुष्प्रसहस्य दुःखेन प्रसह्यत इति दुष्प्रसहं तस्य [ **दुष्प्रसहस्य** ]। दुःखेनाप्यसह्यस्येत्यर्थः। **तेजसः** प्रतापस्य **आश्रयं तं** रघुम्। **अम्बुदः अद्भिः स्वतश्च्युतं** निर्गतं **वह्निमिव**। **निर्वापयितुं न शशाक**। रघोरपि लोकपालात्मकस्येन्द्रांशसंभवत्वादिति भावः॥

**ततः प्रकोष्ठे हरिचन्दनाङ्किते प्रमथ्यमानार्णवधीरनादिनीम्।**
**रघुः शशाङ्कार्धमुखेन पत्रिणा शरासनज्यामलुनाद्बिडौजसः॥ ५९॥**

---

१ प्रोत्साहनेन ताडनेनेत्यर्थः। एवं कुमारोपि–ऐरावतास्फालनकर्कशेन हस्तेन पस्पर्श तदङ्गमिन्द्रः। इति। २ पत्राकारैः रचनाविशेषैः। 'शचीपत्रलताक्रियोचिते' इ. व. चा. दि. पठन्ति। ३ निष्कण्टकराज्ये तस्य इ. पाठः।

ततः **रघुर्हरिचन्दनाङ्किते प्रकोष्ठे** मणिबन्धे **प्रमथ्यमानार्णवधीरनादिनीं** प्रमथ्यमानार्णव इव धीरं गम्भीरं नदतीति तां तथोक्ताम्। वेवेष्टि व्याप्नोतीति विड् व्यापकमोजो यस्य स तस्य **बिडौजसः** इन्द्रस्य । पृषोदरादित्वात्साधुः । **शरासनज्यां** धनुर्मौर्वीं शशाङ्कस्यार्धः खण्ड इव मुखं फलं यस्य तेन [ **शशाङ्कार्धमुखेन** ] **पत्रिणा अलुनाद्** अच्छिनत् ॥

**स चापमुत्सृज्य विवृद्धमत्सरः प्रणाशनाय प्रबलस्य विद्विषः ।**
**महीध्रपक्षव्यपरोपणोचितं स्फुरत्प्रभामण्डलमस्त्रमाददे ॥ ६० ॥**

**विवृद्धमत्सरः** प्रवृद्धवैरः **स** इन्द्रः **चापमुत्सृज्य प्रबलस्य विद्विषः** शत्रोः **प्रणाशनाय** वधाय । महीं धारयन्तीति महीध्राः पर्वताः। मूलविभुजादित्वात्कप्रत्ययः । तेषां पक्षव्यपरोपणे पक्षच्छेदे उचितं [ **महीध्रपक्षव्यपरोपणोचितं** ] **स्फुरत्प्रभामण्डलम् अस्त्रं** वज्रायुधम् । **आददे** जग्राह ॥

**रघुर्भृशं वक्षसि तेन ताडितः पपात भूमौ सह सैनिकाश्रुभिः ।**
**निमेषमात्रादवधूय तद्व्यथां सहोत्थितः सैनिकहर्षनिःस्वनैः ॥ ६१ ॥**

**रघुः तेन** वज्रेण **भृशम्** अत्यर्थं **वक्षसि ताडितः** हतः सन्। सैनिकानामश्रुभिः [ **सैनिकाश्रुभिः** ] **सह भूमौ पपात** । तस्मिन्पतिते ते रुरुदुरित्यर्थः । **निमेषमात्रात् तद्व्यथां** दुःखम् **अवधूय** तिरस्कृत्य सैनिकानां हर्षेण ये निःस्वनाः क्ष्वेडास्तैः [ **सैनिकहर्षनिःस्वनैः** ] **सहोत्थितः** च । तस्मिन्नुत्थिते हर्षात्सिंहनादांश्चक्रुरित्यर्थः ॥

**तथापि शस्त्रव्यवहारनिष्ठुरे विपक्षभावे चिरमस्य तस्थुषः ।**
**तुतोष वीर्यातिशयेन वृत्रहा पदं हि सर्वत्र गुणैर्निधीयते ॥ ६२ ॥**

**तथापि** वज्रपातेऽपि शस्त्राणामायुधानां व्यवहारेण व्यापारेण निष्ठुरे क्रूरे । [ **शस्त्रव्यवहारनिष्ठुरे** ] **विपक्षभावे** शात्रवे **चिरं तस्थुषः** स्थितवतः **अस्य** रघोः **वीर्यातिशयेन** वृत्रं हतवानिति **वृत्रहा** । 'ब्रह्मभ्रूणवृत्रेषु क्विप्' । **तुतोष** । स्वयं वीर एव वीरं जानातीति भावः । कथं शत्रोः संतोषोऽत आह—**हि गुणैः सर्वत्र** शत्रुमित्रोदासीनेषु **पदम्** अङ्घ्रिः **निधीयते** । गुणैः सर्वत्र संक्रम्यत इत्यर्थः । गुणाः शत्रूनप्यावर्जयन्तीति भावः ॥

---

१ देवचन्दनचर्चालिप्ते । 'पञ्चैते देवतरवो......पुंसि वा हरिचन्दनम्' ॥ इत्यमरः । यद्वा कुङ्कुममण्डिते । 'गोशीर्षे । कुङ्कुमे देववृक्षे श्रीहरिचन्दनम्' इत्यर्धनारीश्वरः । २ विडतीति विडं भेदकमोजोऽस्येति वा । ३ तदुक्तं मत्स्यपुराणे–त्रिशूलं चापि रुद्रस्य वज्रमिन्द्रस्य चाधिकम् । दैत्यदानवसंहर्तुः सहस्रकिरणात्मकम् ॥ इति । महीध्रेति–पर्वतपक्षच्छेदनवृत्तान्तस्तूक्तः । ४ उक्तं च उत्तरं रामचरिते–वीराणां समयो हि दारुणरसः स्नेहक्रमं बाधते ॥ इति. । ५ 'गुणी गुणं वेत्ति न वेत्ति निर्गुणः' इति न्यायेनेति शेषः । ६ अनुरूपाः श्लोकांशाः–'गुणाः प्रियत्वेऽधिकृता न संस्तवः' इ. किरातार्जुनीये । 'गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः।' इ. उत्त. च. । कुमारेऽपि–'स्त्री पुमानित्यनास्थैषा वृत्तं हि महितं सताम्' इति ।

**असङ्गमद्रिष्वपि सारवत्तया न मे त्वदन्येन विसोढमायुधम् ।**
**अवेहि मां प्रीतमृते तुरङ्गमात्किमिच्छसीति स्फुटमाह वासवः ॥६३॥**

**सारवत्तया अद्रिषु अपि असङ्गम्** अप्रतिबन्धं **मे आयुधं** वज्रं **त्वदन्येन न विसोढम्** । अतः **मां प्रीतं** संतुष्टम् **अवेहि** । **तुरङ्गमादृते** तुरङ्गं वर्जयित्वा । 'अन्यारादितरर्ते–' इति पञ्चमी । **किमिच्छसि इति स्फुटं वासवः आह** । तुरङ्गमादन्यददेयं नास्तीति भावः ॥

**ततो निषङ्गादसमग्रमुद्धृतं सुवर्णपुङ्खद्युतिरञ्जिताङ्गुलिम् ।**
**नरेन्द्रसूनुः प्रतिसंहरन्निषुं प्रियंवदः प्रत्यवदत्सुरेश्वरम् ॥ ६४ ॥**

**ततो निषङ्गात्** तूणीराद् **असमग्रं** यथा तथा **उद्धृतं** सुवर्णपुङ्खद्युतिभी रञ्जिता अङ्गुलयो येन तं [ **सुवर्णपुङ्खद्युतिरञ्जिताङ्गुलिम्** ] **इषुम् प्रतिसंहरन्** निवर्तयन् नाप्रहरन्तं प्रहरेदिति निषेधादिति भावः । प्रियं वदतीति **प्रियंवदः** । 'प्रियवशे वदः खच्' इति खच्प्रत्ययः । 'अरुर्द्विषद्–' इत्यादिना मुमागमः । **नरेन्द्रसूनुः** रघुः **सुरेश्वरं प्रत्यवदत्** । न तु प्राहरदिति भावः ॥

**अमोच्यमश्वं यदि मन्यसे प्रभो ततः समाप्ते विधिनैव कर्मणि ।**
**अजस्रदीक्षाप्रयतः स मद्गुरुः क्रतोरशेषेण फलेन युज्यताम् ॥ ६५ ॥**

हे **प्रभो** इन्द्र **अश्वममोच्यं मन्यसे यदि ततः** तर्ह्यजस्रदीक्षायां प्रयतः [ **अजस्रदीक्षाप्रयतः** ] **स मद्गुरुः** मम पिता **विधिनैव कर्मणि समाप्ते** सति **क्रतोः** यत्फलं तेन **फलेनाशेषेण** कृत्स्नेन **युज्यतां** युक्तोऽस्तु । अश्वमेधफललाभे किमश्वेनेति भावः ॥

**यथा च वृत्तान्तमिमं सदोगतस्त्रिलोचनैकांशतया दुरासदः ।**
**तवैव संदेशहराद्विशांपतिः शृणोति लोकेश तथा विधीयताम् ॥६६॥**

**सदोगतः** सदो गृहं गतस्त्रिलोचनस्येश्वरस्यैकांशतया [ **त्रिलोचनैकांशतया** ] । अष्टानामन्यतममूर्तित्वात् । **दुरासदः** अस्मादृशैर्दुष्प्राप्यः **विशांपतिः यथेमं वृत्तान्तं तव संदेशहराद्** वार्ताहराद् **एव शृणोति च** हे **लोकेश** इन्द्र **तथा विधीयताम्** ॥

---

१ असङ्गम्—अभङ्गं, असह्यम् इ.; अवेहि–अवैहि इ. पा. । स्फुटम्–'स्मितम्' ( स्म तं ? ) इ. व०; 'वरं वृणीष्वेति तमाह' इ. चा० 'वरं वृणीष्वेति तमादिदेश सः' इ. दिन० च पठति । 'वरं वृणीष्वेति तमाह वृत्रहा' इ. पा. २ असमग्रनिःसृतम्; नरेन्द्र०—दिलीप०; प्रियंवदः—प्रियंवदम् इ. पा० ३ 'दीक्षितत्वात्त्रिलोचनस्यैकांशेन दुराधिगमः' इ. दिन. चा. । 'अष्टमूर्तित्वाद् यजमानलक्षणांशभावाद्दुरभिभवो दुराकलनीयः' इ. व० । 'दीक्षितमुग्रः प्रविशति' इ. आगम । 'या च होत्री' इति शाकुन्तले च।

**तथेति कामं प्रतिशुश्रुवान्रघोर्यथागतं मातलिसारथिर्ययौ ।**
**नृपस्य नातिप्रमनाः सदोगृहं सुदक्षिणासूनुरपि न्यवर्तत ॥ ६७ ॥**

**मातलिसारथिः** इन्द्रः **रघोः** संबन्धिनं **कामं** मनोरथं **तथेति** तथास्त्विति **प्रतिशुश्रुवान्** । 'भाषायां सदवसश्रुवः' इति क्वसुप्रत्ययः । **यथागतं ययौ** । **सुदक्षिणासूनुः** रघुः **अपि नातिप्रमनाः** विजयलाभेऽप्यश्वनाशान्नातीव तुष्टः सन् । नञर्थस्य नशब्दस्य सुप्सुपेति समासः । **नृपस्य सदोगृहं** प्रति **न्यवर्तत** ॥

**तमभ्यनन्दत्प्रथमं प्रबोधितः प्रजेश्वरः शासनहारिणा हरेः ।**
**परामृशन्हर्षजडेन पाणिना तदीयमङ्गं कुलिशव्रणाङ्कितम् ॥ ६८ ॥**

**हरेः** इन्द्रस्य **शासनहारिणा** पुरुषेण **प्रथमं प्रबोधितः** ज्ञापितः । वृत्तान्तमिति शेषः । **प्रजेश्वरः** दिलीपः **हर्षजडेन** हर्षशिशिरेण **पाणिना कुलिशव्रणाङ्कितम्** । तस्य रघोरिदम् [ **तदीयं** ] अङ्गं शरीरं **परामृशन्** तं रघुम् **अभ्यनन्दत्** ॥

**इति क्षितीशो नवतिं नवाधिकां महाक्रतूनां महनीयशासनः ।**
**समारुरुक्षुर्दिवमायुषः क्षये ततान सोपानपरंपरामिव ॥ ६९ ॥**

**महनीयशासनः** पूजनीयाज्ञः **क्षितीशः इति** अनेन प्रकारेण । 'इति हेतुप्रकरणप्रकर्षादिसमाप्तिषु ।' इत्यमरः । **महाक्रतूनाम्** अश्वमेधानां नवभिरधिकां [ **नवाधिकां** ] **नवतिं** एकोनशतं **आयुषः क्षये** सति **दिवं** स्वर्गं **समारुरुक्षुः** आरोढुमिच्छुः सोपानानां परंपरां पङ्क्तिं [ **सोपानपरंपराम्** ] **इव ततान** ॥

**अथ स विषयव्यावृत्तात्मा यथाविधि सूनवे**
**नृपतिककुदं दत्वा यूने सितातपवारणम् ।**
**मुनिवनतरुच्छायां देव्या तया सह शिश्रिये**
**गलितवयसामिक्ष्वाकूणामिदं हि कुलव्रतम् ॥ ७० ॥**

**अथ** विषयेभ्यो व्यावृत्तात्मा निवृत्तचित्तः [ **विषयव्यावृत्तात्मा** ] **स** दिलीपः **यथाविधि** यथाशास्त्रं **यूने सूनवे नृपतिककुदं** राजचिह्नम् । 'ककुद्वत्ककुदं श्रेष्ठे वृषाङ्के राजलक्ष्मणि ।' इति विश्वः । **सितातपवारणं** श्वेतच्छत्रं **दत्त्वा तया देव्या** सुदक्षिणया **सह** मुनिवनतरोः छायां [ **मुनिवनतरुच्छायां** ] **शिश्रिये** श्रितवान् । वानप्रस्थाश्रमं स्वीकृतवानित्यर्थः । तथा **हि** । **गलितवयसां** वृद्धानां **इक्ष्वाकूणां** इक्ष्वाकोः गोत्रापत्यानाम् ।

---

१ 'येन मार्गेणायातस्तेनैव गतः' इ. व० । 'न तु रघुं विजित्येति भावः इ. चा० । २ पुनः पुनः स्पृशन् । अभ्यनन्दत्—चुम्बनशिरोवघ्राणादिभिः संभावयामास । अनुरूपभावश्चतुर्दशे—'ते पुत्रयोर्नैर्ऋतशस्त्रमार्गानार्द्रानिवाङ्गे सदयं स्पृशन्त्यौ' इति । ३ विषयाः रूपरसगन्धस्पर्शशब्दाः । अस्य व्युत्पत्तिर्भट्टकारिकायाम्—विशब्दो हि विशेषार्थः सिनोतिर्बन्ध उच्यते । विशेषेण सिनोतीति विषयोऽतो नियामकः ॥ ४ सितच्छत्रस्य राजलक्ष्म्याः प्रधानाङ्गत्वाद्राजलक्ष्मीं दत्त्वेत्यर्थो लभ्यते । 'छत्रमातपवारणम्' इति हेमचन्द्रः ।

तद्राजसंज्ञकत्वादञो लुक्। **इदं** वनगमनं **कुलव्रतम्**। देव्या सहेत्यनेन सपत्नीकवानप्रस्थाश्रमपक्ष उक्तः। तथा च याज्ञवल्क्यः—'सुतविन्यस्तपत्नीकस्तया वानुगता वनम्। वानप्रस्थो ब्रह्मचारी साग्निः सोपासनो व्रजेत्॥' इति। हरिणीवृत्तमेतत्। तदुक्तम—'रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदा' इति॥

**इति महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया संजीवनीसमाख्यया व्याख्यया समेतो महाकविश्रीकालिदासकृतौ रघुवंशे महाकाव्ये रघुराज्याभिषेको नाम तृतीयः सर्गः।**

---

# चतुर्थः सर्गः।

शारदां शारदाम्भोजवदना वदनाम्बुजे।
सर्वदा सर्वदास्माकं सन्निधिं संनिधिं क्रियात्॥

**स राज्यं गुरुणा दत्तं प्रतिपद्याधिकं बभौ।**
**दिनान्ते निहितं तेजः सवित्रेव हुताशनः॥ १॥**

**स** रघुः **गुरुणा** पित्रा **दत्तं राज्यं** राज्ञः कर्म प्रजापरिपालनात्मकम्। पुरोहितादित्वाद्यक्। **प्रतिपद्य** प्राप्य। **दिनान्ते** सायंकाले **सवित्रा** सूर्येण **निहितं तेजः** प्रतिपद्य **हुताशनः** अग्निः **इव**। **अधिकं बभौ**। 'सौरं तेजः सायमग्निं संक्रमते। आदित्यो वा अस्तं यन्नग्निमनुप्रविशाति। अग्निं वा आदित्यः सायं प्रविशति' इत्यादिश्रुतिः प्रमाणम्॥

**दिलीपानन्तरं राज्ये तं निशम्य प्रतिष्ठितम्।**
**पूर्वं प्रधूमितो राज्ञां हृदयेऽग्निरिवोत्थितः॥ २॥**

**दिलीपानन्तरं राज्ये प्रतिष्ठितं** अवस्थितं **तं** रघुं **निशम्य** आकर्ण्य **पूर्वं**

---

१ अत्र अण इति पाठः लेखकप्रमादात्स्यात्। तद्राजस्य. बहुष्वित्यादिसूत्रेण तद्राजप्रत्ययानामेव लोपविधानात्।। २ अनुरूपं श्लोकद्वयमष्टमे–अथ वीक्ष्य रघुः प्रतिष्ठितं प्रकृतिष्वात्मजमात्मवत्तया। विषयेषु विनाशधर्मसु त्रिदिवस्थेष्वपि निस्पृहोऽभवत्॥ (१०) गुणवत्सुतरोपितश्रियः परिणामे हि दिलीपवंशजाः। पदवीं तरुवल्कवाससां प्रयताः संयमिनां प्रपेदिरे॥ (११) इति. ३ तदुक्तं प्राक्–'वार्द्धके मुनिवृत्तीनाम्' इत्यत्र। ४ अत्र मनुसंमतिस्तूक्ता (प्र. स. अष्ट. श्लो. टि.) ५ शरत्कालोत्पन्नकमलवत्प्रफुल्लवदना शारदा वाग्देवी सर्वदा सर्वस्य दात्री सर्वदास्माकं वदनाम्बुजे सतां मङ्गलानां निधिं शेवधिभूतं सन्निधिं वसतिमित्यर्थः क्रियात्। ६ प्रथमद्वितीययोर्मध्ये—न्यस्तशस्त्रं दिलीपं च तं च शुश्रुवुषां प्रभु(पति)म्। राज्ञामुद्धृत(त्वा)नाराचे हृदि शल्यमिवार्पितम्॥ इति पद्यं चा. दि. व. सु. पठन्ति।

दिलीपकाले **राज्ञां हृदये** प्रकर्षेण धूमोऽस्य संजातः **प्रधूमितः अग्निः** संतापाग्निः **उत्थितः इव** प्रज्वलित इव । पूर्वेभ्योऽधिकसंतापोऽभूदित्यर्थः । राजकर्तृकस्यापि निशमनस्याग्नावुपचारान्न समानकर्तृकत्वविरोधः ॥

**पुरुहूतध्वजस्येव तस्योन्नयनपङ्क्तयः ।**
**नवाभ्युत्थानदर्शिन्यो ननन्दुः सप्रजाः प्रजाः ॥ ३ ॥**

पुरुहूतध्वजः इन्द्रध्वजः । स किल राजभिर्वृष्ट्यर्थं पूज्यत इत्युक्तं भविष्योत्तरे—'एवं यः कुरुते यात्रामिन्द्रकेतोर्युधिष्ठिर । पर्जन्यः कालवर्षी स्यात्तस्य राज्ये न संशयः ॥' इति । 'चतुरस्रं ध्वजाकारं राजद्वारे प्रतिष्ठितम् । आहुः शक्रध्वजं नाम पौरलोकसुखावहम् ॥' इति च **पुरुहूतध्वजस्येव तस्य** रघोर्नवमभ्युत्थानमभ्युन्नतिमभ्युदयं च पश्यन्तीति **नवाभ्युत्थानदर्शिन्यः** । उदूर्ध्वं प्रस्थिता उल्लसिताश्च नयनपङ्क्तयो यासां ताः [ **उन्नयनपङ्क्तयः** ] **सप्रजाः** ससंतानाः **प्रजाः** जनाः । 'प्रजा स्यात्संततौ जने' इत्युभयत्राप्यमरः । **ननन्दुः** ॥

**सममेव समाक्रान्तं द्वयं द्विरदगामिना ।**
**तेन सिंहासनं पित्र्यमखिलं चारिमण्डलम् ॥ ४ ॥**

द्विरद इव द्विरदैश्च गच्छतीति **द्विरदगामिना** । 'कर्तर्युपमाने' इति 'सुप्यजातौ–' इति च णिनिः । **तेन** रघुणा **समं** युगपद् **एव द्वयं समाक्रान्तं** अधि-

१ सञ्जातधूमोत्पीड इत्यर्थः । २ तुमुन्क्त्वाल्यबादयः प्रत्ययाः समानकर्तृकत्वे भवन्ति । अत्र राज्ञो राजहृदयस्थिताग्नीनां चाधाराधेयभावतया परस्परसम्बन्धादेकस्य कर्तृत्वेऽन्यस्यापि कर्तृत्वं लक्षणयोपपद्यत इत्यर्थः । वस्तुतस्तु तुमुनादिप्रत्ययानां समानकर्तृत्वं नैकान्तिकं भिन्नकर्तृकस्यापि बहुलं प्रयोगेषु दर्शनात् । प्रधूमितः—०ते इति चा. दि. व. सु० पठन्ति । ३ पुरु बहुलं हूतमाह्वानं यज्ञेष्वस्य । पुरूणि हूतानि नामान्यस्येति वा । पुरुहूतध्वजस्येव इन्द्रमहोत्सवस्येव । तथाहि–'गजाकारं चतुःस्तम्भं पुरद्वारे प्रतिष्ठितं । पौराः कुर्वन्ति शरदि पुरुहूतमहोत्सवम्' ॥ इति व० । कालिकापुराणे च–एवं यः कुरुते पूजां वासवस्य महात्मनः । स चिरं पृथिवीं भुक्त्वा वासवं लोकमाप्नुयात् ॥ न तस्य राज्ये दुर्भिक्षं नेतयो न्याप्यधर्मकृत् । स्थास्यन्ति मृत्युर्नाकाले जनानां तत्र जायते ॥ इत्या० । अत्रेयं पौराणिकी कथा—पुरा किल दानवपरिभूता इन्द्रपुरःसरा देवाः क्षीरसागरशायिनं भगवन्तं शरणं वव्रजुः । तदा विष्णुर्दैत्यकुलसंहाराय दिव्यप्रभावं विचित्रं ध्वजमेकं महेन्द्राय प्रादात् । तत्प्रभावादिन्द्रः सर्वान्दानवाञ्जघान । इन्द्रदत्तं च तं ध्वजं पूजयित्वा वसुर्नाम चेदिनृपः परां सिद्धिं लेभे । ततः प्रीतो महेन्द्रो व्यादिदेश–'प्रीतो महेन मघवा प्राहैवं ये नृपाः करिष्यन्ति । वसुवद्वसुमन्तस्ते भुवि सिद्धाज्ञा भविष्यन्ति ॥ मुदिताः प्रजाश्च तेषां भयरोगविवर्जिताः प्रभूतान्नाः । ध्वज एव चाभिधास्यति जगति निमित्तैः फलं सदसत् ॥' इत्या० । विस्तरस्तु बृहत्संहितायां ४३ अध्याये द्रष्टव्यः । ४ 'गजारोहणादिकम् । अभिषिक्तो हि राजा गजेन्द्रमारुह्य पुरं प्रदक्षिणीकुर्यादित्याचारः' इति चा० । सप्रजाः–'सुप्रजाः' इ. चा. दि. व. सु. पठन्ति । ५ पैत्र्यमिति पा. ६ द्विरदेन गन्तुं शीलं यस्य तेन । अभिषिक्तो नृपो हस्तिनमारुह्य भ्रमतीति वृद्धाचारः । इ. दि. । द्विरद इव गच्छतीति 'द्विरदगामी तेन । 'द्विरदमारुह्य पुरं प्रदक्षिणीकृतवता' । इति व० ७ अत्र सिंहासनारोहणानन्तरमेवारिमण्डलाक्रमणेपि कार्यकारणयोः समकालत्वेन निर्देशादतिशयोक्तिनामालङ्कारः । 'कार्यकारणयोर्यश्च पौर्वापर्यविपर्ययः' इति काव्यप्रकाशोक्तेः ।

ष्ठितम् । किं तद् द्वयम् । पितुरागतं **पित्र्यम्** । ' पितुर्यत् ' इति यत्प्रत्ययः । **सिंहासनम्** । **अखिलं** अरीणां मण्डलं राष्ट्रं [ **अरिमण्डलम्** ] **च** ॥

अथ सिंहासनारोहणानन्तरं तस्य लक्ष्मीसन्निधानमाह—

**छायामण्डललक्ष्येण तमदृश्या किल स्वयम् ।**
**पद्मा पद्मातपत्रेण भेजे साम्राज्यदीक्षितम् ॥ ५ ॥**

अत्र रघोस्तेजोविशेषेण स्वयं सन्निहितया लक्ष्म्या छत्रधारणं कृतमित्युत्प्रेक्षते । **पद्मा** लक्ष्मीः । ' लक्ष्मीः पद्मालया पद्मा कमला श्रीर्हरिप्रिया । ' इत्यमर । सा **स्वयमदृश्या किल** । किलेति संभावनायाम् । सती **छायामण्डललक्ष्येण** कान्तिपुञ्जानुमेयेन । न तु स्वरूपतो दृश्येन । छायामण्डलमित्यनेनानातपज्ञानं लक्ष्यते । ' छाया सूर्यप्रिया कान्तिः तिबिम्बमनातपः । ' इत्युभयत्राप्यमरः । **पद्मातपत्रेण** पद्ममेवातपत्रं तेन कारणभूतेन **साम्राज्यदीक्षितं** साम्राज्ये साम्राज्यकर्मणि मण्डलाधिपत्ये दीक्षितमभिषिक्तं **तं भेजे** । अन्यथा कथमेतादृशी कान्तिसंपत्तिरिति भावः ॥

संप्रति सरस्वतीसान्निध्यमाह—

**परिकल्पितसान्निध्या काले काले च वन्दिषु ।**
**स्तुत्यं स्तुतिभिरर्थ्याभिरुपतस्थे सरस्वती ॥ ६ ॥**

**सरस्वती च काले काले** सर्वेष्वपि योग्यकालेषु । ' नित्यवीप्सयोः ' इति वीप्सायां द्विर्वचनम् । **वन्दिषु परिकल्पितसान्निध्या** कृतसन्निधाना सती **स्तुत्यं** स्तोत्रार्हं तं रघुम् । **अर्थ्याभिः** अर्थादनपेताभिः । ' धर्मपथ्यर्थन्यायादनपेते ' इति यत्प्रत्ययः । **स्तुतिभिः** स्तोत्रैः **उपतस्थे** । । देवताबुद्ध्या पूजितवतीत्यर्थः । देवतात्वं च ' ना विष्णुः पृथिवीपतिः ' इति वा लोकपालात्मकत्वाद्वेत्यनुसंधेयम् । एवं च सति ' उपाद्देवपूजासंगतिकरणमित्रकरणपथिषु ' इति वक्तव्यादात्मनेपदं सिध्यति ॥

**मनुप्रभृतिभिर्मान्यैर्भुक्ता यद्यपि राजभिः ।**
**तथाप्यनन्यपूर्वेव तस्मिन्नासीद्वसुन्धरा ॥ ७ ॥**

**वसुन्धरा मनुप्रभृतिभिः** मन्वादिभिः **मान्यैः** पूज्यैः **राजभिर्भुक्ता यद्यपि** । भुक्तैवेत्यर्थः । यद्यपीत्यवधारणे । ' अप्यर्थे यदिवार्थे स्यात् ' इति केशवः । **तथापि तस्मिन्** राज्ञि । अन्यः पूर्वो यस्याः साऽन्यपूर्वा । अन्यपूर्वा न भवतीति **अनन्यपूर्वा** अनन्योपभुक्ता **इवासीत्** । तत्प्रथमपतिकेवानुरक्तवतीत्यर्थः ॥

अत्र कारणमाह—

**स हि सर्वस्य लोकस्य युक्तदण्डतया मनः ।**
**आददे नातिशीतोष्णो नभस्वानिव दक्षिणः ॥ ८ ॥**

---

१ ' लक्ष्मीर्हि पद्मरूपेण छत्रेण सम्राजं सेवते इत्यागमः ' इ० दि० । उत्प्रेक्षालङ्कारः । २ अत्रान्योन्यवैरभावाश्रिताभ्यामपि लक्ष्मीसरस्वतीभ्यां सेवाकरणाद्रघोः कोपि महिमातिशयः सूचितः । ३ सीद्वि मेदिनी. इ. पा. ४ याद्दन्द०.

हि यस्मात्कारणात् **स** रघुः **युक्तदण्डतया** यथापराधदण्डतया **सर्वस्य लोकस्य मनः आददे** जहार । क इव । अतिशीतोऽत्युष्णो वा न भवतीति **नातिशीतोष्णः** । नञर्थस्य नशब्दस्य सुप्सुपेति समासः । **दक्षिणः** दक्षिणदिग्भवः **नभस्वान्** वायुः **इव** । मलयानिल इवेत्यर्थः । युक्तदण्डतयेत्यत्र कामन्दकः—' उद्वेजयति तीक्ष्णेन मृदुना परिभूयते । दण्डेन नृपतिस्तस्माद्युक्तदण्डः प्रशस्यते ॥ ' इति ॥

**मन्दोत्कण्ठाः कृतास्तेन गुणाधिकतया गुरौ ।**
**फलेन सहकारस्य पुष्पोद्गम इव प्रजाः ॥ ९ ॥**

**तेन** रघुणा **प्रजाः गुरौ** दिलीपविषये । सहकारोऽतिसौरभश्चूतः । ' आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः । ' इत्यमरः । तस्य [ **सहकारस्य** ] **फलेन पुष्पोद्गमे** पुष्पोदये **इव** । ततोऽपि **गुणाधिकतया** हेतुना **मन्दोत्कण्ठाः** अल्पौत्सुक्याः **कृताः** । गुणोत्तरश्चोत्तरविषयः पूर्वं विस्मारयतीति भावः ॥

**नयविद्भिर्नवे राज्ञि सदसच्चोपदर्शितम् ।**
**पूर्व एवाभवत्पक्षस्तस्मिन्नाभवदुत्तरः ॥ १० ॥**

**नयविद्भिः** नीतिशास्त्रज्ञैः **नवे** तस्मिन् **राज्ञि** विषये । तमधिकृत्येत्यर्थः । सद्धर्मयुद्धादिकमसत्कूटयुद्धादिकं [ **सदसद्** ] **चोपदर्शितम्** । **तस्मिन्** राज्ञि **पूर्वः पक्ष एवाभवत्** । संक्रान्त इत्यर्थः । **उत्तरः पक्षः नाभवत्** । न संक्रान्त इत्यर्थः । तत्र सदसतोर्मध्ये सदेवाभिमतं नासत् । तदुद्भावनं तु ज्ञानार्थमेवेत्यर्थः । पक्षः साधनयोग्यार्थः । ' पक्षः पार्श्वगरुत्साध्यसहायबलभित्तिषु । ' इति केशवः ॥

**पञ्चानामपि भूतानामुत्कर्षं पुपुषुर्गुणाः ।**
**नवे तस्मिन्महीपाले सर्वं नवमिवाभवत् ॥ ११ ॥**

पृथिव्यादीनां **पञ्चानां भूतानामपि गुणाः** गन्धादयः **उत्कर्षम्** अतिशयं **पुपुषुः** । अत्रोत्प्रेक्षते—**तस्मिन्** रघौ नाम **नवे महीपाले** सति **सर्वं** वस्तुजातं **नवमिवाभवत्** । तदेव भूतजातमिदानीमपूर्वगुणयोगादपूर्वमिवाभवदिति भावः ॥

---

१ उक्तं च भारते—मृदुर्भवत्यवज्ञातस्तीक्ष्णादुद्विजते जनः । काले काले तु सम्प्राप्ते मृदुस्तीक्ष्णोऽथवा भवेत् ॥ अनुरूपश्लोकोऽष्टमे—न खरो न च भूयसा मृदुः–इ० । किरातार्जुनीये च–समवृत्तिरुपैति मार्दवं समये यश्च तनोति तीक्ष्णताम् । अधितिष्ठति लोकमोजसा स विवस्वानिव मेदिनीपतिः ॥ इति । २ नयवद्भिः इ. पा. ३ उभे प्रज्ञे वेदितव्ये ऋज्वी वक्रा च भारत । जानन्वक्रां न सेवेत प्रतिबाधेत चागताम् । इति भारते च । ४ ' पृथ्वी पञ्चगुणा तोयं चतुर्गुणमथानिलः । त्रिगुणो द्विगुणो वायुर्वियदेकगुणं भवेत् '॥ इ० व० । ते च गुणा यथा—पृथिव्यां रूपरसगन्धस्पर्शशब्दाः पञ्च गुणाः । अप्सु रूपरसस्पर्शशब्दाश्चत्वारो गुणाः । तेजसि रूपस्पर्शशब्दास्त्रयो गुणाः । मरुति स्पर्शशब्दौ द्वौ गुणौ । व्योम्नि च शब्द एवैको गुणः । तदुक्तं प्रपञ्चसारे–शब्दाद्व्योम स्पर्शतस्तेन वायुस्ताभ्यां रूपाद्वह्निरेतै रसाच्च । अम्भांस्येतैर्गन्धतो भूधराद्या भूताः पञ्च स्युर्गुणोनाः क्रमेण । इति ।

**यथा प्रह्लादनाच्चन्द्रः प्रतापात्तपनो यथा ।**
**तथैव सोऽभूदन्वर्थो राजा प्रकृतिरञ्जनात् ॥ १२ ॥**

**यथा** चन्दयतीत्याह्लादयतीति **चन्द्रः** इन्दुः । चदिधातोरौणादिको रप्रत्ययः। **प्रह्लादनात्** आह्लादकरणाद् **अन्वर्थः** अनुगतार्थनामको **अभूत्** । **यथा** च तपतीति **तपनः** सूर्यः । नन्द्यादित्वाल्ल्युट्प्रत्ययः । **प्रतापात्** संतापजननादन्वर्थः । **तथैव स राजा प्रकृतिरञ्जनाद् अन्वर्थः** सार्थकराजशब्दः **अभूत्** । यद्यपि राजशब्दो राजते-र्दीप्त्यर्थात्कनिन्प्रत्ययान्तो न तु रञ्जेस्तथापि धातूनामनेकार्थत्वाद्रञ्जनाद्राजेत्युक्तं कविना ॥

**कामं कर्णान्तविश्रान्ते विशाले तस्य लोचने ।**
**चक्षुष्मत्ता तु शास्त्रेण सूक्ष्मकार्यार्थदर्शिना ॥ १३ ॥**

**विशाले तस्य** रघोः **लोचने कामं** कर्णान्तयोर्विश्रान्ते कर्णप्रान्तगते [ **कर्णान्तविश्रान्ते** ] । **चक्षुष्मत्ता तु** चक्षुःफलं त्वित्यर्थः । सूक्ष्मान्कार्यार्थान्कर्तव्यार्थान्दर्शयति प्रकाशयतीति **सूक्ष्मकार्यार्थदर्शिना शास्त्रेण** एव । शास्त्रं दृष्टिर्विवेकिनामिति भावः ॥

**लब्धप्रशमनस्वस्थमथैनं समुपस्थिता ।**
**पार्थिवश्रीर्द्वितीयेव शरत्पङ्कजलक्षणा ॥ १४ ॥**

**अथ** लब्धस्य राज्यस्य प्रशमनेन परिपन्थिनामनुरञ्जनप्रतीकाराभ्यां स्थिरीकरणेन स्वस्थं समाहितचित्तं [ **लब्धप्रशमनस्वस्थं** ] **एनं** रघुं **पङ्कजलक्षणा** पद्मचिह्ना । श्रियोऽपि विशेषणमेतत् । **शरत्** । **द्वितीया पार्थिवश्रीः** राजलक्ष्मीः **इव** । **समुपस्थिता** प्राप्ता । 'रक्षा पौरजनस्य देशनगरग्रामेषु गुप्तिस्तथा योधानामपि संग्रहोऽपि तुलया मानव्यवस्थापनम् । साम्यं लिङ्गिषु दानवृत्तिकरणं त्यागः समानेऽर्चनं कार्याण्येव महीभुजां प्रशमनान्येतानि राज्ये नवे ॥'

**निर्वृष्टलघुभिर्मेघैर्मुक्तवर्त्मा सुदुःसहः ।**
**प्रतापस्तस्य भानोश्च युगपद्व्यानशे दिशः ॥ १५ ॥**

---

१ एवं महाभारतेपि–रञ्जिताश्च प्रजाः सर्वास्तेन राजेति शब्द्यते । इ० शान्तिप० । अन्वर्थः–'अर्थमनुगतोऽन्वर्थ इति कैय्यटः' इ० चा० ॥ २ उक्तं च हितोपदेशे–'अनेकसंशयोच्छेदि परोक्षार्थस्य दर्शकम् । सर्वस्य लोचनं शास्त्रं यस्य नास्त्यन्ध एव सः' ॥ इति 'शास्त्रं चक्षुर्विवेकिनाम्' इति चान्यत्र । अत्र टीकास्थानीयं दशकुमारचरितवाक्यम्—आगमदीपदृष्टेन खल्वध्वना सुखेन वर्तते लोकयात्रा । दिव्यं हि चक्षुर्भूतभवद्भविष्यत्सु व्यवहितविप्रकृष्टादिषु च विषयेषु शास्त्रं नामाप्रतिहतवृत्ति । तेन हीनः सतोरप्यायतविशालयोर्लोचनयोरन्ध एव जन्तुरर्थदर्शनेष्वसामर्थ्यात् । इ०—कामम् इ०–कामं कमलपत्राणां नेत्रे तस्यानुकारिणी इ. दि. चा० पठतः। 'सूक्ष्मेति–सूक्ष्मकार्यार्थदर्शिनः' इ. पा. ३ 'लब्धप्रशमनं स्वस्थम्' इति चा. व. दयः पठन्ति। ४ निर्वृष्टलघुभिर्मेघैः सवितुस्तस्य चोभयोः । वर्द्धिष्णवो दिशां भागान्प्रतापा यत्र रोचिताः॥ इति दि. चा. पठतः।

निःशेषं वृष्टा निर्वृष्टाः । कर्तरि क्तः । अत एव लघवः । तैः [ **निर्वृष्टलघुभिः** ] **मेघैः मुक्तवर्त्मा** त्यक्तमार्गः । अत एव **सुदुःसहः । तस्य** रघोः **भानोश्च प्रतापः** पौरुषमातपश्च । 'प्रतापौ पौरुषातपौ' इति यादवः । **युगपद्दिशः व्यानशे** व्याप ॥

**वार्षिकं संजहारेन्द्रो धनुर्जैत्रं रघुर्दधौ ।**
**प्रजार्थसाधने तौ हि पर्यायोद्यतकार्मुकौ ॥ १६ ॥**

**इन्द्रः** वर्षासु भवं **वार्षिकम्** । वर्षानिमित्तमित्यर्थः । 'वर्षाभ्यष्ठक्' इति ठक्प्रत्ययः । **धनुः संजहार । रघुर्जैत्रं** जयशीलम् । जेतृशब्दात्तृन्नन्तात् 'प्रज्ञादिभ्यश्च' इति स्वार्थेऽण्प्रत्यः । धनुः **दधौ । हि** यस्मात् **तौ** इन्द्ररघू प्रजानामर्थस्य प्रयोजनस्य वृष्टिविजयलक्षणस्य साधनविषये [ **प्रजार्थसाधने** ] पर्यायेणोद्यते कार्मुके याभ्यां तौ **पर्यायोद्यतकार्मुकौ** । 'पर्यायोद्यमविश्रमौ' इति पाठान्तरे पर्यायेणोद्यमो विश्रमश्च ययोस्तौ पर्यायोद्यमविश्रमौ । द्वयोः पर्यायकरणादक्लेश इति भावः ॥

**पुण्डरीकातपत्रस्तं विकसत्काशचामरः ।**
**ऋतुर्विडम्बयामास न पुनः प्राप तच्छ्रियम् ॥ १७ ॥**

[ **पुण्डरीकातपत्रः** ] पुण्डरीकं सिताम्भोजमेवातपत्रं यस्य स तथोक्तः । [ **विकसत्काशचामरः** ] विकसन्ति काशानि काशाख्यतृणकुसुमान्येव चामराणि यस्य स तथोक्तः । **ऋतुः** शरदृतुः । पुण्डरीकनिभातपत्रं काशनिभचामरं **तं** रघुं **विडम्बयामास** अनुचकार । तस्य रघोः श्रियं [ **तच्छ्रियम्** ] **पुनः** शोभां तु **न प्राप** । 'शोभासंपत्तिपद्मासु लक्ष्मीः श्रीरिव दृश्यते ।' इति शाश्वतः ॥

**प्रसादसुमुखे तस्मिंश्चन्द्रे च विशदप्रभे ।**
**तदा चक्षुष्मतां प्रीतिरासीत्समरसा द्वयोः ॥ १८ ॥**

प्रसादेन सुमुखे [ **प्रसादसुमुखे** ] **तस्मिन्** रघौ **विशदप्रभे** निर्मलकान्तौ **चन्द्रे च द्वयोः** विषये **तदा चक्षुष्मतां प्रीतिः** अनुरागः **समरसा** समस्वादा । तुल्ययोगेति यावत् । 'रसो गन्धे रसः स्वादे' इति विश्वः । **आसीत्** ॥

**हंसश्रेणीषु[3] तारासु कुमुद्वत्सु च वारिषु ।**
**विभूतयस्तदीयानां पर्यस्ता यशसामिव ॥ १९ ॥**

हंसानां श्रेणीषु पङ्क्तिषु । [ **हंसश्रेणीषु** ] । **तारासु** नक्षत्रेषु । कुमुदानि येषु सन्तीति कुमुद्वन्ति । 'कुमुद्वान्कुमुदप्रायः' इत्यमरः । 'कुमुदनडवेतसेभ्यो ड्मतुप्' । तेषु

---

१ अयं दि. सम्मतः पाठः । अनुरूपो भाव उक्तः प्रथमे-'दुदोह गां स यज्ञाय-'इत्यत्र । अस्माच्छ्लोकात्परमतिरिक्तं श्लोकमेकं सु० व० पठतः-'अधिज्यमायुधं कर्तुं समयोयं रघोरिति । स्वं धनुः शङ्कितेनेव संजह्रे शतमन्युना ॥ इ० २ विकसत्-इ. पा. ३ श्रेणिषु इ. पा. । ४ 'यशसि धवलता वर्ण्यते' इति कविसमयानुरोधादुत्प्रेक्षते हंसेति । क्रियोत्प्रेक्षा ।

[**कुमुद्वत्सु**] । कुमुदप्रायेष्वित्यर्थः । **वारिषु च तदीयानां** रघुसंबन्धिनां **यशसां विभूतयः** संपदः **पर्यस्ताः इव** प्रसारिताः किम् । इत्युत्प्रेक्षा । अन्यथा कथमेषां धवलिमेति भावः ॥

**इक्षुच्छायनिषादिन्यस्तस्य गोप्तुर्गुणोदयम् ।**
**आकुमारकथोद्धातं शालिगोप्यो जगुर्यशः ॥ २० ॥**

इक्षूणां छायेक्षुच्छायम् । 'छाया बाहुल्ये' इति नपुंसकत्वम् । तत्र निषण्णाः **इक्षुच्छायनिषादिन्यः** । 'इक्षुच्छायानिषादिन्यः' इति स्त्रीलिङ्गपाठ इक्षोश्छायेति विग्रहः । अन्यथा बहुत्वे नपुंसकत्वप्रसङ्गात् । शालीन्गोपायन्ति रक्षन्तीति **शालिगोप्यः** सस्यपालिकाः स्त्रियः । 'कर्मण्यण्' । 'टिड्ढाणञ्–' इत्यादिना ङीप् । **गोप्तुः** रक्षकस्य **तस्य** रघोः । गुणेभ्य उदयो यस्य तद् **गुणोदयं** गुणोत्पन्नमाकुमारं कुमारादारभ्य कथोद्धातः कथारम्भः यस्य तत् [ **आकुमारकथोद्घातं** ] । कुमारैरपि स्तूयमानमित्यर्थः । **यशः जगुः** गायन्ति स्म । अथ वा कुमारस्य सतो रघोर्याः कथा इन्द्रविजयादयस्तत आरभ्याकुमारकथम् । तत्राप्यभिविधावव्ययीभावः । आकुमारकथमुद्धातो यस्मिन्कर्मणि । गानक्रियाविशेषणमेतत् । 'स्यादभ्यादानमुद्धात आरम्भः' इत्यमरः । 'आकुमारकथोद्भूतम्' इति पाठे कुमारस्य सतस्तस्य कथाभिश्चरितैरुद्भूतं यद्यशस्तद्यश आरभ्य यशो जगुरिति व्याख्येयम् ॥

**प्रससादोदयादम्भः कुम्भयोनेर्महौजसः ।**
**रघोरभिभवाशङ्कि चुक्षुभे द्विषतां मनः ॥ २१ ॥**

**महौजसः कुम्भयोनेः** अगस्त्यस्य । 'अगस्त्यः कुम्भसंभवः' इत्यमरः । **उदयाद् अम्भः प्रससाद** प्रसन्नं बभूव । महौजसः **रघोः** उदयाद् **अभिभवाशङ्कि द्विषतां मनश्चुक्षुभे** कालुष्यं प्राप । 'अगस्त्योदये जलानि प्रसीदन्ति' इत्यागमः ।

**मदोदग्राः ककुद्मन्तः सरितां कूलमुद्रुजाः ।**
**लीलाखेलमनुप्रापुर्महोक्षास्तस्य विक्रमम् ॥ २२ ॥**

**मदोदग्राः** मदोद्धताः । ककुदेषामस्तीति **ककुद्मन्तः** । महाककुद इत्यर्थः । यवादित्वान्मकारस्य वत्वाभावः । **सरितां** कूलान्युद्रुजन्तीति **कूलमुद्रुजाः** । 'उदि

---

१ तस्य गोप्तुर्द्विरेफानां कर्णोत्पलनिपातिनाम् । स्वरसंवादिभिः कण्ठैः शालिगोप्यो जगुर्गुणान् ॥ इति सर्व एव श्लोकोन्यथा पठ्यते कैश्चित् । इक्षुच्छाय०—०च्छायानि० इति चा. व० स. दि० । कथोद्धातम्—०कथोद्भूतम् । इ. दि. सु०. २ अगस्त्यस्य कुम्भयोनित्वकथा यास्कनिरुक्ते— तयोरादित्ययोः सत्रे दृष्ट्वाप्सरसमुर्वशीम् । रेतश्चस्कन्द तत्कुम्भेऽन्यपतद्वासतीवरे ॥ तेनैव तु मुहूर्तेन वीर्यवन्तौ तपस्विनौ । अगस्त्यश्च वसिष्ठश्च तत्रर्षी संबभूवतुः ॥ बहुधा पतितं रेतः कलशे च जले स्थले । स्थले वसिष्ठस्तु मुनिः संबभूवर्षिसत्तमः ॥ कुम्भे त्वगस्त्यः संभूतो जले मत्स्यो महाद्युतिः । इ० पद्मपु० सृष्टिखण्डे २२ अ. द्रष्टव्यः । ३ एवमग्रेपि 'तस्याविलाम्भःपरिशुद्धिहेतोर्भौमो मुनेः स्थानपरिग्रहोयम् ।' इति । अत्र वराहमिहिरः—उदये च मुनेरगस्त्यनाम्नः कुसमायोगमलप्रदूषितानि । हृदयानि सतामिव स्वभावात्पुनरम्बूनि भवन्ति निर्मलानि ॥ इ० । अभिभवाशङ्कि—परिभ०, इ. पा.

कूले रुजिवहोः' इति खश्प्रत्ययः । 'अरुर्दिष-' इत्यादिना मुमागमः । महान्त उक्षाणो **महोक्षाः** । 'अचतुर-' इत्यादिना निपातनादकारान्तः । **लीलाखेलं** विलाससुभगं **तस्य** रघोरुत्साहवतो वपुष्मतः परभञ्जकस्य **विक्रमं** शौर्यम् **अनुप्रापुः** अनुचक्रुः ॥

**प्रसवैः सप्तपर्णानां मदगन्धिभिराहताः ।**
**असूययेव तन्नागाः सप्तधैव प्रसुस्रुवुः ॥ २३ ॥**

मदस्येव गन्धो येषां तैः **मदगन्धिभिः** । 'उपमानाच्च' इतीकारः समासान्तः । **सप्तपर्णानां** वृक्षविशेषाणाम् । 'सप्तपर्णो विशालत्वक्शारदो विषमच्छदः ।' इत्यमरः । **प्रसवैः** पुष्पैः **आहताः** तस्य रघोः नागा गजाः [ **तन्नागाः** ] । 'गजेऽपि नागमातङ्गौ' इत्यमरः । **असूययेव** आहतिनिमित्तया स्पर्धयेव **सप्तधैव प्रसुस्रुवुः** मदं ववृषुः । प्रतिगन्धाभिमानादिति भावः । 'करात्कटाभ्यां मेढ्राच्च नेत्राभ्यां च मदस्रुतिः ।' इति पालकाप्ये । करान्नासारन्ध्राभ्यामित्यर्थः ॥

**सरितः कुर्वती गाधाः पथश्चाश्यानकर्दमान् ।**
**यात्रायै चोदयामास तं शक्तेः प्रथमं शरत् ॥ २४ ॥**

**सरितः गाधाः** सुप्रतराः **कुर्वती** । **पथः** मार्गान् **च आश्यानकर्दमान्** शुष्कपङ्कान्कुर्वती । 'संयोगादेरातो धातोर्यण्वतः' इति श्यतेर्निष्ठातस्य नत्वम् । **शरत्** शरदृतुः **तं** रघुं **शक्तेः** उत्साहशक्तेः **प्रथमं** प्राक् **यात्रायै** दण्डयात्रायै **चोदयामास** प्रेरयामास । प्रभावमन्त्रशक्तिसंपन्नस्य शरत्स्वयमुत्साहमुत्पादयामासेत्यर्थः ॥

**तस्मै सम्यग्घुतो वह्निर्वाजिनीराजनाविधौ ।**
**प्रदक्षिणार्चिर्व्याजेन हस्तेनेव जयं ददौ ॥ २५ ॥**

वाजिनामश्वानां नीराजनाविधौ नीराजनाख्ये शान्तिकर्मणि [ **वाजिनीराजनाविधौ** ] **सम्यक्** विधिवत् **हुतः** । होमसमिद्धः **वह्निः** । प्रगता दक्षिणं प्रदक्षिणम् । तिष्ठद्गुप्रभृतित्वादव्ययीभावः। प्रदक्षिणं यार्चिर्ज्वाला तस्या व्याजेन [ **प्रदक्षिणार्चिर्व्याजेन** ] **हस्तेनेव तस्मै जयं ददौ** । उक्तमाहवयात्रायाम्—'इद्धः प्रदक्षिणगतो हुतभुङ् नृपस्य धात्रीं समुद्ररशनां वशगां करोति' इति । वाजिग्रहणं गजादीनामप्युपलक्षणं तेषामपि नीराजनाविधानात् ॥

---

१ 'लीलया निरायासेन खेलं विसत्वरम्' इ. चा० २ 'रघोर्विक्रममनुप्राप्ता अनुगताः । वृषपक्षे तु विक्रमो गतिविशेषः । रघुविक्रमोऽपि महोदयः ककुद् राजचिह्नं तद्युक्तः, यात्रायां करितुरगादिखुराद्यभिघातेन सरितां कूलभेदको भवति ।' इति च चा० ३ आहतास्ताडिता उन्मादिता इति यावत् । उत्प्रेक्षालङ्कारः । ४ तालुवक्षःकपोलेभ्यः शङ्खकुम्भकरे तथा । रोमकुम्भकटिभ्यश्च दानं प्रक्षरति द्विपः ॥' इति सु० । ५ प्रेरयामास, नोदयामास इ० पा० ६ नीरस्य शान्त्युदकस्य अजना क्षेपोऽस्मिन्निति नीराजना । 'गजाश्वमङ्गलाय राजानः प्रयाणसमये नीराजनाविधिं कुर्वन्ति इत्यागमः' इ. सु० । नीराजनाविधिस्तु विस्तरश उक्त वराहमिहिरविरचितायां बृहत्संहितायां चतुश्चत्वारिंशेऽध्याये तत्रैव द्रष्टव्यः । ७ उत्प्रेक्षालं०

**स गुप्तमूलप्रत्यन्तः शुद्धपार्ष्णिरयान्वितः ।**
**षड्विधं बलमादाय प्रतस्थे दिग्जिगीषया ॥ २६ ॥**

गुप्तौ मूलं स्वनिवासस्थानं प्रत्यन्तः प्रान्तदुर्गं च येन स **गुप्तमूलप्रत्यन्तः** । **शुद्धपार्ष्णिः** उद्धृतपृष्ठशत्रुः सेनया रक्षितपृष्ठदेशो वा । **अयान्वितः** शुभदैवान्वितः । 'अयः शुभावहो विधिः ' इत्यमरः । **स** रघुः **षड्विधं** मौलभृत्यादिरूपं **बलं** सैन्यम् । 'मौलं[2] भृत्यः सुहृच्छ्रेणी द्विषदाटविकं बलम् । ' इति कोशः । **आदाय** दिशां जिगीषया जेतुमिच्छया [ **दिग्जिगीषया** ] **प्रतस्थे** चचाल ॥

**अवाकिरन्वयोवृद्धास्तं लाजैः पौरयोषितः ।**
**पृषतैर्मन्दरोद्धूतैः क्षीरोर्मय इवाच्युतम् ॥ २७ ॥**

**वयोवृद्धाः पौरयोषितः तं** रघुं प्रयान्तं **लाजैः** आचारलाजैः । **मन्दरोद्धूतैः पृषतैः** बिन्दुभिः **क्षीरोर्मयः** क्षीरसमुद्रोर्मयः **अच्युतं** विष्णुम् **इव** । **अवाकिरन्** पर्यक्षिपन् ॥

**स ययौ प्रथमं प्राचीं तुल्यः प्राचीनबर्हिषा ।**
**अहिताननिलोद्धूतैस्तर्जयन्निव केतुभिः ॥ २८ ॥**

प्राचीनबर्हिर्नाम कश्चिन्महाराज इति केचित् । प्राचीनबर्हिरिन्द्रः । 'पर्जन्यो मघवा वृषा हरिहयः प्राचीनबर्हिस्तथा । ' इतीन्द्रपर्यायेषु हलायुधाभिधानात् । तेन [ **प्राचीनबर्हिषा** ] **तुल्यः स** रघुः । अनिलेनानुकूलवातेनोद्धूतैः **अनिलोद्धूतैः केतुभिः** ध्वजैः **अहितान्** रिपून् **तर्जयन्निव** भर्त्सयन्निव । तर्जिभर्त्स्योरनुदात्तत्त्वेऽपि चक्षिङो

---

१ अत्र मनुः–कृत्वा विधानं मूले तु यात्रिकं च यथाविधि । * * * ॥ संशोध्य त्रिविधं मार्गं षाड्विधं च बलं स्वकम् । साम्परायिककल्पेन यायादरिपुरं प्रति ॥ इति । उक्तं च कामन्दकेन— पुरश्च पश्चाच्च यदा समर्थस्तदाभियायान्महते फलाय। पुरः प्रसर्पन्नविशुद्धपृष्ठः प्राप्नोति तीव्रं खलु पार्ष्णिभेदम् ॥ इति । अरिं प्रति निर्यातेन विजिगीषुणा येभ्यः पृष्ठवर्तिनृपेभ्यो देशाक्रमणाया- शङ्क्येत तेषां संयमनं कार्यमिति मनुरप्याह–'पार्ष्णिग्राहं च संप्रेक्ष्य तथाक्रन्दं च मण्डले । ' इति । अयोपेतः–अत्र कामन्दकः–देवानभ्यर्च्य विप्रांश्च प्रशस्तग्रहतारकम्। षाड्विधं तु बलं व्यूह्य द्विषतोऽभिमुखं व्रजेत् ॥ 'प्रशस्तग्रहतारकम्' इत्यत्र 'गुरूंश्च शुभवासरे ' इति पठित्वा चारित्रवर्धनेनाप्येतद्वचनमुद्धृतम् । २ मूलाद्वंशपरम्परयागतम् । एतद्दृढभक्तित्वादुत्तमम् । द्विषत्—उत्कोचभेदादिभिरुपायैः शत्रुपक्षात्स्वपक्षमानीतम् । आटविकम्–एतत्परदेशप्रवेशे उपयुक्तम् । तदुक्तम्–'परदेशप्रवेशे च कुर्यादाटविकान्पुरः । ' इति । ३ नास्ति च्युतं स्वस्वभावात्स्खलनं यस्य । सच्चिदानन्दरूपमेकरसम् । उक्तं च भगवता यस्मान्न च्युतपूर्वोऽहमच्युतस्तेन कर्मणा । इति भागवते । ४ यद्वा प्राचीनबर्हिर्नाम हविर्द्धानपुत्रो महाप्रभावः प्रजापतिः । उक्तं च वह्निपुराणे–प्राचीनबर्हिर्भगवान्महानासीत्प्रजापतिः । हविर्द्धानाद् द्विजश्रेष्ठ येन संवर्धिताः प्रजाः ॥ प्राचीनाग्राः कुशास्तस्य पृथिव्यां विश्रुता मुने । प्राचीनबर्हिर्भगवान् ख्यातो भुवि महाबलः ॥ इ०. ५ 'अन्योपि अङ्गुल्यादिना तर्जयति ' इ० चारि.

ङित्करणेनानुदात्तेत्त्वनिमित्तस्यात्मनेपदस्यानित्यत्वज्ञापनात्परस्मैपदमिति वामनः । **प्रथमं प्राचीं** दिशं **ययौ** ।

**रजोभिः स्यन्दनोद्धूतैर्गजैश्च घनसन्निभैः ।**
**भुवस्तलमिव व्योम कुर्वन्व्योमेव भूतलम् ॥ २९ ॥**

किं कुर्वन् । **स्यन्दनोद्धूतैः रजोभिः घनसन्निभैः** वर्णतः क्रियातः परिमाणतश्च मेघतुल्यैः **गजैश्च** यथाक्रमं **व्योम** आकाशं **भुवस्तलमिव भूतलं** च **व्योमेव कुर्वन्** । ययाविति पूर्वेण सम्बन्धः ॥

**प्रतापोऽग्रे ततः शब्दः परागस्तदनन्तरम् ।**
**ययौ पश्चाद्रथादीति चतुःस्कन्धेव सा चमूः ॥ ३० ॥**

**अग्रे प्रतापः** तेजोविशेषः । 'स प्रभावः प्रतापश्च यत्तेजः कोशदण्डजम् ।' इत्यमरः । **ततः शब्दः** सेनाकलकलः । **तदनन्तरं परागः** धूलिः । 'परागः पुष्परजसि धूलिस्नानीययोरपि ।' इति विश्वः । **पश्चाद्रथादि** रथाश्वादिकं चतुरङ्गबलम् । 'रथानीकम्' इति पाठ इतिशब्दाध्याहारेण योज्यम् । **इति** इत्थं **चतुःस्कन्धेव** चतुर्व्यूहेव । 'स्कन्धः प्रकाण्डे कायेंऽसे विज्ञानादिषु पञ्चसु। नृपे समूहे व्यूहे च' इति हैमः । **सा चमूः ययौ** ॥

**मरुपृष्ठान्युदम्भांसि नाव्याः सुप्रतरा नदीः ।**
**विपिनानि प्रकाशानि शक्तिमत्त्वाच्चकार सः ॥ ३१ ॥**

**स** रघुः **शक्तिमत्त्वात्** समर्थत्वात् **मरुपृष्ठानि** निर्जलस्थानानि । 'समानौ मरुधन्वानौ' इत्यमरः । **उदम्भांसि** उद्धूतजलानि चकार । **नाव्याः** नौभिस्तार्याः **नदीः** । 'नाव्यं त्रिलिङ्गं नौतार्ये' इत्यमरः । 'नौवयोधर्मविषमूल–' इत्यादिना यत्प्रत्ययः । **सुप्रतराः** सुखेन तार्याश्चकार । **विपिनानि** अरण्यानि । 'अटव्यरण्यं विपिनम्' इत्यमरः । **प्रकाशानि** निर्वृक्षाणि **चकार** । शक्त्युत्कर्षात्तस्यागम्यं किमपि नासीदिति भावः ॥

**स सेनां महतीं कर्षन्पूर्वसागरगामिनीम् ।**
**बभौ हरजटाभ्रष्टां गङ्गामिव भगीरथः ॥ ३२ ॥**

---

१ अस्माच्छ्लोकात्परं चा. दि. वल्लभादयः श्लोकमेकं पठन्ति यथा—

**परागैः कलुषास्तस्य सहप्रस्थायिभिः कृशाः। पश्चात्प्रयायिभिः पङ्काश्चक्रिरे मार्गनिम्नगाः।**

२ कृष्णवर्णत्वाद्विशालत्वान्निर्घोषतुल्यबृंहितत्वान्मदवारिधारावर्षित्वाच्च गजानां घनसाम्यम् । ३ इन्द्रजयादिरूपः । 'शत्रूणां भयजननवार्ता'इ. व० । 'परागः–' 'पुरोगाः' 'रथादीति–' 'रथानीकम्' इ. चा. व. सु. दि. पठन्ति । ४ प्रशस्ता शक्तिर्विद्यतेस्येति शक्तिमांस्तस्य भावस्तस्मात्। 'अतिखननव्यापारेण' इ. चा० 'प्रभूतकटकसैन्यसामग्रीतः' इ. सु० च व्याख्यातः । किंत्वेतद्व्याख्यानं न मनोरमम् । तथा व्याख्याने दिव्यप्रभावस्य रघोः प्राकृतनृपतुल्यत्वापत्तेः । कूपखननसेतुबन्धनादिलौकिकोपायानन्तरेण रघोर्दिव्यप्रभाववत्त्वादेव तत्तत्कार्यसिद्धिर्जाता इति केचित् ।

**महतीं सेनां पूर्वसागरगामिनीं कर्षन् स** रघुः । हरस्य जटाभ्यो भ्रष्टां [ **हरजटाभ्रष्टां** ] **गङ्गां** कर्षन् । सापि पूर्वसागरगामिनी । **भगीरथ इव । बभौ** । भगीरथो नाम कश्चित्कपिलदग्धानां सागराणां नप्ता तत्पावनाय हरकिरीटाद्गङ्गां प्रवर्तयिता राजा । यत्सम्बन्धाद्गङ्गा च भागीरथीति गीयते ॥

**त्याजितैः फलमुत्खातैर्भग्नैश्च बहुधा नृपैः ।**
**तस्यासीदुल्बणो मार्गः पादपैरिव दन्तिनः ॥ ३३ ॥**

' फलं फले धने बीजे निष्पत्तौ भोगलाभयोः । ' इति केशवः । **फलं** लाभम् । वृक्षपक्षे प्रसवं च । **त्याजितैः** । त्यजेर्ण्यन्ताद्द्विकर्मकादप्रधाने कर्मणि क्तः । **उत्खातैः** स्वपदाच्च्यावितैः । अन्यत्रोत्पाटितैः । **बहुधा भग्नैः** रणे जितैः । अन्यत्र छिन्नैः । **नृपैश्च । पादपैः दन्तिनः** गजस्य **इव तस्य** रघोः **मार्गः उल्बणः** प्रकाशः **आसीत्** । ' प्रकाशं प्रकटं स्पष्टमुल्बणं विशदं स्फुटम् । ' इति यादवः ॥

**पौरस्त्यानेवमाक्रामंस्तांस्ताञ्जनपदाञ्जयी ।**
**प्राप तालीवनश्याममुपकण्ठं महोदधेः ॥ ३४ ॥**

**जयी** जयनशीलः । ' जिदृक्षिविश्री–' इत्यादिना इनिप्रत्ययः । **स** रघुः **एवम्** । पुरो भवान् **पौरस्त्यान्** प्राच्यान् । ' दक्षिणापश्चात्पुरसस्त्यक् ' इति त्यक्प्रत्ययः । **तांस्तान्** । सर्वानित्यर्थः । वीप्सायां द्विरुक्तिः । **जनपदान्** देशान् **आक्रामन्** तालीवनैः श्यामं [ **तालीवनश्यामम्** ] **महोदधेः उपकण्ठं** अन्तिकं **प्राप** ॥

**अनम्राणां समुद्धर्तुस्तस्मात्सिन्धुरयादिव ।**
**आत्मा संरक्षितः सुह्मैर्वृत्तिमाश्रित्य वैतसीम् ॥ ३५ ॥**

**अनम्राणाम्** । कर्मणि षष्ठी । **समुद्धर्तुः** उन्मूलयितुः **तस्माद्** रघोः सकाशात् । ' भीत्रार्थानां भयहेतुः ' इत्यपादानत्वात्पञ्चमी । **सिन्धुरयात्** नदीवेगात् **इव सुह्मैः**

---

१ भगीरथो नाम सूर्यवंश्यो राजा मर्त्यलोके गङ्गाप्रवर्तकः । स किल सगरपुत्रस्यासमञ्जस्य प्रपौत्रः । तथा च रामायणम्–सगरस्यासमञ्जस्तु असमञ्जादथांशुमान् । दिलीपोंशुमतः पुत्रो दिलीपस्य भगीरथः ॥ इ० ॥ पुरा किल भगीरथः सगरस्य पुत्रानुद्दिधीर्षुर्गङ्गाया भुव्यवतरणं कारयितुं वर्षसहस्राणि तीव्रं तपस्तेपे । ततस्तुष्टो ब्रह्मा तस्मायभीष्टं वरं दत्त्वा गङ्गाधारणाय शिवं प्रार्थयितुमादिदेश । ततः स दुश्चरेण तपसा शिवं पर्यतोषयत् । शिवोपि हिमाचलं गत्वा जटां विकीर्य पतेति गङ्गामब्रवीत् । शिवेन सह पातालं विशामीत्यवलेपात्तच्छिरसि पतिता सा तत्र संवत्सरं बभ्राम । पश्चाद्भगवान् भगीरथप्रार्थनया गङ्गामुत्ससर्ज । ततः स सगरसुतकृतखातेन तां पातालं नीत्वा तज्जलेन पूर्वपुरुषानुद्धारयाञ्चकार । विशेषस्तु रामा. बा. ४२–४४ अध्यायेषु द्रष्टव्यः । २ एवं त्रयोदशेपि वर्णनम्–दूरादयश्चक्रनिभस्य तन्वी तमालतालीवनराजिनीला । इ० । उपकण्ठम्–उपगतः कण्ठं सामीप्यं कूलमिति यावत् । ' उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययम् । ' इत्यमरः ३ ब्रह्मदेशीयै राजभिः । इति सु० व० । ' यथा नदीवेगाद्वेतसा वृक्षा नम्रवृत्तिं कृत्वा नदीवेगादात्मानं रक्षन्ति तद्वत्तैः सुह्मैरात्मा रक्षितः । इ० सु० । शरणार्थिनस्ते महात्मना रघुणा नोन्मूलिताः । ' तृणानि नोन्मूलयति प्रभञ्जनो मृदूनि नीचैः प्रणतानि सर्वशः । समुच्छ्रितानेव तरून्प्रबाधते महान्महत्येव करोति विक्रमम् ॥ ' इति न्यायेनेति भावः ।

सुह्मदेशीयैः । सुह्मादयः शब्दा जनपदवचनाः क्षत्रियमाचक्षते । **वैतसीं** वेतसः सम्बन्धिनीं **वृत्तिम्** । प्रणतिमित्यर्थः । **आश्रित्य आत्मा संरक्षितः** । अत्र कौटिल्यः–' बलीयसाभियुक्तो दुर्बलः सर्वत्रानुप्रणतो वेतसधर्ममातिष्ठेत् । ' इति ॥

**वङ्गानुत्खाय तरसा नेता नौसाधनोद्यतान् ।**
**निचखान जयस्तम्भान्गङ्गास्रोतोन्तरेषु सः ॥ ३६ ॥**

**नेता** नायकः **स** रघुर्नौभिः साधनैरुद्यतान्सन्नद्धान् [ **नौसाधनोद्यतान्** ] **वङ्गान्** राज्ञः **तरसा** बलेन । ' तरसी बलरंहसी ' इति यादवः । **उत्खाय** उन्मूल्य गङ्गायाः स्रोतसां प्रवाहाणामन्तरेषु द्वीपेषु [ **गङ्गास्रोतोन्तरेषु** ] **जयस्तम्भान्निचखान** । स्थापितवानित्यर्थः ॥

**आपादपद्मप्रणताः कलमा इव ते रघुम् ।**
**फलैः संवर्धयामासुरुत्खातप्रतिरोपिताः ॥ ३७ ॥**

आपादपद्ममङ्घ्रिपद्मपर्यन्तं प्रणताः [ **आपादपद्मप्रणताः** ] । अत एवोत्खाताः पूर्वमुद्धृता अपि प्रतिरोपिताः पश्चात्स्थापिताः [ **उत्खातप्रतिरोपिताः** ] **ते** वङ्गाः **कलमा इव** शालिविशेषा इव । ' शालयः कलमाद्याश्च षष्टिकाद्याश्च पुंस्यमी । ' इत्यमरः । तेऽप्यापादपद्मं मूलपद्मपर्यन्तं प्रणताः । ' पादो बुध्ने तुरीयांशे शैलप्रत्यन्तपर्वते । ' इति विश्वप्रकाशः । उत्खातप्रतिरोपिताश्च । **रघुं फलैः** धनैः । अन्यत्र सस्यैः । **संवर्धयामासुः** । ' फलं फले धने बीजे निष्पत्तौ भोगलाभयोः । सस्ये ' इति केशवः ॥

**स तीर्त्वा कपिशां सैन्यैर्बद्धद्विरदसेतुभिः ।**
**उत्कलादर्शितपथः कलिङ्गाभिमुखो ययौ ॥ ३८ ॥**

**स** रघुर्बद्धा द्विरदा एव सेतवो यैस्तैः [ **बद्धद्विरदसेतुभिः** ] **सैन्यैः कपिशां** नाम नदीं **तीर्त्वा** । ' करभाम् ' इति केचित्पठन्ति । उत्कलै राजभिरादर्शितमार्गः [ **उत्कलादर्शितपथः** ] सन् **कलिङ्गाभिमुखो ययौ** ॥

**स प्रतापं महेन्द्रस्य मूर्ध्नि तीक्ष्णं न्यवेशयत् ।**
**अङ्कुशं द्विरदस्येव यन्ता गम्भीरवेदिनः ॥ ३९ ॥**

**स** रघुः **महेन्द्रस्य** कुलपर्वतविशेषस्य । ' महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्वतः ।

---

१ ०द्धतान् इ. पा. वङ्गानां नौनिर्माणकौशलं महाभारतादप्यवगम्यते । यथा–ततः प्रवासितो विद्वान्विदुरेण नरस्तदा । पार्थानादर्शयामास मनोमारुतगामिनीम् ॥ सर्ववातसहां नावं यन्त्रयुक्तां पताकिनीम् । शिवे भागीरथीतीरे नरैर्विस्रंसिभिः कृताम् ॥ इत्या० २ ' नगराणि जित्वा तत्र स्तम्भाः क्रियन्ते ' इत्यागमः । इ. सु० । ३ कलमादीनां जलपूर्णमूलेषु जलजपुष्पाणि जायन्ते । तथाहि भारविः—तुतोष पश्यन्कलमस्य सोऽधिकं सवारिजे वारिणि रामणीयकम् । इति । अत्र ' अन्यत्र मञ्जरीभारेण नम्राः कलमा बहु फलन्ति ' इ. चा० । अयं श्लोकः श्लिष्टः । ' प्रणताः ' इत्यत्र ' प्रवणाः ' इ. व० पठति । ४ उत्कलदेशीयास्तु संग्रामादिने एव रघुचरणयोर्न्यपतन् इत्यर्थः । इ०चा० । 'उत्कला०'–उत्कलैर्दर्शि०, उत्कलादे० इ. पा. । कलिङ्गाभिमुखः–मुखम् । इ.पा.

विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वताः ॥ ' इति विष्णुपुराणात् । **मूर्ध्नि तीक्ष्णं** दुःसहं **प्रतापम्** । **यन्ता** सारथिः **गम्भीरवेदिनः द्विरदस्य** गजविशेषस्य मूर्ध्नि तीक्ष्णं निशितं **अङ्कुशमिव** । **न्यवेशयत्** निक्षिप्तवान् । ' त्वग्भेदाच्छोणितस्रावान्मांसस्य क्रथनादपि । आत्मानं यो न जानाति स स्याद्गम्भीरवेदिता ॥ ' इति राजपुत्रीये । ' चिरकालेन यो वेत्ति शिक्षां परिचितामपि । गम्भीरवेदी विज्ञेयः स गजो गजवेदिभिः ॥ ' इति मृगचर्मीये ॥

**प्रतिजग्राह कालिङ्गस्तमस्त्रैर्गजसाधनः ।**
**पक्षच्छेदोद्यतं शक्रं शिलावर्षीव पर्वतः ॥ ४० ॥**

**गजसाधनः** सन् **कालिङ्गः** कलिङ्गानां राजा । ' द्व्यञ्मगधकलिङ्ग–' इत्यादिनाण्प्रत्ययः । **अस्त्रैः** आयुधैः **तं** रघुम् । पक्षाणां छेद उद्यतमुद्युक्तं [ **पक्षच्छेदोद्यतं** ] **शक्रं शिलावर्षी पर्वत इव** । **प्रतिजग्राह** प्रत्यभियुक्तवान् ॥

**द्विषां विषह्य काकुत्स्थस्तत्र नाराचदुर्दिनम् ।**
**सन्मङ्गलस्नात इव प्रतिपेदे जयश्रियम् ॥ ४१ ॥**

**काकुत्स्थः** रघुः **तत्र** महेन्द्राद्रौ **द्विषां** नाराचदुर्दिनं नाराचानां बाणविशेषाणां दुर्दिनम् [ **नाराचदुर्दिनम्** ] । लक्षणया वर्षमुच्यते । **विषह्य** सहित्वा सद् यथाशास्त्रं मङ्गलस्नातः [ **सन्मङ्गलस्नातः** ] **इव** विजयमङ्गलार्थमभिषिक्त इव । **जयश्रियं प्रतिपेदे** प्राप । ' यत्तु सर्वौषधिस्नानं तन्माङ्गल्यमुदीरितम् । ' इति यादवः ॥

**ताम्बूलीनां दलैस्तत्र रचितापानभूमयः ।**
**नारिकेलासवं योधाः शात्रवं च पपुर्यशः ॥ ४२ ॥**

**तत्र** महेन्द्राद्रौ । युध्यन्त इति **योधाः** । पचाद्यच् । [**रचितापानभूमयः**] रचिताः कल्पिता आपानभूमयः पानयोग्यप्रदेशा यैस्ते तथोक्ताः सन्तः **नारिकेलासवं** नारिकेलमद्यं **ताम्बूलीनां** नागवल्लीनां **दलैः पपुः** । तत्र विजहुरित्यर्थः । **शात्रवं यशश्च** पपुः । जहुरित्यर्थः ॥

---

१ त्वग्भेदाद्रुधिरस्रावान्मांसस्य गल( व्यथ )नादपि । संज्ञां न लभते यस्तु विद्याद्गम्भीरवेदिनम् ॥ इति पालकाप्ये । इ० चा० २ अत्र गम्भीरवेदिसाम्यान्महेन्द्रस्य दुर्जयत्वं सूचितम् । ३ ' वैरिबाणवारिवर्षणसहनानन्तरं रघुररीन् व्यजेष्ट । ' इ. चा. । अस्माच्छ्लोकात्परं श्लोक एकः पठ्यते चा० दि. व. सु० आदिभिः । यथा–

' **वायव्यास्त्रविनिर्धूतात्पक्ष (क्षा) द्विद्वान्महोदधेः ॥**
**गजानीकात्स कालिङ्गं तार्क्ष्यः सर्पमिवाददे** ' ॥ इति ।

४ आ सम्भूय पिबन्त्यत्रेति आपानं मद्यपानस्थानम् । आसवम्–अत्र आसूयते इति योगबलादासवशब्देन मद्यमात्रं गम्यते । भावप्रकाशे तु ' यच्च पक्वौषधाम्बुभ्यां सिद्धमन्नं स आसवः ' । इति विशेष उक्तः । माधवेनापि–शीधुरिक्षुरसैः पक्वैरपक्वैरासवो भवेत् । मैरेयं धातकीपुष्पगुडधानाम्लसंहितम् ॥ इति भेदः प्रदर्शितः ।

**गृहीतप्रतिमुक्तस्य स धर्मविजयी नृपः ।
श्रियं महेन्द्रनाथस्य जहार न तु मेदिनीम् ॥ ४३ ॥**

**धर्मविजेयी** धर्मार्थं विजयशीलः **स नृपः** रघुः । गृहीतश्चासौ प्रतिमुक्तश्च गृहीतप्रतिमुक्तः तस्य [ **गृहीतप्रतिमुक्तस्य** ] **महेन्द्रनाथस्य** कालिङ्गस्य **श्रियं जहार** । धर्मार्थमिति भावः । **मेदिनीं तु न** जहार । शरणागतवात्सल्यादिति भावः ॥

**ततो वेलातटेनैव फलवत्पूगमालिना ।
अगस्त्याचरितामाशामनाशास्यजयो ययौ ॥ ४४ ॥**

**ततः** प्राचीविजयानन्तरं **फलवत्पूगमालिना** फलितक्रमुकश्रेणिमता । व्रीह्यादित्वादिनिप्रत्ययः । वेलायाः समुद्रकूलस्य तटेनोपान्तेन [ **वेलातटेन** ] **एव** अगस्त्येनाचरिताम् [ **अगस्त्याचरिताम्** ] **आशां** दक्षिणां दिशम् । **अनाशास्यजयः** अयत्नसिद्धत्वादप्रार्थनीयजयः सन् **ययौ** । 'अगस्त्यो दक्षिणामाशामाश्रित्य नभसि स्थितः । वरुणस्यात्मजो योगी विन्ध्यवातापिमर्दनः ॥ ' इति ब्रह्मपुराणे ॥

**स सैन्यपरिभोगेण गजदानसुगन्धिना ।
कावेरीं सरितां पत्युः शङ्कनीयामिवाकरोत् ॥ ४५ ॥**

**स** रघुः । गजानां दानेन मदेन सुगन्धिना [ **गजदानसुगन्धिना** ]। 'गन्धस्य-' इत्यादिनेकारादेशः समासान्तः । यद्यपि गन्धस्येत्वे तदेकान्तग्रहणं कर्तव्यमिति नैसर्गिकगन्धविवक्षायामेवेकारादेशः तथापि निरङ्कुशाः कवयः । तथा माघकाव्ये—'वपुरयुक्छदगुच्छसुगन्धयः सततगास्ततगानगिरोऽलिभिः ' ( ६।५० ), नैषधे च—'अपां हि तृप्ताय न वारिधारा स्वादुः सुगन्धिः स्वदते तुषारा ' ( ३।९३ ) इति । न कर्मधारयान्मत्वर्थीय इति निषेधादिनिप्रत्ययपक्षोऽपि जघन्य एव । सेनायां समवेताः सैन्याः । 'सेनायां समवेता ये

---

१ अत्र वल्लभव्याख्यानं यथा—धर्मविजयी लोभविजयी असुरविजयी चेति त्रिविधो राजा । यः शत्रुं निर्जित्य तदीयां श्रियं नीत्वा शत्रुं तस्मिन्नेव स्थाने स्थापयति स धर्मविजयी । यः शत्रुं निर्जित्य तदीयां श्रियं मेदिनीं च गृहीत्वा प्राणैः न विकुरुते स लोभविजयी । यः शत्रुं हत्वा तदीयां श्रियं मेदिनीं च गृह्णाति सः असुरविजयी । २ अयं भावः—'गन्धस्येत् उत्पूतिसुसुरभिभ्यः' इति सूत्रेण बहुव्रीहावेभ्यः परस्य गन्धशब्दस्येकारोन्तादेशः स्यात् । तत्र 'गन्धस्येत्वे तदेकान्तग्रहणम् ' इति वार्तिकेण यत्र कस्यचिद्द्रव्यस्य स्वाभाविक एव गन्धोभिप्रेतो नागन्तुकस्तत्रैव उदादिपरस्य गन्धस्य समासान्त इकारादेशः स्यान्नान्यत्र । अत्र तु सैन्यपरिभोगस्य कश्चित्स्वाभाविको गन्धो नास्ति । गजदानरूपद्रव्यान्तरादेव स उत्पन्नः । अत एव यद्यपि नात्र समासान्त इकारो युक्तस्तथापि महाकविप्रयोगात् नात्र कटाक्षः पातयितुमुचितः । तथा च—शोभनः गन्धः सुगन्धः सोऽस्त्यस्येति गजदानसुगन्धी तनोति साधुरिति पक्षोऽप्यनाश्रयणीयः । 'न कर्मधारयान्मत्वर्थीयः ' इति निषेधात् । सत्यां बहुव्रीहिसमासेनैवार्थसिद्धौ कर्मधारयात्परं पुनरपि मत्वर्थीयप्रत्ययकल्पनागौरवात् जघन्यपक्ष एव । एवं सत्यपि नैसर्गिक इत्यस्य भाष्ये वृत्तौ चादर्शनादेकान्त एकादेश इवाविभागेन लक्ष्यमाण इत्येव पक्षः साधीयान् ।

सैन्यास्ते सैनिकाश्च ते । ' इत्यमरः । ' सेनाया वा ' इति ण्यप्रत्ययः । तेषां परिभोगेण [ **सैन्यपरिभोगेण** ] **कावेरीं** नाम सरितं **सरितां पत्युः** समुद्रस्य **शङ्कनीयां** न विश्वसनीयाम् **इवाकरोत्** । संभोगलिङ्गदर्शनाद्भर्तुरविश्वासो भवतीति भावः ॥[1]

**बलैरध्युषितास्तस्य विजिगीषोर्गताध्वनः ।**
**मारीचोद्भ्रान्तहारीता[2] मलयाद्रेरुपत्यकाः ॥ ४६ ॥[3]**

**विजिगीषोः** विजेतुमिच्छोः **गताध्वनः तस्य** रघोः **बलैः** सैन्यैः । ' बलं शक्तिर्बलं सैन्यम् ' इति यादवः । मारीचेषु[4] मरीचवनेषूद्भ्रान्ताः परिभ्रान्ता हारीताः पक्षिविशेषा यासु ताः [ **मारीचोद्भ्रान्तहारीताः** ] । ' तेषां विशेषा हारीतो मद्गुः कारण्डवः प्लवः । ' इत्यमरः । **मलयाद्रेरुपत्यकाः** आसन्नभूमयः । ' उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका । ' इत्यमरः । ' उपाधिभ्यां त्यकन्–' इत्यादिना त्यकन्प्रत्ययः । **अध्युषिताः** । उपत्यकासु उषितामित्यर्थः । ' उपान्वध्याङ्वसः ' इति कर्मत्वम् ॥

**ससञ्जुरश्वक्षुण्णानामेलानामुत्पतिष्णवः ।**
**तुल्यगन्धिषु मत्तेभकटेषु फलरेणवः ॥ ४७ ॥**

अश्वैः क्षुण्णानाम् [ **अश्वक्षुण्णानाम्** ] **एलानाम्** एलालतानां **उत्पतिष्णवः** उत्पतनशीलाः । ' अलंकृञ्–' इत्यादिनेष्णुच्प्रत्ययः । **फलरेणवः** फलरजांसि **तुल्यगन्धिषु** समानगन्धिषु । सर्वधनीतिवदिन्नन्तो बहुव्रीहिः । मत्तेभानां कटेषु [ **मत्तेभकटेषु** ] **ससञ्जुः** सक्ताः । ' गजगण्डे कटीकटौ ' इति कोषः ॥

**भोगिवेष्टनमार्गेषु चन्दनानां समर्पितम् ।**
**नास्रसत्करिणां ग्रैवं त्रिपदीछेदिनामपि ॥ ४८ ॥**

**चन्दनानां** चन्दनद्रुमाणां **भोगिवेष्टनमार्गेषु** सर्पवेष्टनानिम्नेषु **समर्पितं** सञ्जितं **त्रिपदीछेदिनां**[5] पादशृङ्खलच्छेदकानाम् **अपि** । ' त्रिपदी पादबन्धनम् ' इति यादवः । **करिणाम्** । ग्रीवासु भवं **ग्रैवं** कण्ठबन्धनम् । ' ग्रीवाभ्योऽण्च ' इत्यण्प्रत्ययः । **नास्रसत्** न स्रस्तमभूत् । ' द्युद्भ्यो लुङि ' इति परस्मैपदम् । पुषादित्वादङ् । ' अनिदिताम्–' इति नकारलोपः ।

---

१ सैन्यसंभोगाचिह्ना कावेरी परपुरुषसंभोगचिह्निता कामिनीव स्वभर्तुः शङ्कनीयपातिव्रत्या इवाभवदित्युत्प्रेक्षा । अस्मात् परं 'भयोत्सृष्ट–' इति पद्यं (४.५४) चा० व० दि०सु० ध० आदयः पठन्ति । २ मरीचो०ः हारीतोत्सृष्टमारीचाः इ.पा. ३ अस्मात्परं श्लोकमिममधिकं पठन्ति वल्लभादयः—

आजानेयखुरक्षुण्णपक्वैलाक्षेत्रसम्भवम् ।
व्यानशे सपदि व्योम कीटकोशाविलं रजः ॥

४ मारीचानां गन्धेन भक्षणेन वा उद्भ्रान्तास्त्रस्ता इतस्ततश्चलिता हारीताः पक्षिविशेषा अर्थात् शुका यासु ताः । इ. धर्ममेरुः । ५ त्रयः पादा अस्या इति । ' त्रिपदीं छिन्दन्तीति त्रिपदीछिदनस्तेषाम् । सुखावस्थात्यागिनामपि । सुखावस्थितस्य गजस्य पदत्रयावस्था त्रिपदी इत्युच्यते ' । इति व० । एतन्मते सुखावस्थात्यागिभिरपि गजैः चन्दनसौरभ्यातिशयलोभात्स्वबन्धनानि न छिन्नानि इति भावः ।

**दिशि मन्दायते तेजो दक्षिणस्यां रवेरपि ।**
**तस्यामेव रघोः पाण्ड्याः प्रतापं न विषेहिरे ॥ ४९ ॥**

**दक्षिणस्यां दिशि रवेरपि तेजो मन्दायते** मन्दं भवति । लोहितादित्वात्क्यष्प्रत्ययः । 'वा क्यषः' इत्यात्मनेपदम् । दक्षिणायने तेजोमान्द्यादिति भावः । **तस्यामेव** दिशि **पाण्ड्याः** । पाण्डूनां जनपदानां राजानः पाण्ड्याः । 'पाण्डोर्ड्यण्वक्तव्यः' । **रघोः प्रतापं न विषेहिरे** न सोढवन्तः । सूर्यविजयिनोऽपि विजितवानिति नायकस्य महानुत्कर्षो गम्यते ॥

**ताम्रपर्णीसमेतस्य मुक्तासारं महोदधेः ।**
**ते निपत्य ददुस्तस्मै यशः स्वमिव संचितम् ॥ ५० ॥**

**ते** पाण्ड्यास्ताम्रपर्ण्या नद्या समेतस्य संगतस्य [ **ताम्रपर्णीसमेतस्य** ] **महोदधेः** सम्बन्धि **संचितं मुक्तासारं** मौक्तिकवरम् । 'सारो बले स्थिरांशे च न्याय्ये क्लीबं वरे त्रिषु ।' इत्यमरः । **स्वं** स्वकीयं संचितं **यश इव** । **तस्मै** रघवे **निपत्य** प्रणिपत्य **ददुः** । यशसः शुभ्रत्वादौपम्यम् । ताम्रपर्णीसङ्गमे मौक्तिकोत्पत्तिरिति प्रसिद्धम् ॥

**स निर्विश्य यथाकामं तटेष्वालीनचन्दनौ ।**
**स्तनाविव दिशस्तस्याः शैलौ मलयदर्दुरौ ॥ ५१ ॥**
**असह्यविक्रमः सह्यं दूरान्मुक्तमुदन्वता ।**
**नितम्बमिव मेदिन्याः स्रस्तांशुकमलङ्घयत् ॥ ५२ ॥**

युग्ममेतत् । **असह्यविक्रमः स** रघुः **तटेषु** सानुषु **आलीनचन्दनौ** व्याप्तचन्दनद्रुमौ । 'गन्धसारो मलयजो भद्रश्रीश्चन्दनोऽस्त्रियाम् ।' इत्यमरः । स्तनपक्षे प्रान्तेषु व्याप्तचन्दनानुलेपौ । **तस्याः** दक्षिणस्याः **दिशः स्तनाविव** स्थितौ **मलयदर्दुरौ** नाम **शैलौ यथाकामं** यथेच्छं **निर्विश्य** उपभुज्य । 'निर्वेशो भृतिभोगयोः' इत्यमरः । उदकान्यस्य सन्तीत्युदन्वानुदधिः । 'उदन्वानुदधौ च' इति निपातः । **उदन्वता दूरान्मुक्तं** दूरतस्त्यक्तम् । 'स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन' इति समासः । 'पञ्चम्याः स्तोकादिभ्यः' इत्यलुक् । **स्रस्तांशुकं मेदिन्याः नितम्बमिव** स्थितं **सह्यं** सह्याद्रिम् **अलङ्घयत्** प्राप्तोऽतिक्रान्तो वा ॥

---

१ दक्षिणायने मेघावृतत्वात् शिशिरप्रादुर्भावाच्च रविर्मन्दतेजा भवति । मकरसंक्रममारभ्य मिथुनसंक्रमपर्यन्तं रविः किंचिद्वक्रगत्या उत्तराशां प्रयाति तदा भानोरुत्तरायणम् । तथा च यदा कर्कटकादारभ्य मकरपर्यन्तं दक्षिणाशां याति तदा दक्षिणायनम् । तदुक्तं सूर्यसिद्धान्ते–भानोर्मकरसंक्रान्तेः षण्मासा उत्तरायणम् । कर्कादेस्तु तथैव स्यात् षण्मासा दक्षिणायनम् ॥ इति । २ अत्रोपमानात्सूर्यादप्युपमेयस्य रघुप्रतापस्याधिक्यवर्णनात् व्यतिरेकालङ्कारः । 'उपमानाद्यदन्यस्य व्यतिरेकः स एव सः' इति तल्लक्षणात् । ३ अत्र रघोः कामुकेन, दक्षिणाशायाः कामिन्याः साम्यम् । एवमन्येषामप्यूह्यम् ।

संप्रति प्रतीचीं दिशमभिययावित्याह—

**तस्यानीकैर्विसर्पद्भिरपरान्तजयोद्यतैः ।**
**रामास्त्रोत्सारितोऽप्यासीत्सह्यलग्न इवार्णवः ॥ ५३ ॥**

अपरान्तानां पाश्चात्त्यानां जय उद्यतैरुद्युक्तैः [ **अपरान्तजयोद्यतैः** ] । ' अपरान्तास्तु पाश्चात्त्यास्ते च सूर्परिकादयः । ' इति यादवः । **विसर्पद्भिः** गच्छद्भिः **तस्य** रघोः **अनीकैः** सैन्यैः । ' अनीकं तु रणे सैन्ये ' इति विश्वः । **अर्णवः** रामस्य जामदग्न्यस्यास्त्रैरुत्सारितः [ **रामास्त्रोत्सारितः** ] **अपि सह्यलग्न इवासीत्** । सैन्यं द्वितीयोऽर्णव इवादृश्यतेति भावः ॥

**भयोत्सृष्टविभूषाणां तेन केरलयोषिताम् ।**
**अलकेषु चमूरेणुश्चूर्णप्रतिनिधीकृतः ॥ ५४ ॥**

**तेन** रघुणा भयेनोत्सृष्टविभूषाणां परिहृतभूषणानां [ **भयोत्सृष्टविभूषाणां** ] **केरलयोषितां** केरलाङ्गनानाम् **अलकेषु चमूरेणुः** सेनारजः चूर्णस्य कुङ्कुमादिरजसः प्रतिनिधीकृतः [ **चूर्णप्रतिनिधीकृतः** ] । एतेन योषितां पलायनं चमूनां च तदनुधावनं ध्वन्यते ॥

**मुरलामारुतोद्धूतमगमत्कैतकं रजः ।**
**तद्योधवारबाणानामयत्नपटवासताम् ॥ ५५ ॥**

मुरला नाम केरलदेशेषु काचिन्नदी । ' मुरवीमारुतोद्धूतम् ' इति केचित्पठन्ति । तस्या मारुतेनोद्धूतमुत्थापितं [ **मुरलामारुतोद्धूतं** ] **कैतकं** केतकीसम्बन्धि **रजः तद्योधवारबाणानां** रघुभटकञ्चुकानाम् । ' कञ्चुको वारबाणोऽस्त्री ' इत्यमरः । **अयत्नपटवासतां** अयत्नसिद्धवस्त्रवासनाद्रव्यत्वम् **अगमत्** । ' पिष्टातः पटवासकः ' इत्यमरः ॥

**अभ्यभूयत वाहानां चरतां गात्रशिञ्जितैः ।**
**वर्मभिः पवनोद्धूतराजतालीवनध्वनिः ॥ ५६ ॥**

**चरतां** गच्छतां **वाहानां** वाजिनाम् । ' वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः । '

---

१ ' कौङ्कणानाम् ' इ. व० । २ पुरा किल पितृवधामर्षितो भगवान् जामदग्न्यः त्रिःसप्तकृत्वः पृथिवीं निःक्षत्रियां कृत्वा क्षत्रियाणां रुधिरेण पितॄंस्तर्पयित्वा यज्ञे कश्यपायाखिलां महीं प्रतिपाद्य स्ववासार्थं शरैः समुद्रं दूरमपसार्य भूमिमुद्दधार । तदुक्तम् महाभारते...त्रिःसप्तकृत्वः पृथिवीं कृत्वा निःक्षत्रियां प्रभुः । दक्षिणामश्वमेधान्ते कश्यपायाददात्ततः ॥ स क्षत्रियाणां शेषार्थं करेणोद्दिश्य कश्यपः । स्रुक्प्रग्रहवता राजंस्ततो वाक्यमथाब्रवीत् ॥ गच्छ तीरं समुद्रस्य दक्षिणस्य महामुने । न ते मद्विषये राम वस्तव्यमिह कर्हिचित् ॥ ततः शूर्पारकं देशं सागरस्तस्य निर्ममे । सहसा जामदग्न्यस्य सोपरान्तमहीतलम् ॥ इ०. ३ भयेनोत्सृष्टा विभूषा याभिः । चूर्ण०—' वासयोगस्तु चूर्णं स्यात् ' इति हैमः इ. चा० । ४ त्वगुशीरपत्रभागैः सूक्ष्मैलार्धेन संयुतश्चूर्णः । पटवासः प्रवरोयं मृगकर्पूरप्रबोधेन ॥ इ. वराह०.

इत्यमरः । **गात्रशिञ्जितैः** गात्रेषु शब्दायमानैः । कर्तरि क्तः । 'गात्रसञ्जितैः' इति वा पाठः । सञ्जतेर्ण्यन्तात्कर्मणि क्तः । **वर्मभिः** कवचैः । 'मर्मरः' इति पाठे वाहानां गात्रशिञ्जितैर्गात्रध्वनिभिरित्यर्थः । मर्मरः मर्मरायमाण इति ध्वनेर्विशेषणम् । पवनेनोद्धूतानां कम्पितानां राजतालीवनानां ध्वनिः [ **पवनोद्धूतराजतालीवनध्वनिः** ] **अभ्यभूयत** तिरस्कृतः ॥

**खर्जूरीस्कन्धनद्धानां मदोद्गारसुगन्धिषु ।**
**कटेषु करिणां पेतुः पुन्नागेभ्यः शिलीमुखाः ॥ ५७ ॥**

खर्जूरीणां तृणद्रुमविशेषाणाम् । 'खर्जूरः केतकी ताली खर्जूरी च तृणद्रुमाः ।' इत्यमरः। स्कन्धेषु प्रकाण्डेषु । 'अस्त्री प्रकाण्डः स्कन्धः स्यान्मूलाच्छाखावधेस्तरोः ।' इत्यमरः । नद्धानां बद्धानां [ **खर्जूरीस्कन्धनद्धानां** ] **करिणां** मदोद्गारेण मदस्रावेण सुगन्धिषु [ **मदोद्गारसुगन्धिषु** ] । 'गन्धस्य–' इत्यादिनेकारः । **कटेषु** गण्डेषु **पुन्नागेभ्यः** नागकेशरेभ्यः । पुन्नागपुष्पाणि विहाय । ल्यब्लोपे पञ्चमी । **शिलीमुखाः** अलयः **पेतुः**। 'अलिबाणौ शिलीमुखौ' इत्यमरः । ततोऽपि सौगन्ध्यातिशयादिति भावः ।

**अवकाशं किलोदन्वान्रामायाभ्यर्थितो ददौ ।**
**अपरान्तमहीपालव्याजेन रघवे करम् ॥ ५८ ॥**

**उदन्वान्** उदधिः **रामाय** जामदग्न्याय । **अभ्यर्थितः** याचितः सन् । **अवकाशं** स्थानं **ददौ किल** । किलेति प्रसिद्धौ । **रघवे** तु **अपरान्तमहीपालव्याजेन करं** बलिं ददौ । 'बलिहस्तांशवः कराः' इत्यमरः । अपरान्तानां समुद्रमध्यदेशवर्तित्वात्तैर्दत्ते करे समुद्रदत्तत्वोपचारः । करदानं च भीत्या न तु याच्ञयेति रामाद्रघोरुत्कर्षः ॥

**मत्तेभरदनोत्कीर्णव्यक्तविक्रमलक्षणम् ।**
**त्रिकूटमेव तत्रोच्चैर्जयस्तम्भं चकार सः ॥ ५९ ॥**

**तत्र स** रघुर्मत्तानामिभानां रदनोत्कीर्णानि दन्तक्षतान्येव । भावे क्तः । व्यक्तानि स्फुटानि विक्रमलक्षणानि पराक्रमचिह्नानि विजयवर्णावलिस्थानानि यस्मिंस्तं [ **मत्तेभरदनोत्कीर्णव्यक्तविक्रमलक्षणम्** ] तथोक्तं **त्रिकूटमेवोच्चैर्जयस्तम्भं चकार** । गाढप्रकाशस्त्रिकूटोऽद्रिरेवोत्कीर्णवर्णस्तम्भ इव रघोर्जयस्तम्भोऽभूदित्यर्थः ॥

**पारसीकांस्ततो जेतुं प्रतस्थे स्थलवर्त्मना ।**
**इन्द्रियाख्यानिव रिपूंस्तत्त्वज्ञानेन संयमी ॥ ६० ॥**

**ततः** स रघुः **संयमी** योगी **तत्त्वज्ञानेन इन्द्रियाख्यान्** इन्द्रियनामकान्

१ 'पुन्नागः केशरोऽशोकः' इत्यभिधानचिन्तामणिः । 'नद्धानाम्' बद्धानाम् । इ. पा० २ इयं कथोक्ता (श्लो. ५३). ३ त्रिकूटं सुवेलागिरिम् । इ. व० । अत्र गजदन्तोल्लेखचिह्नानि नामपराक्रमादिख्यापकाक्षरतुल्यानि जातानीति भावः ।

रिपूनिव। **पारसीकान्** राज्ञः जेतुं **स्थलवर्त्मना प्रतस्थे** । न तु निर्दिष्टेनापि जलपथेन। समुद्रयानस्य निषिद्धत्वादिति भावः ॥

**यवनीमुखपद्मानां सेहे मधुमदं न सः।**
**बालातपमिवाब्जानामकालजलदोदयः ॥ ६१ ॥**

**स** रघुर्यवनीनां यवनस्त्रीणाम्। 'जातेरस्त्रीविषयादयोपधात्' इति ङीष्। मुखानि पद्मानीव मुखपद्मानि। उपमितसमासः। तेषां [**यवनीमुखपद्मानां**] मधुना मद्येन यो मदो मदरागः। कार्यकारणभावयोरभेदेन निर्देशः। तं **मधुमदं न सेहे**। कथमिव। अकाले प्रावृड्व्यतिरिक्ते काले जलदोदयः [**अकालजलदोदयः**] प्रायेण प्रावृषि पद्मविकाशस्याप्रसक्तत्वाद् **अब्जानां** सम्बन्धिनं **बालातपमिव**। अब्जहितत्वादब्जसम्बन्धित्वं सौरातपस्य ॥

**संग्रामस्तुमुलस्तस्य पाश्चात्त्यैरश्वसाधनैः।**
**शार्ङ्गकूजितविज्ञेयप्रतियोधे रजस्यभूत् ॥ ६२ ॥**

**तस्य** रघोः **अश्वसाधनैः** वाजिसैन्यैः। 'साधनं सिद्धिसैन्ययोः' इति हैमः। पश्चाद्भवैः **पाश्चात्त्यैः** यवनैः सह। 'दक्षिणापश्चात्पुरसस्त्यक्'। सहार्थे तृतीया। शृङ्गाणां विकाराः शार्ङ्गाणि धनूंषि। तेषां कूजितैः शब्दैः। 'शार्ङ्गं पुनर्धनुषि शार्ङ्गिणः। जये च शृङ्गविहिते चापेऽप्याह विशेषतः।' इति केशवः। अथवा शार्ङ्गैः शृङ्गसम्बन्धिभिः कूजितैर्विज्ञेया अनुमेयाः प्रतियोधाः प्रतिभटा यस्मिंस्तस्मिन् [**शार्ङ्गकूजितविज्ञेयप्रतियोधे**] **रजसि तुमुलः संग्रामः** संकुलं युद्धम् **अभूत्**। 'तुमुलं रणसंकुले' इत्यमरः।

**भल्लापवर्जितैस्तेषां शिरोभिः श्मश्रुलैर्महीम्।**
**तस्तार सरघाव्याप्तैः स क्षौद्रपटलैरिव ॥ ६३ ॥**

**स** रघुः **भल्लापवर्जितैः** बाणविशेषकृत्तैः। 'स्नुहीदलफलो भल्लः' इति यादवः। **श्मश्रुलैः** प्रवृद्धमुखरोमवद्भिः। 'सिध्मादिभ्यश्च' इति लच्प्रत्ययः। **तेषां** पाश्चात्यानां **शिरोभिः**। सरघाभिर्मधुमक्षिकाभिर्व्याप्तैः [**सरघाव्याप्तैः**]। 'सरघा मधुमक्षिका' इत्यमरः। क्षुद्राः सरघाः। 'क्षुद्रा व्यंगा नटी वेश्या सरघा कण्टकारिका।' इत्यमरः। क्षुद्राभिः कृतानि क्षौद्राणि मधूनि। 'मधु क्षौद्रं माक्षिकादि' इत्यमरः। 'क्षुद्राभ्रमरवटपादपादञ्' इति संज्ञायामञ्प्रत्ययः। तेषां पटलैः संचयैः [**क्षौद्रप-**

---

१ 'सिन्धुतटवासिनो म्लेच्छराजान्' इ. सु०। संयमिसादृश्येन रघोर्मनःस्थैर्यधैर्यादि, तत्वज्ञानसादृश्येन स्थलवर्त्मनः प्राशस्त्यं इन्द्रियारिपुसादृश्येन पारसीकानां दुर्जयत्वं कुपथगामित्वं च सूचितम्। तत्वज्ञानं नित्यात्सच्चिदानन्दस्वरूपाद् ब्रह्मणोऽभिन्नोहामिति ज्ञानम्। २ युद्धयात्रासु इति शेषः। ३ 'यवनदेशीयक्षत्रियस्त्रीणामर्थात्तुरुष्कस्त्रीणाम्' इ. ध०। 'तासां यवनीनां पतयो बन्दिग्राहं गृहीता अथवा प्राणैर्वियोजिता येन तन्मुखपद्मरागो विनश्येत् इति भावः' इ. सु०। ४ 'पाश्चात्त्याः श्मश्रून् स्थापयित्वा केशान्वपन्तीति तद्देशाचारोक्तिः। इ. चा०।

टलैः ]। ' पटलं तिलके नेत्ररोगे छन्दसि संचये। पटिके परिवारे च ' इति हैमः। **इवं महीं तस्तार** आच्छादयामास ॥

**अपनीतशिरस्त्राणाः शेषास्तं शरणं ययुः।**
**प्रणिपातप्रतीकारः संरम्भो हि महात्मनाम् ॥ ६४ ॥**

**शेषाः** हतावशिष्टाः **अपनीतशिरस्त्राणाः** अपसारितशीर्षण्याः सन्तः। ' शीर्षकम्। शीर्षण्यं च शिरस्त्रे ' इत्यमरः। शरणागतलक्षणमेतत्। **तं शरणं ययुः**। तथाहि। **महात्मनां संरम्भः** कोपः। ' संरम्भः संभ्रमे कोपे ' इति विश्वः। प्रणिपातः प्रणतिरेव प्रतीकारो यस्य स [ **प्रणिपातप्रतीकारः** ] **हि**। महतां परकीयमौद्धत्यमेवासह्यं न तु जीवितमिति भावः ॥

**विनयन्ते स्म तद्योधा मधुभिर्विजयश्रमम्।**
**आस्तीर्णाजिनरत्नासु द्राक्षावलयभूमिषु ॥ ६५ ॥**

तस्य रघोर्योधा भटाः [ **तद्योधाः** ] आस्तीर्णान्यजिनरत्नानि चर्मश्रेष्ठानि यासु तासु [ **आस्तीर्णाजिनरत्नासु** ] द्राक्षावलयानां भूमिषु [ **द्राक्षावलयभूमिषु** ]। ' मृद्वीका गोस्तनी द्राक्षा स्वाद्वी मधुरसेति च। ' इत्यमरः। **मधुभिः** द्राक्षाफलप्रकृतिकैर्मद्यैः **विजयश्रमं** युद्धखेदं **विनयन्ते स्म** अपनीतवन्तः। ' कर्तृस्थे चाशरीरे कर्मणि ' इत्यात्मनेपदम्। ' लट् स्मे ' इति भूतार्थे लट् ॥

**ततः प्रतस्थे कौबेरीं भास्वानिव रघुर्दिशम्।**
**शरैरुस्रैरिवोदीच्या[3]नुद्धरिष्यन्रसानिव ॥ ६६ ॥**

**ततः रघुः भास्वान्** सूर्यः **इव शरैः** बाणैः **उस्रैः** किरणैः **इव**। ' किरणोस्रमयूखांशुगभस्तिघृणिधृष्णयः। ' इत्यमरः। **उदीच्यान्** उदग्भवान्नृपान् **रसान्** उदकानि **इव उद्धरिष्यन् कौबेरीं** कुबेरसंबन्धिनीं **दिशम्** उदीचीं **प्रतस्थे**। अनेकेनेवशब्देनेयमुपमा। यथाह दण्डी—' एकानेकेवशब्दत्वात्सा वाक्यार्थोपमा द्विधा। ' इति ॥

**विनीताध्वश्रमास्तस्य सिन्धुतीरविचेष्टनैः।**
**दुधुवुर्वाजिनः स्कन्धाँल्लग्नकुङ्कुमकेसरान् ॥ ६७ ॥**

सिन्धुर्नाम काश्मीरदेशेषु कश्चिन्नदविशेषः। ' देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति

---

१ अत्रोपमानोपमेययोर्बिम्बानुबिम्बित्वादेकधर्मवत्त्वं साधर्म्यम्। श्मश्रुलत्वसरघाव्याप्तत्वयोर्धर्मयोरेककृष्णत्वादिगुणयोगादेकत्वम्। उक्तं च साहित्यदर्पणे—एकरूपः क्वचित्क्वापि भिन्नः साधारणो गुणः। भिन्ने बिम्बानुबिम्बत्वं शब्दमात्रेण वा भिदा ॥ इति। २ अत्र कर्मपदस्य विजयश्रमस्य कर्तॄणां योधानां शरीरस्थत्वान्मूर्तिरहितत्वाच्चात्मनेपदमित्यर्थः। ३ ' औदीच्यान् ' इ. पा०। अस्माच्छ्लोकात्परमतिरिक्तं श्लोकं पठन्ति दि० चा० सु० ध० त्रि० आदयः—

जितानजय्यस्तानेव कृत्वा रथपुरःसरान्।
महार्णवमिवौर्वाग्निः प्रविवेशोत्तरापथम् ॥

स्त्रियाम् । ' इत्यमरः । सिन्धोस्तीरे विचेष्टनैरङ्गपरिवर्तनैः [ सिन्धुतीरविचेष्टनैः ] **विनीताध्वश्रमाः तस्य** रघोः **वाजिनः** अश्वाः । लग्नाः कुङ्कुमकेसराः कुङ्कुमकुसुमकिञ्जल्का येषां तान् [ **लग्नकुङ्कुमकेसरान्** ] । यद्वा लग्नकुङ्कुमाः केसराः सटा येषां तान् । ' अथ कुङ्कुमम् । काश्मीरजन्म ' इत्यमरः । ' केसरो नागकेसरे । तुरङ्गसिंहयोः स्कन्धकेशेषु बकुलद्रुमे । पुन्नागवृक्षे किञ्जल्के स्यात् ' इति हैमः । **स्कन्धान्** कायान् । ' स्कन्धः प्रकाण्डे कायेऽसे विज्ञानादिषु पञ्चसु । नृपे समूहे व्यूहे च ' इति हैमः । **दुधुवुः** कम्पयन्ति स्म ॥

**तत्र हूणावरोधानां भर्तृषु व्यक्तविक्रमम् ।**
**कपोलपाटलादेशि बभूव रघुचेष्टितम् ॥ ६८ ॥**

**तत्र** उदीच्यां दिशि **भर्तृषु व्यक्तविक्रमम्** । भर्तृवधेन स्फुटपराक्रममित्यर्थः । **रघुचेष्टितं** रघुव्यापारः । हूणा जनपदाख्याः क्षत्रियाः । [ जनपदाः तत्र राजानः इ. पा. ] तेषामवरोधा अन्तःपुरस्त्रियः । तासां [ **हूणावरोधानां** ] कपोलेषु पाटलस्य पाटलिम्नस्ताडनादिकृतारुण्यस्यादेश्युपदेशकं [ **कपोलपाटलादेशि** ] **बभूव** । अथवा पाटल आदेशी आदेष्टा यस्य तद्बभूव । स्वयं लेख्यायत इत्यर्थः ॥

**काम्बोजाः समरे सोढुं तस्य वीर्यमनीश्वराः ।**
**गजालानपरिक्लिष्टैरक्षोटैः सार्धमानताः ॥ ६९ ॥**

**काम्बोजाः** राजानः **समरे तस्य** रघोः **वीर्यं** प्रभावम् । ' वीर्यं तेजःप्रभावयोः ' इति हैमः । **सोढुमनीश्वराः** अशक्ताः सन्तः । गजानामालानं बन्धनम् । भावे ल्युटि ' विभाषा लीयतेः ' इत्यात्वम् । तेन परिक्लिष्टैः परिक्षतैः [ **गजालानपरिक्लिष्टैः** ] **अक्षोटैः सार्धमानताः** ॥

**तेषां सदश्वभूयिष्ठास्तुङ्गा द्रविणराशयः ।**
**उपदा विविशुः शश्वन्नोत्सेकाः कोसलेश्वरम् ॥ ७० ॥**

**तेषां** काम्बोजानां सद्भिरश्वैर्भूयिष्ठा बहुलाः [ **सदश्वभूयिष्ठाः** ] **तुङ्गाः** द्रविणानां

---

१ ' वङ्क्षुतीर– ' इ. पा. । ' वङ्क्षुनाम्नी नदी ' इ. व०, ' वङ्क्षुनाम काश्मीरो नदः ' इ. दि० । २ हूणास्तुरुष्कभेदाः इ. चा० । कपोलेति–हूणयोषितः कुचकपोलविदारणपूर्वं रुदन्तीति देशाचारः । इ. चा. । ३ पञ्चनदं समारभ्य म्लेच्छाद्दक्षिणपूर्वतः । कम्बोजदेशो देवेशि वाजिराजिपरायणः॥ इति तन्त्रशास्त्रोक्तदेशभवाः । ते च प्रथमं क्षत्रिया आसन् । किंतु वैदिकक्रियालोपात्पश्चान्म्लेच्छतां गताः । सगरराजेन तेषां सर्वशिरोमुण्डनं कृतम् । तथा च हरिवंशे–अर्धं शकानां शिरसो मुण्डयित्वा व्यसर्जयत् । यवनानां शिरः सर्वं काम्बोजानां तथैव च ॥ इति । ४ अङ्कोलैः इ. पा. ५ सहोक्तिरलङ्कारः । ' सा सहोक्तिः सहार्थस्य बलादेकं द्विवाचकम् । ' इति काव्यप्रकाशः । ६ विविशुस्तं कोशलेशं उदन्वन्तमिवापगाः; उपदा विविशुः शश्वत्समुद्रमिव निम्नगाः; विविशुस्तं विशां नाथं महार्णवमिवापगाः, ' शश्वत् '–' तं च ' इ. पाठान्तराणि ।

हिरण्यानाम् । 'हिरण्यं द्रविणं द्युम्नम्' इत्यमरः । राशयः [ **द्रविणराशयः** ] एव **उपदाः** उपायनानि । 'उपायनमुपग्राह्यमुपहारस्तथोपदा ।' इत्यमरः । **कोसलेश्वरम्** कोसलदेशाधिपतिं तं रघुं **शश्वद्** असकृद् **विविशुः** । 'मुहुः पुनः पुनः शश्वदभीक्ष्णमसकृत्समाः ।' इत्यमरः । तथापि **उत्सेकाः** गर्वास्तु **न** विविशुः । सत्यपि गर्वकारणे न जगर्वेत्यर्थः ॥

**ततो गौरीगुरुं शैलमारुरोहाश्वसाधनः ।**
**वर्धयन्निव तत्कूटानुद्धूतैर्धातुरेणुभिः ॥ ७१ ॥**

**ततः** अनन्तरम् । **अश्वसाधनः** सन्गौर्या गुरुं पितरं [ **गौरीगुरुं** ] **शैलं** हिमवन्तम् । **उद्धूतैः** अश्वखुरोद्धूतैर्धातूनां गैरिकादीनां रेणुभिः [ **धातुरेणुभिः** ] **तत्कूटान्** तस्य शृङ्गाणि । 'कूटोऽस्त्री शिखरं शृङ्गम्' इत्यमरः । **वर्धयन्निव** । **आरुरोह** । उत्पतद्धूलिदर्शनाद्गिरिशिखरवृद्धिभ्रमो जायत इति भावः ॥

**शशंस तुल्यसत्त्वानां सैन्यघोषेऽप्यसंभ्रमम् ।**
**गुहाशयानां सिंहानां परिवृत्यावलोकितम् ॥ ७२ ॥**

**तुल्यसत्त्वानां** सैन्यैः समानबलानाम् । गुहासु शेरत इति गुहाशयास्तेषाम् [ **गुहाशयानां** ] । 'अधिकरणे शेतेः' इत्यच्प्रत्ययः । 'दरी तु कन्दरो वा स्त्री देवखातबिले गुहा ।' इत्यमरः । **सिंहानां** हरीणाम् । 'सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिः ।' इत्यमरः । सम्बन्धि **परिवृत्य** परावृत्य **अवलोकितं** शयित्वैव ग्रीवाभङ्गेनावलोकनम् । कर्तृ । **सैन्यघोषे** सेनाकलकले संभ्रमकारणे सति **अपि असंभ्रमम्** अन्तःक्षोभविरहित्वम् । नञः प्रसज्यप्रतिषेधेऽपि समास इष्यते । **शशंस** कथयामास । सैन्येभ्य इत्यर्थाल्लभ्यते । बाह्यचेष्टितमेव मनोवृत्तेरनुमापकमिति भावः । असंभ्रान्तत्वे हेतुस्तुल्यसत्त्वानामिति । न हि समबलः समबलाद्बिभेतीति भावः ॥

---

१ एतेन रघोर्धीरोदात्तनायकगुणवत्त्वं सूचितम् । 'महासत्त्वोऽतिगंभीरः क्षमावानविकत्थनः । स्थिरो निगूढाहंकारो धीरोदात्तो दृढव्रतः ॥ इ. दशरूपके । २ 'विविशुस्तं विशांनाथमुदन्वन्तमिवापगाः' इति पाठान्तरे आपगा नद्य उदन्वन्तं समुद्रमिव विशां नाथं तं रघुं विविशुः । इत्यधिकं क्वचित् । ३ हिमालये धातुबाहुल्यादिदम् । हिमाचलस्य धातुबाहुल्यं वर्णितं कुमारसंभवे–'यश्चाप्सरोविभ्रममण्डनानां संपादयित्रीं शिखरैर्बिभर्ति । बलाहकच्छेदविभक्तरागामकालसन्ध्यामिव धातुमत्ताम्' ॥ इति । ४ 'अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता । प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ् ॥' 'असंभ्रमं शशंस' इत्यत्र सत्यपि संभ्रमकारणे संभ्रमशंसनरूपस्य विधेरविवक्षितत्वादप्रधानत्वं, संभ्रमाभावरूपस्य निषेधस्यैवात्र विवक्षितत्वात्प्राधान्यम् । तस्य निषेधस्य चात्र 'शशंस' इति क्रियया सम्बन्धः । एवमत्र नञः प्रसज्यप्रतिषेधत्वं ज्ञेयम् । एवं सत्यपि विधेयाविमर्षदोषदुष्टतयायं समासपक्षो गौण एव । दिनकरस्तु एतद्दोषपरिहारायान्यथा व्याचष्टे–प्रकरणात् स रघुरित्यध्याह्रियते । स रघुरात्मना तुल्यं सत्त्वं येषां तादृशानां गुहासु स्थितानां सिंहानां सैन्यकोलाहलेऽप्यसंभ्रमं सधैर्यं यथा स्यात्तथा परिवृत्यावलोकनं शशंसास्तौषीत् । इति । वल्लभोऽपि 'असंभ्रमम्' इति 'अवलोकितम्' इत्यस्य विशेषणं कृत्वा दिनकरवद्व्याचष्टे ।

**भूर्जेषु मर्मरीभूताः कीचकध्वनिहेतवः ।**
**गङ्गाशीकरिणो मार्गे मरुतस्तं सिषेविरे ॥ ७३ ॥**

**भूर्जेषु** भूर्जपत्रेषु । 'भूर्जपत्रो भुजो भूर्जो मृदुत्वक्चर्मिका मता ।' इति यादवः । मर्मरः शुष्कपर्णध्वनिः । 'मर्मरः शुष्कपर्णानाम्' इति यादवः । अयं च शुक्लादिशब्दवद्गुणिन्यपि वर्तते प्रयोज्यते च मर्मरैर्गुरुधूपगन्धिभिरिरिति । अतः **मर्मरीभूताः** । मर्मरशब्दवन्तो भूता इत्यर्थः । कीचकानां वेणुविशेषाणां ध्वनिहेतवः [ **कीचकध्वनिहेतवः** ]। श्रोत्रसुखाश्चेति भावः । **गङ्गाशीकरिणः** । शीतला इत्यर्थः । **मरुतः** वाताः **मार्गे तं सिषेविरे** ॥

**विशश्रमुर्नमेरूणां छायास्वध्यास्य सैनिकाः ।**
**दृषदो वासितोत्सङ्गा निषण्णमृगनाभिभिः ॥ ७४ ॥**

**सैनिकाः** सेनायां समवेताः । प्राग्वहतीयष्ठक्प्रत्ययः । **नमेरूणां** सुरपुन्नागानां **छायासु** निषण्णानां दृषदुपविष्टानां मृगाणां कस्तूरीमृगाणां नाभिभिः [ **निषण्णमृगनाभिभिः** ] **वासितोत्सङ्गाः** सुरभिततलाः **दृषदः** शिलाः **अध्यास्य** अधिष्ठाय । 'अधिशीङ्स्थासां कर्म' इति कर्म । दृषत्स्वधिरुह्येत्यर्थः । **विशश्रमुः** विश्रान्ताः ॥

**सरलासक्तमातङ्गग्रैवेयस्फुरितत्विषः ।**
**आसन्नोषधयो नेतुर्नक्तमस्नेहदीपिकाः ॥ ७५ ॥**

सरलेषु देवदारुविशेषेष्वासक्तानि यानि मातङ्गानां गजानां ग्रीवासु भवानि ग्रैवेयाणि कण्ठशृङ्खलानि । 'ग्रीवाभ्योऽण्च' इति चकारात् ढञ्प्रत्ययः । तेषु स्फुरितात्विषः प्रतिफलितभासः [ **सरलासक्तमातङ्गग्रैवेयस्फुरितत्विषः** ] **ओषधयः** ज्वलन्तो ज्योतिर्लताविशेषाः **नक्तं** रात्रौ **नेतुः** नायकस्य रघोः **अस्नेहदीपिकाः** तैलनिरपेक्षाः प्रदीपाः **आसन्** ॥

**तस्योत्सृष्टनिवासेषु कण्ठरज्जुक्षतत्वचः ।**
**गजवर्म किरातेभ्यः शशंसुर्देवदारवः ॥ ७६ ॥**

**तस्य** रघोः उत्सृष्टेषूज्झितेषु निवासेषु सेनानिवेशेषु [ **उत्सृष्टनिवासेषु** ] कण्ठरज्जुभिर्गजग्रैवैः क्षता निष्पिष्टास्त्वचो येषां ते [ **कण्ठरज्जुक्षतत्वचः** ] **देवदारवः**

---

१ स.२श्लो.१२. द्रष्टव्यः गङ्गेति–अनुरूपभावो द्वितीये–शक्तस्तुषारैः इ. श्लो.१२. २ अनुरूपवर्णनं कुमारे–गणा नमेरुप्रसवावतंसा भूर्जत्वचः स्पर्शवतीर्दधानाः । मनःशिलाविच्छुरिता निषेदुः शैलेयनद्धेषु शिलातलेषु ॥ इति । ३ अग्नौ ओषधिषु च तेजो निधाय रविरस्तं याति इत्यागमः । अत्रौषधीष्वारोप्यमाणस्य प्रदीपत्वस्य प्रकृतरात्रिव्यवहारोपयोगित्वात्परिणामालङ्कारः । तदुक्तम् 'आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणामः ।' इति । तथा प्रदीपकारणतैलपूरणनिषेधादकारणकार्योत्पत्तिलक्षणा विभावना चेत्युभयोः संसृष्टिः । अनुरूपवर्णनं कुमारे–वनेचराणां वनितासखानां दरीगृहोत्सङ्गनिषक्तभासः । भवन्ति यत्रौषधयो रजन्यामतैलपूराः सुरतप्रदीपाः ॥ इति ।

**किरातेभ्यः** वनचरेभ्यो गजानां वर्ष्म प्रमाणम् [ **गजवर्ष्म** ]। 'वर्ष्म देहप्रमाणयोः' इत्यमरः । **शशंसुः** कथितवन्तः । देवदारुस्कन्धत्वक्क्षतैर्गजानामौन्नत्यमनुमीयत इत्यर्थः ॥

**तत्र जन्यं रघोर्घोरं पर्वतीयैर्गणैरभूत् ।**
**नाराचक्षेपणीयाश्मनिष्पेषोत्पतितानलम् ॥ ७७ ॥**

**तत्र** हिमाद्रौ **रघोः** । पर्वते भवैः **पर्वतीयैः** । 'पर्वताच्च' इति छप्रत्ययः । **गणैः** उत्सवसंकेताख्यैः सप्तभिः सह । 'गणानुत्सवसंकेतानजयत्सप्त पाण्डवः ।' इति महाभारते नाराचानां बाणविशेषाणां क्षेपणीयानां भिन्दिपालानामश्मनां च निष्पेषेण संघर्षेणोत्पतिता अनला यस्मिंस्तत्तथोक्तम् [ **नाराचक्षेपणीयाश्मनिष्पेषोत्पतितानलम्** ] । 'क्षेपणीयो भिन्दिपालः खड्गो दीर्घो महाफलः ।' इति यादवः । **घोरं** भीमं **जन्यं** युद्धं **अभूत्** । 'युद्धमायोधनं जन्यम्' इत्यमरः ॥

**शरैरुत्सवसंकेतान्स कृत्वा विरतोत्सवान् ।**
**जयोदाहरणं बाह्वोर्गापयामास किंनरान् ॥ ७८ ॥**

**स** रघुः **शरैः** बाणैः **उत्सवसंकेतान्** नाम गणान् **विरतोत्सवान् कृत्वा** । जित्वेत्यर्थः । **किंनरान्बाह्वोः** स्वभुजयोः **जयोदाहरणं** जयख्यापकं प्रबन्धविशेषं **गापयामास** । 'गतिबुद्धि–' इत्यादिनां किंनराणां कर्मत्वम् ॥

**परस्परेण विज्ञातस्तेषूपायनपाणिषु ।**
**राज्ञा हिमवतः सारो राज्ञः सारो हिमाद्रिणा ॥ ७९ ॥**

**तेषु** गणेषूपायनयुक्ताः पाणयो येषां तेषु [ **उपायनपाणिषु** ] सत्सु । **परस्परेण** अन्योन्यं **राज्ञा हिमवतः सारः** धनरूपो विज्ञातः । **हिमाद्रिणा** अपि **राज्ञः सारः** बलरूपः **विज्ञातः** । एतेन तत्रत्यवस्तूनामनर्घ्यत्वं गणानामभूतपूर्वश्च पराजय इति ध्वन्यते ॥

**तत्राक्षोभ्यं यशोराशिं निवेश्यावरुरोह सः ।**
**पौलस्त्यतुलितस्याद्रेरादधान इव ह्रियम् ॥ ८० ॥**

---

१ संग्रामः सह तैस्तत्र पार्वतीयैरभूद्रघोः । इ०, विमर्दः सह तैस्तत्र ...। ... तानलः । इ. प्र. द्वि. पादयोः पा० । २ पार्वतीयैः इति पाठे पर्वतीयानामिमे पार्वतीयाः गणास्तैः इति व्याख्येयम् । ३ उत्सवसंकेतादयः सप्त गणा हिमालये वसन्ति इति महाभारतेपि वर्णितम् । 'पौरवं युधि निर्जित्य दस्यून्पर्वतवासिनः । गणानुत्सव० ' इति ॥ ४ 'यशो जयोदाहरणम्' इति हैमः । इ. चा० । प्रतापरुद्रस्तु–येन केनापि तालेन गद्यपद्यसमन्वितं । जयत्युपक्रमं मालिन्यादिप्रासविचित्रितम् । तदुदाहरणं नाम विभक्त्यष्टाङ्गसंयुतम् ॥ इति उदाहरणलक्षणमाचष्टे । किंनरान्–कुत्सिता नराः । तेषामश्वमुखत्वान्नरदेहत्वाच्च । एवं किम्पुरुषा इत्यादिकाः संज्ञाश्च । ५ राजगणानामित्यर्थः ।

**स** रघुः **तत्र** हिमाद्रौ **अक्षोभ्यं** अधृष्यं **यशोराशिं निवेश्य** निधाय। पौलस्त्येन रावणेन तुलितस्य चालितस्य [ **पौलस्त्यतुलितस्य** ] **अद्रेः** कैलासस्य **ह्रियमादधानः** जनयन् **इव**। **अवरुरोह** अवततार। कैलासमगत्वैव प्रतिनिवृत्त इत्यर्थः। न हि शूराः परेण पराजितमभियुज्यन्त इति भावः ॥

**चकम्पे तीर्णलौहित्ये तस्मिन्प्राग्ज्योतिषेश्वरः।**
**तद्गजालानतां प्राप्तैः सह कालागुरुद्रुमैः ॥ ८१ ॥**

**तस्मिन्** रघौ। तीर्णो लौहित्यो नाम नदी येन तस्मिन् **तीर्णलौहित्ये** सति। प्राग्ज्योतिषाणां जनपदानामीश्वरः [ **प्राग्ज्योतिषेश्वरः** ]। तस्य रघोर्गजानामालानतां [ **तद्गजालानतां** ] **प्राप्तैः कालागुरुद्रुमैः** कृष्णागुरुवृक्षैः **सह चकम्पे** कम्पितवान् ॥

**न प्रसेहे स रुद्धार्कमधारावर्षदुर्दिनम्।**
**रथवर्त्मरजोऽप्यस्य कुत एव पताकिनीम् ॥ ८२ ॥**

**स** प्राग्ज्योतिषेश्वरः **रुद्धार्कम्** आवृतसूर्यम्। अधारावर्षं च तद्दुर्दिनं च [ **अधारावर्षदुर्दिनम्** ] धारावृष्टिं विना दुर्दिनीभूतम्। **अस्य** रघोः **रथवर्त्मरजः अपि न प्रसेहे**। **पताकिनीं** सेनां तु **कुत एव** प्रसेहे। न कुतोऽपीत्यर्थः ॥

**तमीशः कामरूपाणामत्याखण्डलविक्रमम्।**
**भेजे भिन्नकटैर्नागैरन्यानुपरुरोध यैः ॥ ८३ ॥**

**कामरूपाणां** नाम देशानां **ईशः अत्याखण्डलविक्रमं** अतीन्द्रपराक्रमं **तं** रघुम्। भिन्नाः स्रवन्मदाः कटा गण्डा येषां तैः [ **भिन्नकटैः** ] **नागैः** गजैः साधनैः **भेजे**। नागान्दत्त्वा शरणं गत इत्यर्थः। कीदृशैर्नागैः। **यैः अन्यान्** रघुव्यतिरिक्तान् नृपान् **उपरुरोध**। शूराणामपि शूरो रघुरिति भावः ॥

---

१ पुलस्त्यस्य गोत्रापत्यं पुमान्पौलस्त्यः। एकदा कुबेरं जित्वा तत्पुष्पकमपहृत्य गच्छतो रावणस्य विमानं कैलासैकदेशं प्राप्य निश्चलमभूत्। अत्रान्तरे नन्दिनागत्य 'अगम्यादस्माच्छङ्करविहारशैलान्निवर्तस्व' इति स आदिष्टः। 'अचिन्तयित्वा स तदा नन्दिवाक्यं महाबलः। पर्वतं तु समासाद्य वाक्यमाह दशाननः। पुष्पकस्य गतिश्छिन्ना यत्कृते मम गच्छतः। तमिमं शैलमुन्मूलं करोमि तव गोपते ॥ * * * एवमुक्त्वा ततो राम भुजान् विक्षिप्य पर्वते। तोलयामास तं शीघ्रं स शैलः समकम्पत ॥' इति रामायणकथात्रानुसन्धेया ॥

२ लौहित्यः—अयं नदः कैलासे लोहित्यसरस उत्पन्नत्वात् लौहित्यः ब्रह्मतेजःसंभूततया च ब्रह्मपुत्र इति प्रसिद्धिं गतः। परशुरामः किल कुठारेण पर्वतं भित्त्वा तन्मार्गेण नदमिमं पृथिव्यां प्रवर्तयामास। तथा प्रवर्तितः स कामरूपादिदेशमाप्लावयन्वहति। तदुक्तं कालिकापुराणे—जातसंप्रत्ययः सोथ तीर्थमासाद्य तं वरम्। वीथिं परशुना कृत्वा ब्रह्मपुत्रमवाहयत्। ब्रह्मकुण्डात्सुतः सोथ कासारे लोहिताह्वये। कैलासोपत्यकायां तु न्यपतद् ब्रह्मणः सुतः॥ × × तस्य नाम विधिश्चक्रे स्वयं लोहितगङ्गकम्। लोहित्यात्सरसो जातो लौहित्याख्यस्ततोऽभवत् ॥ स कामरूपमखिलं पीठमाप्लाव्य वारिणा। गोपयन्सर्वतीर्थानि दक्षिणं याति सागरम् ॥ इति ॥ प्राग्ज्योतिषव्युत्पत्तिः कालिकापुराणे—अत्रैव हि स्थितो ब्रह्मा प्राङ् नक्षत्रं ससर्ज ह। ततः प्राग्ज्योतिषाख्येयं पुरी शक्रपुरीसमा ॥ ३ अतिक्रान्त आखण्डलस्य विक्रमो येन तम्।

**कामरूपेश्वरस्तस्य हेमपीठाधिदेवताम् ।**
**रत्नपुष्पोपहारेण छायामानर्च पादयोः ॥ ८४ ॥**

**कामरूपेश्वरः** हेमपीठस्याधिदेवतां [**हेमपीठाधिदेवताम्**] **तस्य** रघोः **पादयोः छायां** कनकमयपादपीठव्यापिनीं कान्ति रत्नान्येव पुष्पाणि तेषामुपहारेण समर्पणेन [ **रत्नपुष्पोपहारेण** ] **आनर्च** अर्चयामास ॥

**इति जित्वा दिशो जिष्णुर्न्यवर्तत रथोद्धतम्[२] ।**
**रजो विश्रामयन्राज्ञां छत्रशून्येषु मौलिषु ॥ ८५ ॥**

**जिष्णुः** जयशीलः । 'ग्लाजिस्थश्च ग्स्नुः' इति ग्स्नुप्रत्ययः । स रघुः **इति** इत्थं **दिशः जित्वा** रथैरुद्धतं **रथोद्धतं रजः** । **छत्रशून्येषु** । रघोरेकच्छत्रकत्वादिति भावः । **राज्ञां मौलिषु** किरीटेषु । 'मौलिः किरीटे धम्मिल्ले चूडाकङ्केलिमूर्धसु' इति हैमः । **विश्रामयन्** । संक्रामयन्नित्यर्थः । **न्यवर्तत** निवृत्तः ॥

**स विश्वजितमाजह्रे[३] यज्ञं सर्वस्वदाक्षिणम् ।**
**आदानं हि विसर्गाय सतां वारिमुचामिव ॥ ८६ ॥**

**स** रघुः सर्वस्वं दक्षिणा यस्य तं **सर्वस्वदक्षिणम्** । 'विश्वजित्सर्वस्वदक्षिणः' इति श्रुतेः । **विश्वजितं** नाम **यज्ञमाजह्रे** । कृतवानित्यर्थः । युक्तं चैतदित्याह—**सतां** साधूनाम् । **वारिमुचां** मेघानां **इव** । **आदानम्** अर्जनं **विसर्गाय** त्यागाय **हि** । पात्रविनियोगायेत्यर्थः ॥

**सत्रान्ते सचिवसखः पुरस्क्रियाभि–**
**र्गुर्वीभिः शमितपराजयव्यलीकान् ।**
**काकुत्स्थश्चिरविरहोत्सुकावरोधा–**
**न्राजन्यान्स्वपुरनिवृत्तयेऽनुमेने ॥ ८७ ॥**

**काकुत्स्थः** रघुः **सत्रान्ते** यज्ञान्ते । 'सत्रमाच्छादने यज्ञे सदादाने धनेऽपि च' इत्यमरः । सचिवानाममात्यानां सखेति **सचिवसखः** सन् । 'सचिवो भृतकेऽमात्ये' इति हैमः । तेषामत्यन्तानुसरणद्योतनार्थं राज्ञः सखित्वव्यपदेशः । 'राजाहःसखिभ्यष्टच्' । **गुर्वीभिः** महतीभिः । 'गुरुर्महत्याङ्गिरसे पित्रादौ धर्मदेशके ।' इति हैमः । **पुरस्क्रियाभिः** पूजाभिः शमितं पराजयेन व्यलीकं दुःखं वैलक्ष्यं वा येषां तान् [ **शमितपराजयव्यलीकान्** ] । 'दुःखे वैलक्ष्ये व्यलीकम्' इति यादवः । चिरविरहेणोत्सुका उत्कण्ठिता अवरोधा अन्तःपुराङ्गना येषां तान् [ **चिरविरहोत्सुकावरोधान्** ] । राज्ञोऽपत्यानि राजन्याः क्षत्रियास्तान् [ **राजन्यान्** ] । 'राजश्वशुराद्यत्' इत्यपत्यार्थे यत्प्रत्ययः । 'मूर्धाभिषिक्तो राजन्यो बाहुजः क्षत्रियो विराट् ।' इत्यमरः । स्वपुरं प्रति निवृत्तये प्रतिगमनाय [ **स्वपुरनिवृत्तये** ] **अनुमेने** अनुज्ञातवान् । प्रहर्षिणीवृत्तमेतत् । तदुक्तम्—' म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम् । ' इति ॥

---

१ 'हेमपुष्पो०' इ. पा. २ 'रथोद्धृतम्' इ. पा. ३ 'आरेभे' इ. वा० दि० व० सु० ध० दयः पठन्ति । ४ यथा जलदानां समुद्राज्जलग्रहणं विसर्गाय वृष्टये भवति तथा सज्जनानामपि । इ. सु० ५ सीदन्त्यत्रेति सत्रम् ।

ते रेखाध्वजकुलिशातपत्रचिह्नं
सम्राजश्चरणयुगं प्रसादलभ्यम् ।
प्रस्थानप्रणतिभिरङ्गुलीषु चक्रु-
र्मौलिस्रक्च्युतमकरन्दरेणुगौरम् ॥ ८८ ॥

**ते** राजानः । [ **रेखाध्वजकुलिशातपत्रचिह्नम्** ] रेखा एव ध्वजाश्च कुलिशानि चातपत्राणि च । ध्वजाद्याकाररेखा इत्यर्थः । तानि चिह्नानि यस्य तत्तथोक्तम् । प्रसादेनैव लभ्यं **प्रसादलभ्यम्** । **सम्राजः** सार्वभौमस्य रघोः **चरणयुगं** प्रस्थाने प्रयाणसमये याः प्रणतयो नमस्कारास्ताभिः [ **प्रस्थानप्रणतिभिः** ] करणैः **अङ्गुलीषु** । मौलिषु केशबन्धनेषु याः स्रजो माल्यानि ताभ्यश्च्युतैर्मकरन्दैः पुष्परसैः । 'मकरन्दः पुष्परसः' इत्यमरः । रेणुभिः परागैश्च । 'परागः सुमनोरजः' इत्यमरः । गौरं गौरवर्णं [ **मौलिस्रक्च्युतमकरन्दरेणुगौरम्** ] **चक्रुः** ॥

इति महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया संजीवनीसमाख्यया व्याख्यया समेतो महाकविश्रीकालिदासकृतौ रघुवंशे महाकाव्ये रघुदिग्विजयो नाम चतुर्थः सर्गः ।

---

## पञ्चमः सर्गः ।



इन्दीवरदलश्याममिन्दिरानन्दकन्दलम् ।
वन्दारुजनमन्दारं वन्देऽहं यदुनन्दनम् ॥

तमध्वरे विश्वजिति क्षितीशं निःशेषविश्राणितकोषजातम् ।
उपात्तविद्यो गुरुदक्षिणार्थी कौत्सः प्रपेदे वरतन्तुशिष्यः ॥ १ ॥

**विश्वजिति** विश्वजिन्नाम्नि **अध्वरे** यज्ञे । 'यज्ञः सवोऽध्वरो यागः' इत्यमरः । [ **निःशेषविश्राणितकोषजातम्** ] निःशेषं विश्राणितं दत्तम् । 'श्रण दाने' चुरादिः । कोषाणामर्थराशीनां जातं समूहो येन तं तथोक्तम् । 'कोषोऽस्त्री कुड्मले खड्गपिधानेऽर्थौघदिव्ययोः ।' इत्यमरः । 'जातं जनिसमूहयोः' इति शाश्वतः । एतेन कौत्सस्यानवसरप्राप्तिं सूचयति । **तं क्षितीशं** रघुं **उपात्तविद्यः** लब्धविद्यो वरतन्तोः शिष्यः [ **वरतन्तुशिष्यः** ] **कौत्सः** । 'ऋष्यन्धक–' इत्यण् । इञोऽपवादः । **गुरुदक्षिणार्थी** ।'पुष्करादिभ्यो देशे' इत्यत्रार्थाच्चासन्निहिते तदन्ताच्चेतीनिः । अप्रत्याख्येय इति भावः । **प्रपेदे** प्राप । अस्मिन्सर्गे वृत्तमुपजातिः ।

---

१ यदुक्तं सामुद्रके–यस्य पादतले पद्मं चक्रं वाप्यथ तोरणम् । अङ्कुशं कुलिशं छत्रं स सम्राट् भवति ध्रुवम् ॥ अस्मात्परं श्लोकमेकं पठन्ति दि० व० सु०यादयः । यथा–यज्ञान्ते तमवभृथाभिषेकपूतं सत्कारैः शमितपराजयव्यलीकाः । आमन्त्र्योत्सुकवनितानिरुद्धचित्ताः स्वानि स्वान्यवनिभुजः पुराणि जग्मुः ॥ २ इन्दीवरं नीलकमलं तस्य दलवत् श्यामम् । इन्दिरा लक्ष्मीस्तस्या आनन्दस्य कन्दलं विकासभूतम् । वन्दारुजनो भक्तजनस्तस्य मन्दारं कल्पवृक्षम् । एवंविधं यदुनन्दनं कृष्णमहं वन्दे । ३ अध्वरशब्दनिरुक्तिस्तूक्ता ( स. १ श्लो. ११ ) ४ उपात्ता अधीताः चतुर्दश विद्या येन । २१ श्लोके तथोक्तत्वात् । विद्या अपि तत्रैवोक्ताः टीकाकृता ।

तल्लक्षणं तु—'स्यादिन्द्रवज्रा यदि तौ जगौ ग उपेन्द्रवज्रा जतजास्ततो गौ। अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः ॥' इति ॥

**स मृन्मये वीतहिरण्मयत्वात्पात्रे निधायार्घ्यमनर्घशीलः ।**
**श्रुतप्रकाशं यशसा प्रकाशः प्रत्युज्जगामातिथिमातिथेयः ॥ २ ॥**

**अनर्घशीलः** अमूल्यस्वभावः । असाधारणस्वभाव इत्यर्थः । 'मूल्ये पूजाविधावर्घः' इति 'शीलं स्वभावे सद्वृत्ते' इति चामरशाश्वतौ । **यशसा** कीर्त्या । प्रकाशत इति **प्रकाशः** । पचाद्यच् । अतिथिषु साधुः **आतिथेयः** । 'पथ्यतिथिवसतिस्वपतेर्ढञ्' इति ढञ् । **स** रघुः । हिरण्यस्य विकारो हिरण्मयम् । 'दाण्डिनायन–' आदिसूत्रेण निपातः । **वीतहिरण्मयत्वात्** अपगतसुवर्णपात्रत्वात् । यज्ञस्य सर्वस्वदक्षिणाकत्वादिति भावः । **मृन्मये** मृद्विकारे **पात्रे** अर्घार्थमिदं **अर्घ्यम्** । 'पादार्घाभ्यां च' इति यत् । पूजार्थं द्रव्यं **निधाय श्रुतेन** शास्त्रेण प्रकाशं प्रसिद्धम् [ **श्रुतप्रकाशं** ] । श्रूयत इति श्रुतं वेदशास्त्रम् । 'श्रुतं शास्त्रावधृतयोः' इत्यमरः । **अतिथिं** अभ्यागतं कौत्सम् । 'अतिथिर्ना गृहागते' इत्यमरः **प्रत्युज्जगाम** ॥

**तमर्चयित्वा विधिवद्विधिज्ञस्तपोधनं मानधनाग्रयायी ।**
**विशांपतिर्विष्टरभाजमारात्कृताञ्जलिः कृत्यविदित्युवाच ॥ ३ ॥**

**विधिज्ञः** शास्त्रज्ञः । अकरणे प्रत्यवायभीरुरित्यर्थः । मानधनानामग्रयाय्यग्रेसरः [ **मानधनाग्रयायी** ] । अपयशोभीरुरित्यर्थः । **कृत्यवित्** कार्यज्ञः । आगमनप्रयोजनमवश्यं प्रष्टव्यमिति कृत्यवित् । **विशांपतिः** मनुजेश्वरः । 'द्वौ विशौ वैश्यमनुजौ' इत्यमरः । **विष्टरभाजम्** आसनगतम् । उपविष्टमित्यर्थः । 'विष्टरो विटपी दर्भमुष्टिः पीठाद्यमासनम् ।' इत्यमरः । 'वृक्षासनयोर्विष्टरः' इति निपातः । **तं तपोधनं विधिवद्** विध्यर्हम् । यथाशास्त्रमित्यर्थः । 'तदर्हम्' इति वतिप्रत्ययः । **अर्चयित्वा आरात्** समीपे । 'आराद्दूरसमीपयोः' इत्यमरः । **कृताञ्जलिः** सन् **इति** वक्ष्यमाणप्रकारेण **उवाच** ॥

**अप्यग्रणीर्मन्त्रकृतामृषीणां कुशाग्रबुद्धे कुशली गुरुस्ते ।**
**यतस्त्वया ज्ञानमशेषमाप्तं लोकेन चैतन्यमिवोष्णरश्मेः ॥ ४ ॥**

**कुशाग्रबुद्धे** सूक्ष्मबुद्धे । 'कुशाग्रीयमतिः प्रोक्तः सूक्ष्मदर्शी च यः पुमान् ।' इति हलायुधः । **मन्त्रकृतां** मन्त्रद्रष्टॄणाम् । 'सुकर्मपापमन्त्र–' इत्यादिना क्विप् । **ऋषीणामग्रणीः** श्रेष्ठः **ते** तव **गुरुः कुशली अपि** क्षेमवान्किम् । अपि प्रश्ने । 'गर्हासमुच्चयप्रश्नशङ्कासंभावनास्वपि ।' इत्यमरः । **यतः** यस्माद्गुरोः सकाशात् **त्वया अशेषं ज्ञानम्** । **लोकेन उष्णरश्मेः** सूर्यात् **चैतन्यं** प्रबोधः **इव** । **आप्तम्** स्वीकृतम् ॥

---

१ तदुक्तं मनुना–संप्राप्ताय त्वतिथये प्रदद्यादासनोदके । अन्नं चैव यथाशक्ति सत्कृत्य विधिपूर्वकम् ॥ २ 'चैतन्यमुष्णादिव दीक्षितेन' इ. हे० व० पठतः । वल्लभो व्याचष्टे च–यथा दीक्षितेन याज्ञिकेनोष्णादीश्वराच्चैतन्यमाप्यते ज्ञानं प्राप्यते इ० । 'चैतन्यम्–आलोकम्–अर्कादिव जीवलोकः' इति च पा०. ३ 'वेदसंहिताकारिणाम्' इति चा० । ४ सूर्यसाम्याद् गुरोर्ज्ञानतेजसोऽज्ञानतिमिरध्वंसः सूचितः । उक्तं च 'अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया । चक्षुरुन्मीलितं येन तस्मै श्रीगुरुवे नमः ॥' इति ।

**कायेन वाचा मनसापि शश्वद्यत्संभृतं वासवधैर्यलोपि ।**
**आपाद्यते न व्ययमन्तरायैः कच्चिन्महर्षेस्त्रिविधं तपस्तत् ॥ ५ ॥**

**कायेन** उपवासादिकृच्छ्रचान्द्रायणादिना **वाचा** वेदपाठेन **मनसा** गायत्रीजपादिना **अपि** । करणेन । वासवस्येन्द्रस्य धैर्यं लुम्पतीति **वासवधैर्यलोपि** । स्वपदापहारशङ्काजनकमित्यर्थः । **यत्तपः शश्वत्** असकृत् । 'मुहुः पुनः पुनः शश्वदभीक्ष्णमसकृत्समाः ।' इत्यमरः । **संभृतं** संचितं **महर्षेः** वरतन्तोः **त्रिविधं** वाङ्मनःकायजं **तत्तपः अन्तरायैः** विघ्नैरिन्द्रप्रेरिताप्सरःशापैः **व्ययं** नाशं **न आपाद्यते कच्चित्** न नीयते किम् । 'कच्चित्कामप्रवेदने' इत्यमरः ॥

**आधारबन्धप्रमुखैः प्रयत्नैः संवर्धितानां सुतनिर्विशेषम् ।**
**कच्चिन्न वाय्वादिरुपप्लवो वः श्रमच्छिदामाश्रमपादपानाम् ॥ ६ ॥**

**आधारबन्धप्रमुखैः** आलवालनिर्माणादिभिः **प्रयत्नैः** उपायैः । 'आधार आलवालेऽम्बुबन्धेऽधिकरणेऽपि च ।' इति विश्वः । [ **सुतनिर्विशेषम्** ] सुतेभ्यो निर्गतो विशेषोऽतिशयो यस्मिन्कर्मणि तत्तथा । **संवर्धितानां श्रमच्छिदां वः आश्रमपादपानां वाय्वादिः** । आदिशब्दाद्दावानलादिः । **उपप्लवः** बाधकः **न कच्चित्** नास्ति किम् ॥

**क्रियानिमित्तेष्वपि वत्सलत्वादभग्नकामा मुनिभिः कुशेषु ।**
**तदङ्कशय्याच्युतनाभिनाला कच्चिन्मृगीणामनघा प्रसूतिः ॥ ७ ॥**

**क्रियानिमित्तेष्वपि** अनुष्ठानसाधनेष्वपि **कुशेषु मुनिभिः वत्सलत्वात्** मृगस्नेहाद् **अभग्नकामा** अप्रतिहतेच्छा । [ **तदङ्कशय्याच्युतनाभिनाला** ] तेषां मुनीनामङ्का एव शय्यास्तासु च्युतानि नाभिनालानि यस्याः सा तथोक्ता । **मृगीणां प्रसूतिः** संततिः **अनघा** अव्यसना **कच्चित्** । अनपायिनी किमित्यर्थः । 'दुःखैनोव्यसनेष्वघम्' इति यादवः । ते हि व्यालभयाद्दशरात्रमङ्क एव धारयन्ति ॥

**निर्वर्त्यते यैर्नियमाभिषेको येभ्यो निवापाञ्जलयः पितृणाम् ।**
**तान्युञ्छषष्ठाङ्कितसैकतानि शिवानि वस्तीर्थजलानि कच्चित् ॥ ८ ॥**

१ 'यद्वज्रिणो धैर्यविलोपि तप्तम्' इ० पा. २ इन्द्रप्रेरिताप्सरोभिः शापेन च इत्य० । इन्द्रस्य हि अन्यसमाधिभीरुत्वं कवयस्तत्र तत्र वर्णयन्ति । यथा कुमारे 'केनाभ्यसूया पदकाङ्क्षिणा ते नितान्तदीर्घैर्जनिता तपोभिः' ॥ अग्रेऽप्यष्टमसर्गे 'चरतः किल' इत्यादि । त्रयोदशे-'समाधिभीतेन किल' (३९) इत्या० 'नालं विकर्तुम्' (४२) इ० च । अन्यस्मात्त्राणाभावे मुनयोऽन्तरायशान्त्यर्थं शापप्रयोगेन तपोव्ययं कुर्वन्ति । उक्तं च पञ्चदशे 'त्राणाभावे हि शापास्त्राः कुर्वन्ति तपसो व्ययम्' । ३ 'कच्चित् इष्टप्रियप्रश्ने' इत्यभिधानचिन्तामणिः । कोमलामन्त्रणे इ. सु० ४ वृक्षकाणाम् इति दि० पठति । तेऽप्यतिथिसंभावनया पुत्रवदुपकुर्वन्ति । यदुक्तं त्रयोदशे-छायाविनीताध्वपरिश्रमेषु भूयिष्ठसंभाव्यफलेष्वमीषु । तस्यातिथीनामधुना सपर्या स्थिता सुपुत्रेष्विव पादपेषु ॥ (४६) इति । ५ 'ते हि व्यालभयाद्दशरात्रमङ्के एव धारयन्ति इति शान्तिदयोक्तिः' इ. हे० ।

**यैः** तीर्थजलैः **नियमाभिषेकः** नित्यस्नानादि **निर्वर्त्यते** निष्पाद्यते । **येभ्यः** जलेभ्यः उद्धृत्येति शेषः । **पितॄणां** अग्निष्वात्तादीनां **निवापाञ्जलयः** तर्पणाञ्जलयः । 'पितृदानं निवापः स्यात्' इत्यमरः । निर्वर्त्यन्ते । [ **उञ्छषष्ठाङ्कितसैकतानि** ] उञ्छानां प्रकीर्णोद्धृतधान्यानां षष्ठैः षष्ठभागैः पालकत्वद्राजग्राह्यैरङ्कितानि सैकतानि पुलिनानि येषां तानि तथोक्तानि । वः युष्माकं **तानि तीर्थजलानि शिवानि** भद्राणि **कच्चित्** । अनुपप्लवानि किमित्यर्थः । 'उञ्छो धान्यांशकादानं कणिशाद्यर्जनं शिलम् ।' इति यादवः । 'षष्ठाष्टमाभ्यां ञ च' इति षष्ठशब्दाद्भागार्थेऽन्प्रत्ययः । अत एवापूरणार्थत्वात् 'पूरणगुण-' इत्यादिना न षष्ठीसमासप्रतिषेधः । सिकता येषु सन्ति सैकतानि । 'सिकताशर्कराभ्यां च' इत्यण्प्रत्ययः ॥

**नीवारपाकादि कडंगरीयैरामृश्यते जानपदैर्न कच्चित् ।**
**कालोपपन्नातिथिकल्प्यभागं वन्यं शरीरस्थितिसाधनं वः ॥ ९ ॥**

[ **कालोपपन्नातिथिकल्प्यभागं** ] कालेषु योग्यकालेषूपपन्नानामागतानामतिथीनां कल्प्या भागा यस्य तत्तथोक्तम् । वने भवं **वन्यम्** । शरीरस्थितेर्जीवितस्य साधनं [ **शरीरस्थितिसाधनं** ] **वः** युष्माकम् । पच्यत इति पाकः फलम् । धान्यमिति यावत् । **नीवारपाकादि** । आदिशब्दाच्छ्यामाकादिधान्यसंग्रहः । जनपदेभ्य आगतैः **जानपदैः** । 'तत आगतः' इत्यण् । **कडंगरीयैः** । कडंगरं बुसमर्हन्तीति कडंगरीयाः । 'कडंगरो बुसं क्लीबे धान्यत्वचि तुषः पुमान् ।' इत्यमरः । 'कडंगरदक्षिणाच्छ च' इति छप्रत्ययः । तैर्गोमहिषादिभिः **न आमृश्यते कच्चित्** । न भक्ष्यते किमित्यर्थः ॥

**अपि प्रसन्नेन महर्षिणा त्वं सम्यग्विनीयानुमतो गृहाय ।**
**कालो ह्ययं संक्रमितुं द्वितीयं सर्वोपकारक्षममाश्रमं ते ॥ १० ॥**

किं च **त्वं प्रसन्नेन** सता **महर्षिणा सम्यग्विनीय** शिक्षयित्वा । विद्यामुपदिश्येत्यर्थः । **गृहाय** गृहस्थाश्रमं प्रवेष्टुम् । 'क्रियार्थोपपद-' इत्यादिना चतुर्थी । **अनुमतोऽपि** अनुज्ञातः किम् । **हि** यस्मात् **ते** तव सर्वेषामाश्रमाणां ब्रह्मचर्यवानप्रस्थयती-

---

१ नियमेन नित्यकर्तव्यतया अभिषेकः । अत्र कात्यायनः-'यथाहानि तथा प्रातर्नित्यं स्नायादनातुरः ।' इति । जाबालिश्च-'आचरेदुषसि स्नानं तर्पयेद्देवमानुषान् ।' इति । २ अग्निष्वात्तादीनाम् । मरीचिपुत्रा देवपितरश्चाग्निष्वात्तसंज्ञाः । यथाह मनुः-विराट्सुताः सोमसदः साध्यानां पितरः स्मृताः । अग्निष्वात्ताश्च देवानां मारीच्या लोकविश्रुताः ॥ ३ उञ्छषष्ठेत्यत्र हेमाद्रिः-मुनयो हि नृपोद्देशेन षष्ठं भागं तीरे क्षिपन्ति । यदुक्तम्—'यस्मादारण्यका अप्युञ्छषष्ठभागं निर्वापयन्ति ।' इति श्रुतेः । योऽस्मान्पालयतीति । कुशूलकुम्भीधान्यो वा त्र्याहिकोऽश्वस्तनोऽपि वा । जीवेद्वापि शिलोञ्छेन श्रेयानेषां परः परः ॥ इति याज्ञवल्क्यः । मुनयो हि नृपोद्देशेन षष्ठं भागं तीरे क्षिपन्ति । योऽस्मान्पालयति तस्मै षष्ठोयं भागः । इति व० । उञ्छवृत्तौ मनुः—'शिलोञ्छमप्याददीत विप्रो जीवत्यतस्ततः ।' इति । ४ अत्र हेमाद्रिव्याख्या यथा-पाकशब्दोऽल्पार्थः प्रशंसार्थश्च । तथा त्रयः पाकयज्ञा इत्यत्राश्वलायनगृह्यनारायणीयवृत्तौ-पाकयज्ञा अल्पयज्ञाः प्रशस्तयज्ञाश्च । अल्पप्रशस्तयोरुभयोः पाकशब्दः । योस्मात्पाकतर इत्यत्राल्पत्वे पाकशब्दः । तं पाकेन मनसापश्यं यो मां पाकेन मनसेति अत्र प्रशंसायामिति ।

नामुपकारे क्षमं शक्तम् [ **सर्वोपकारक्षमम्** ]। 'क्षमं शक्ते हिते त्रिषु' इत्यमरः। **द्वितीयमाश्रमं** गार्हस्थ्यं **संक्रमितुं** प्राप्तुं **अयं कालः**। विद्याग्रहणानन्तर्यात्तस्येति भावः। 'कालसमयवेलासु तुमुन्' इति तुमुन्। सर्वोपकारक्षममित्यत्र मनुः–'यथा मातरमाश्रित्य सर्वे जीवन्ति जन्तवः। वर्तन्ते गृहिणस्तद्वदाश्रित्येतर आश्रमाः॥' इति॥

कुशलप्रश्नं विधायागमनप्रयोजनप्रश्नं चिकीर्षुराह—

**तवार्हतो नाभिगमेन तृप्तं मनो नियोगक्रिययोत्सुकं मे।**
**अप्याज्ञया शासितुरात्मना वा प्राप्तोऽसि संभावयितुं वनान्माम् ११**

**अर्हतः** पूज्यस्य प्रशस्तस्य। 'अर्हः प्रशंसायाम्' इति शतृप्रत्ययः। **तव अभिगमेन** आगमनमात्रेण **मे मनो न तृप्तं** न तुष्टम्। किंतु **नियोगक्रियया** आज्ञाकरणेन **उत्सुकं** सोत्कण्ठम्। 'इष्टार्थोद्युक्त उत्सुकः' इत्यमरः। 'प्रसितोत्सुकाभ्यां तृतीया च' इति सप्तम्यर्थे तृतीया। **शासितुः** गुरोः **आज्ञया अपि आत्मना** स्वतः **वा**। 'प्रकृत्यादिभ्य उपसंख्यानम्' इति तृतीया। **मां संभावयितुं वनात्प्राप्तोऽसि**। गुर्वर्थे स्वार्थे वा आगमनमित्यर्थः॥

**इत्यर्घ्यपात्रानुमितव्ययस्य रघोरुदारामपि गां निशम्य।**
**स्वार्थोपपत्तिं प्रति दुर्बलाशस्तमित्यवोचद्वरतन्तुशिष्यः॥ १२॥**

अर्घ्यपात्रेण मृन्मयेनानुमितो व्ययः सर्वस्वत्यागो यस्य तस्य [ **अर्घ्यपात्रानुमितव्ययस्य** ] **रघोः इति** उक्तप्रकारां **उदाराम्** औदार्ययुक्तां **अपि गां** वाचम्। 'मनोनियोगक्रिययोत्सुकं मे' इत्येवंरूपाम्। 'स्वर्गेषुपशुवाग्वज्रादिङ्नेत्रघृणिभूजले। लक्ष्यदृष्ट्या स्त्रियां पुंसि गौः' इत्यमरः। **निशम्य** श्रुत्वा **वरतन्तुशिष्यः** कौत्सः **स्वार्थोपपत्तिं** स्वकार्यसिद्धिं **प्रति दुर्बलाशः** मृन्मयपात्रदर्शनाच्छिथिलमनोरथः सन् **तं** रघुम् **इति** वक्ष्यमाणप्रकारेण **अवोचत्**॥

**सर्वत्र नो वार्तमवेहि राजन्नाथे कुतस्त्वय्यशुभं प्रजानाम्।**
**सूर्ये तपत्यावरणाय दृष्टेः कल्पेत लोकस्य कथं तमिस्रा॥ १३॥**

हे **राजन्** त्वं **सर्वत्र नः** अस्माकं **वार्तं** स्वास्थ्यम् **अवेहि** जानीहि। 'वार्तं फल्गुन्यरोगे च' इत्यमरः। 'वार्तं पाटवमारोग्यं भव्यं स्वास्थ्यमनामयम्।' इति यादवः।

---

१ यथाह मनुः–वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम्। अविप्लुतब्रह्मचर्यो गृहस्थाश्रममाविशेत्॥ गुरुणानुमतः स्नात्वा समावृत्तो यथाविधि। इति। अ. २. श्लो. ७७, ७८. अ. ६. श्लो. ८९, ९० द्रष्टव्याः। २ अनुग्रहेणाभिगमास्थितेन तवार्हतस्तुष्य(स्तृप्य)ति मे न चेतः। इ. दि० पठति। ३ धातूनामनेकार्थत्वात्। प्रेयोनामालंकारः। तथा काव्यादर्शे–'प्रेयः प्रियतराख्यानम्' इ. हे०। ४ 'तं प्रत्यवोचत्' हे० व०। 'प्रत्याह कौत्सस्तमपेतकुत्सम्' इ. दि० ध० वि०। ५ 'गुर्वाश्रमप्रभृतिषु' इति दि०।

न चैतदाश्चर्यमित्याह–नाथ इति । **त्वयि नाथे** ईश्वरे सति **प्रजानामशुभं** दुःखं **कुतः** । तथाहि । अर्थान्तरं न्यस्येति–सूर्य इत्यादिना । **सूर्ये तपति** प्रकाशमाने सति **तमिस्रा** तमस्ततिः । 'तमिस्रं तिमिरं रोगे तमिस्रा तु तमस्ततौ । कृष्णपक्षनिशायां च' इति विश्वः । 'तमिस्रम्' इति पाठे तमिस्रं तिमिरम् । 'तमिस्रं तिमिरं तमः' इत्यमरः । **लोकस्य** जनस्य । 'लोकस्तु भुवने जने' इत्यमरः । **दृष्टेरावरणाय कथं कल्पेत** । दृष्टिमावरितुं नालमित्यर्थः । कृपेरलमर्थत्वात्तद्योगे 'नमःस्वस्ति–' इत्यादिना चतुर्थी । 'अलमिति पर्याप्त्यर्थग्रहणम्' इति भगवान्भाष्यकारः । [ यद्वा ] कथं कल्पेत संपद्येत । न कल्पेतेत्यर्थः । 'क्लृपि संपद्यमाने च' इति चतुर्थी ॥

'तवार्हतः–' ( ५ । ११ ) इत्यादिनोक्तं यत्तन्न चित्रमित्याह—

**भक्तिः प्रतीक्ष्येषु कुलोचिता ते पूर्वान्महाभाग तयातिशेषे ।**
**व्यतीतकालस्त्वहमभ्युपेतस्त्वामर्थिभावादिति मे विषादः ॥ १४ ॥**

**प्रतीक्ष्येषु** पूज्येषु । 'पूज्यः प्रतीक्ष्यः' इत्यमरः । **भक्तिः** अनुरागविशेषः **ते** तव **कुलोचिता** कुलाभ्यस्ता । 'अभ्यस्तेऽप्युचितं न्याय्यम्' इति यादवः । हे **महाभाग** सार्वभौम **तया** भक्त्या **पूर्वान् अतिशेषे** अतिवर्तसे । [ तु ] किंतु सर्वत्र वार्ते चेत्तर्हि कथं खेदखिन्न इव दृश्यसेऽत आह–व्यतीतेति । **अहं व्यतीतकालः** अतिक्रान्तकालः सन् **अर्थिभावात् त्वाम् अभ्युपेतः इति मे** मम **विषादः** ॥

**शरीरमात्रेण नरेन्द्र तिष्ठन्नाभासि तीर्थप्रतिपादितर्द्धिः ।**
**आरण्यकोपात्तफलप्रसूतिः स्तम्बेन नीवार इवावशिष्टः ॥ १५ ॥**

हे **नरेन्द्र** [ **तीर्थप्रतिपादितर्द्धिः** ] तीर्थे सत्पात्रे प्रतिपादिता दत्ता ऋद्धिर्येन स तथोक्तः । 'योनौ जलावतारे च मन्त्र्याद्यष्टादशस्वपि । पुण्यक्षेत्रे तथा पात्रे तीर्थं स्याद्दर्शनेष्वपि ॥' इति हलायुधः । **शरीरमात्रेण तिष्ठन्** । आरण्यका अरण्ये भवा मनुष्या मुनिप्रमुखाः । 'अरण्यान्मनुष्ये' इति वुञ्प्रत्ययः । तैरुपात्ता फलमेव प्रसूतिर्यस्य स [ **आरण्यकोपात्तफलप्रसूतिः** ] **स्तम्बेन** काण्डेन **अवशिष्टः** । प्रकृत्यादित्वात्तृतीया । **नीवार इव** । **आभासि** शोभसे ॥

**स्थाने भवानेकनराधिपः सन्नकिंचनत्वं मखजं व्यनक्ति ।**
**पर्यायपीतस्य सुरैर्हिमांशोः कलाक्षयः श्लाघ्यतरो हि वृद्धेः ॥ १६ ॥**

**भवानेकनराधिपः** सार्वभौमः **सन्** । **मखजं** मखजन्यम् । न विद्यते किंचन यस्येत्यकिंचनः । मयूरव्यंसकादित्वात्तत्पुरुषः । तस्य भावस्तत्त्वं [ **आकिंचनत्वं** ] निर्धनत्वं **व्यनक्ति** प्रकटयति । **स्थाने** युक्तम् । 'युक्ते द्वे सांप्रतं स्थाने' इत्यमरः । तथाहि । **सुरैः**

१ एतत्प्राचांमतेन । अत्र द्वितीयार्धगतेन वाक्यार्थेन प्रथमार्धगतार्थस्य समर्थनादर्थान्तरन्यासालंकारः । तदुक्तं दण्डिना–ज्ञेयः सोऽर्थान्तरन्यासो वस्तु प्रस्तुत्य किंचन । तत्साधनसमर्थस्य न्यासो योन्यस्य वस्तुनः ॥ इति । इअनुरूपः श्लोकः शाकुन्तले–कुतो धर्मक्रियाविघ्नः सतां रक्षितरि त्वयि । तमस्तपति, घर्मांशौ कथमाविर्भविष्यति ॥ इति । २ दिनकरस्तु 'महाभागतया' इत्येकं पदं पठित्वा महाभागस्य भावो महाभागता तया उत्कृष्टभाग्यत्वेन इति व्याचष्टे ।

देवैः पर्यायेण क्रमेण पीतस्य [ **पर्यायपीतस्य** ] **हिमांशोः कलाक्षयः वृद्धेः** उपचयात् **श्लाघ्यतरः हि** वरः खलु । 'मणिः शाणोल्लीढः समरविजयी हेतिनिहतो मदक्षीणो नागः शरदि सरितः श्यानपुलिनाः । कलाशेषश्चन्द्रः सुरतमृदिता बालवनिता तनिम्ना शोभन्ते गलितविभवाश्चार्थिषु नृपाः ॥' इति भावः । अत्र कामन्दकः—'धर्मार्थे क्षीणकोषस्य क्षीणत्वमपि शोभते । सुरैः पीतावशेषस्य कृष्णपक्षे विधोरिव ॥' इति ॥

**तदन्यतस्तावदनन्यकार्यो गुर्वर्थमाहर्तुमहं यतिष्ये ।**
**स्वस्त्यस्तु ते निर्गलिताम्बुगर्भं शरद्घनं नार्दति चातकोऽपि ॥ १७ ॥**

**तद्** तस्मात् **तावदनन्यकार्यः** । 'यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे' इति विश्वः । प्रयोजनान्तररहितः **अहं अन्यतः** वदान्यान्तराद् **गुर्वर्थं** गुरुधनं **आहर्तुम्** अर्जयितुं **यतिष्ये** उद्योक्ष्ये । **ते** तुभ्यं **स्वस्ति** शुभं **अस्तु** । 'नमःस्वस्ति–' इत्यादिना चतुर्थी । तथाहि । **चातकोऽपि** । 'धरणीपतितं तोयं चातकानां रुजाकरम्' इति हेतोरनन्यगतिकोऽपीत्यर्थः । निर्गलितोऽम्ब्वेव गर्भो यस्य तं [ **निर्गलिताम्बुगर्भं** ] **शरद्घनं न अर्दति** न याचते । 'अर्द गतौ याचने च' इति धातुः । 'याचनार्थे रणेऽर्दनम्' इति यादवः ॥

---

१ 'चन्द्रमा वा अमावास्यायामादित्यमनुप्रविशति । सोन्तर्धीयते । तं निर्जानन्ति ॥' इति ऐतरेयब्राह्मणम् । चन्द्रस्य किल षोडश कलाः । तासां पञ्चदश कलाः कृष्णपक्षे देवैः पर्यायेण पीयन्ते । एवं निपीत एकया कलयावशिष्टश्चन्द्रोमावास्यायां सूर्यं प्रविशति । स च तं शुक्लपक्षे कलाभिर्वर्धयते । इति पौराणिका मन्यन्ते । तथा च देवीपुराणे-'कलाः षोडश सोमस्य शुक्ले वर्धयते रविः । अमृतेनामृतं कृष्णे पीयते दैवतैः क्रमात् ॥ प्रथमां पिबते वह्निर्द्वितीयां पवनः कलाम् । विश्वे देवास्तृतीयां तु चतुर्थीं तु प्रजापतिः । पञ्चमीं वरुणश्चापि षष्ठीं पिबति वासवः । सप्तमीमृषयो दिव्या वसवोऽष्टौ तथाष्टमीम् । नवमीं कृष्णपक्षस्य पिबतीन्द्रः कलामपि । दशमीं मरुतश्चापि रुद्रा एकादशीं कलाम् । द्वादशीं तु कलां विष्णुर्धनदश्च त्रयोदशीम् । चतुर्दशीं पशुपतिः कलां पिबति नित्यशः । ततः पञ्चदशीं चैव पिबन्ति पितरः कलाम् । कलावशिष्टो निष्पीतः प्रविष्टः सूर्यमण्डलम् । अमायां विशते रश्मावमावाशी ततः स्मृतः ॥' मतान्तरे यथा-प्रथमां पिबते वह्निर्द्वितीयां पिबते रविः । विश्वे देवास्तृतीयां तु चतुर्थीं सलिलाधिपः । पञ्चमीं तु वषट्कारः षष्ठीं पिबति वासवः । सप्तमीमृषयो दिव्या अष्टमीमज एकपात् । नवमीं कृष्णपक्षस्य यमः प्राश्नाति वै कलाम् । दशमीं पिबते वायुः पिबत्येकादशीमुमा । द्वादशीं पितरः सर्वे समं प्राश्नन्ति भागशः । त्रयोदशीं धनाध्यक्षः कुबेरः पिबते कलाम् । चतुर्दशीं पशुपतिः पञ्चदशीं प्रजापतिः । निष्पीतः कलावशेषश्चन्द्रमा न प्रकाशते । कला षोडशिका या तु अपः प्रविशते सदा । अमायां तु सदा सोम ओषधीं प्रतिपद्यते । तमोषधिगतं गावः पिबन्त्यम्बुगतं च यत् । तत्क्षीरममृतं भूत्वा मन्त्रपूतं द्विजातिभिः । हुतमग्निषु यज्ञेषु पुनराप्याय्यते शशी । दिने दिने कलावृद्धिः पौर्णमास्यां तु पूर्णता ॥ इति माधवीये कालनिर्णये । २ 'शुक्लप्रतिपदि सर्वे क्षीणमपि चन्द्रं नमस्कुर्वन्ति ।' यदुक्तं किराते–'प्रणमन्त्यनपायमुत्थितं प्रतिपच्चन्द्रमिव प्रजा नृपम्' । इ. सु. । एवं वृद्धचाणक्योपि–गुणाः सर्वत्र पूज्यन्ते न महत्योपि सम्पदः । पूर्णेन्दुः किं तथा वन्द्यो निष्कलङ्को यथा कृशः ॥ इति ॥ ३ 'अपिशब्दश्चातकस्य जलदैकशरणत्वसूचनार्थः' इति चा. हे० । 'किं पुनर्विद्यमानोपायोहं त्वामित्यर्थः' इ. हे० । उक्तं च–पयोद हे वारि ददासि वा न वा त्वदेकचित्तः पुनरेष चातकः । वरं महत्या म्रियते पिपासया तथापि नान्यस्य करोत्युपासनाम् ॥ इति । अर्थान्तरन्यासोलङ्कारः ।

**एतावदुक्त्वा प्रतियातुकामं शिष्यं महर्षेर्नृपतिर्निषिध्य ।**
**किं वस्तु विद्वन्गुरवे प्रदेयं त्वया कियद्वेति तमन्वयुङ्क्त ॥ १८ ॥**

**एतावद्** वाक्यम् **उक्त्वा** प्रतियातुं कामो यस्य तं **प्रतियातुकामं** गन्तुकामम् । 'तुम्काममनसोरपि' इति मकारलोपः । **महर्षेः** वरतन्तोः **शिष्यं** कौत्सं **नृपतिः** रघुः **निषिध्य** निवार्य । हे **विद्वन् त्वया गुरवे प्रदेयं वस्तु किं कियत्** किंपरिमाणं**वा** । **इति** एवं **तं** कौत्सम् **अन्वयुङ्क्त** अपृच्छत् । 'प्रश्नोऽनुयोगः पृच्छा च' इत्यमरः ॥

**ततो यथावद्विहिताध्वराय तस्मै स्मयावेशविवर्जिताय ।**
**वर्णाश्रमाणां गुरवे स वर्णी विचक्षणः प्रस्तुतमाचचक्षे ॥ १९ ॥**

**ततो यथावद्** यथार्हम् । अर्हार्थे वतिः । **विहिताध्वराय** विधिवदनुष्ठितयज्ञाय । सदाचारायेत्यर्थः । **स्मयावेशविवर्जिताय** गर्वाभिनिवेशशून्याय । अनुद्धतायेत्यर्थः । वर्णानां ब्राह्मणादीनामाश्रमाणां ब्रह्मचर्यादीनां च [ **वर्णाश्रमाणां** ] **गुरवे** नियामकाय । 'वर्णाः स्युर्ब्राह्मणादयः' इति 'ब्रह्मचारी गृही वानप्रस्थो भिक्षुश्चतुष्टये । आश्रमोऽस्त्री' इति चामरः । सर्वकार्यनिर्वाहकायेत्यर्थः । **तस्मै** रघवे **विचक्षणः** विद्वान् **वर्णी** ब्रह्मचारी । 'वर्णिनो ब्रह्मचारिणः' इत्यमरः । 'वर्णाद्ब्रह्मचारिणि' इतीनिप्रत्ययः । **स** कौत्सः **प्रस्तुतं** प्रकृतम् **आचचक्षे** ॥

**समाप्तविद्येन मया महर्षिर्विज्ञापितोऽभूद् गुरुदक्षिणायै ।**
**स मे चिरायास्खलितोपचारां तां भक्तिमेवागणयत्पुरस्तात् ॥ २० ॥**

**समाप्तविद्येन मया महर्षिर्गुरुदक्षिणायै** गुरुदक्षिणास्वीकारार्थं **विज्ञापितोऽभूत्** । **स** च गुरुः **चिरायास्खलितोपचारां तां** दुष्करां **मे भक्तिमेव पुरस्तात्** प्रथमं **अगणयत्** संख्यातवान् । भक्त्यैव संतुष्टः किं दक्षिणयेत्युक्तवानित्यर्थः । अथवा भक्तिमेव तां दक्षिणामगणयदिति योज्यम् ॥

**निर्बन्धसंजातरुषार्थकार्श्यमचिन्तयित्वा गुरुणाहमुक्तः ।**
**वित्तस्य विद्यापरिसंख्यया मे कोटीश्चतस्रो दश चाहरेति ॥ २१ ॥**

निर्बन्धेन प्रार्थनातिशयेन संजातरुषा संजातक्रोधेन [ **निर्बन्धसंजातरुषा** ] **गुरुणा** । **अर्थकार्श्यं** दारिद्र्यम् **अचिन्तयित्वा** अविचार्य **अहम्** । **वित्तस्य** धनस्य **चतस्रो**

---

१ 'अनुपसर्गेण सहितो युजिः पृच्छार्थः' हे० चा० । २ स्मयस्यावेशस्तेन विवर्जिताय । गुरवे–क्रियाग्रहणमपि कर्तव्यमिति क्रियाग्रहणाच्चतुर्थी । तत्तद्धर्मप्रतिष्ठापकत्वाद्राजा वर्णाश्रमगुरुः रक्षणाच्च । तदुक्तं मनुना–'स्वे स्वे धर्मे निविष्टानां सर्वेषामनुपूर्वशः । वर्णानामाश्रमाणां च राजा सृष्टोभिरक्षिता॥' इति । वर्णी–'वर्णः प्रशस्तिः' इति क्षीरस्वामी । विशेषस्तु किरा० टीकाया प्र०स०प०श्लो० व्याख्याने मल्लिनाथेनोक्तो द्रष्टव्यः । यद्वा तपोविद्याजन्या प्रशस्तिः । वर्णोऽस्यास्तीति वर्णी । ३ 'अवाप्तविद्येन' इ. दि० पठति । ४ 'पादप्रक्षालनादिरुपचारः परिचर्या यस्यां सा तां तथोक्ताम् ।' हे० चा० । शुश्रूषाशून्यायोपदेशो न वक्तव्यः । यथा मनुः–धर्मार्थौ यत्र न स्यातां शुश्रूषा वापि तद्विधा । तत्र विद्या न वक्तव्या शुद्धं बीजमिवोषरे ॥ भगवद्गीतासु च–'इदं ते नातपस्काय नाभक्ताय कदाचन । न चाशुश्रूषवे वाच्यम्' इति । 'यथा खात्वा खनित्रेण भूतले वारि विन्दति । तथा गुरुगतां विद्यां शुश्रूषुरधिगच्छति' ॥ इ. वृद्धचाणक्ये ।

**दश च कोटीः** चतुर्दशकोटीः **मे** मह्यम् **आहर** आनय **इति विद्यापरिसंख्यया** विद्यापरिसंख्यानुसारेणैव **उक्तः** । अत्र मनुः—'अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः । पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ॥' इति ॥

**सोऽहं सपर्याविधिभाजनेन मत्वा भवन्तं प्रभुशब्दशेषम् ।**
**अभ्युत्सहे संप्रति नोपरोद्धुमल्पेतरत्वाच्छ्रुतनिष्क्रयस्य ॥ २२ ॥**

**सोऽहं सपर्याविधिभाजनेन** अर्घ्यपात्रेण **भवन्तं** प्रभुशब्द एव शेषो यस्य तं [**प्रभुशब्दशेषं**] **मत्वा** । निःस्वं निश्चित्येत्यर्थः । **श्रुतनिष्क्रयस्य** विद्यामूल्यस्य **अल्पेतरत्वाद्** अतिमहत्त्वात् **संप्रति उपरोद्धुं** निर्बद्धुं **नाभ्युत्सहे** ॥

**इत्थं द्विजेन द्विजराजकान्तिरावेदितो वेदविदां वरेण ।**
**एनोनिवृत्तेन्द्रियवृत्तिरेनं जगाद भूयो जगदेकनाथः ॥ २३ ॥**

**द्विजराजकान्तिः** चन्द्रकान्तिः । 'द्विजराजः शशधरो नक्षत्रेशः क्षपाकरः ।' इत्यमरः । 'तस्मात्सोमो राजा नो ब्राह्मणानाम्' इति श्रुतेः । द्विजराजकान्तित्वेनार्थावाप्तिवैराग्यं वारयति । एनसः पापान्निवृत्ता इन्द्रियवृत्तिर्यस्य स [**एनोनिवृत्तेन्द्रियवृत्तिः**] **जगदेकनाथः** रघुः **वेदविदां वरेण** श्रेष्ठेन **द्विजेन** कौत्सेन **इत्थमावेदित** निवेदितः सन् । **एनं** कौत्सं **भूयः** पुनः **जगाद** ॥

**गुर्वर्थमर्थी श्रुतपारदृश्वा रघोः सकाशादनवाप्य कामम् ।**
**गतो वदान्यान्तरमित्ययं मे मा भूत्परीवादनवावतारः ॥ २४ ॥**

श्रुतस्य पारं दृष्टवान् **श्रुतपारदृश्वा** । 'दृशेः क्वनिप्' इति क्वनिप् । **गुर्वर्थं** गुरुदक्षिणार्थं यथा तथा **अर्थी** याचकः । विशेषणद्वयेनाप्यस्याप्रत्याख्येयत्वमाह । **रघोः सकाशात्कामं** मनोरथम् **अनवाप्य** अप्राप्य **वदान्यान्तरं** दात्रन्तरं **गतः** । 'स्युर्वदान्यस्थूललक्ष्यदानशौण्डा बहुप्रदे ।' इत्यमरः । **इति** एवंरूपः **अयं** परीवादस्य नवो नूतनः प्रथमोवतार आविर्भावः [**परीवादनवावतारः**] **मे मा भूत्** मास्तु । रघोरिति स्वनामग्रहणं संभावितद्योतनार्थम् । तथा च-'संभावितस्य चाकीर्तिर्मरणादतिरिच्यते।' इति भावः॥

**स त्वं प्रशस्ते महिते मदीये वसंश्चतुर्थोऽग्निरिवाग्न्यगारे ।**
**द्वित्राण्यहान्यर्हसि सोढुमर्हन्यावद्यते साधयितुं त्वदर्थम् ॥ २५ ॥**

**स त्वं महिते** पूजिते **प्रशस्ते** प्रसिद्धे **मदीये अग्न्यगारे** त्रेताग्निशालायां **चतुर्थः अग्निरिव वसन्द्वित्राणि** द्वे त्रीणि वा **अहानि** दिनानि । 'संख्ययाव्ययासन्नादूराधि-

---

१ अनेन धार्मिकत्वमुक्तम् । अनुप्रासालङ्कारः । २ यतो रघवो यथाकामार्चितार्थिनः । तदुक्तं प्रथमसर्गे 'यथाकामार्चितार्थिनाम् ।' एकादशेपि 'अभ्यसुप्रणयिनां रघोः कुले न व्यहन्यत कदाचिदर्थिता' इति । 'अवतारावतरयोर्दीर्घह्रस्वव्यत्यासो बालिशानामिति वामनः इ. हे० । रघोः इ०–निःस्वेभ्यो दानं विद्यानुरूपामिति मनूक्त्या अप्रत्याक्षेपप्रीतिनिन्दाप्रतिषेधाद्रघोरात्मस्तुतिनिर्दोषः । तदाह–'गुरोरर्थमर्थयत' इति हे० । अनवाप्य कामम्–अनवाप्तकामः इ. पाठः । ३ मनोहरे इति चा० । महिते–'महितः' इ. पा०. ४ पिता वै गार्हपत्योऽग्निर्माताग्निर्दक्षिणः स्मृतः । गुरुराहवनीयस्तु साग्नित्रेता गरीयसी ॥ इति मनुः ।

-कसंख्याः संख्येये ' इति बहुव्रीहिः । ' बहुव्रीहौ संख्येये डजबहुगणात् ' इति डच्प्रत्ययः समासान्तः । **सोढुमर्हसि** । हे अर्हन् मान्ये **त्वदर्थं** तव प्रयोजनं **साधयितुं यावद्यते** यतिष्ये । ' यावत्पुरानिपातयोर्लट् ' इति भविष्यदर्थे लट् ॥

**तथेति तस्यावितथं प्रतीतः प्रत्यग्रहीत्सङ्गरमग्रजन्मा ।**
**गामात्तसारां रघुरप्यवेक्ष्य निष्क्रष्टुमर्थं चकमे कुबेरात् ॥ २६ ॥**

**अग्रजन्मा** ब्राह्मणः **प्रतीतः** प्रीतः सन् **तस्य** रघोः **अवितथम्** अमोघं **सङ्गरं** प्रतिज्ञाम् । ' अथ प्रतिज्ञाजिसंविदापत्सु सङ्गरः । ' इत्यमरः । ' तां गिरम् ' इति केचित्पठन्ति । **तथेति प्रत्यग्रहीत्** । **रघुरपि गां** भूमिम् **आत्तसारां** गृहीतधनाम् **अवेक्ष्य कुबेरादर्थं निष्क्रष्टुम्** आहर्तुं **चकमे** इयेष ॥

**वसिष्ठमन्त्रोक्षणजात्प्रभावादुदन्वदाकाशमहीधरेषु ।**
**मरुत्सखस्येव बलाहकस्य गतिर्विजघ्ने न हि तद्रथस्य ॥ २७ ॥**

वसिष्ठस्य यन्मन्त्रेणोक्षणमभिमन्त्र्य प्रोक्षणं तज्जात [ **वसिष्ठमन्त्रोक्षणजात** ] **प्रभावात्** सामर्थ्याद्धेतोः । **उदन्वदाकाशमहीधरेषु** उदन्वत्युदधावाकाशे महीधरेषु वा । **मरुत्सखस्य** । मरुतः सखेति तत्पुरुषो बहुव्रीहौ समासान्ताभावात् । ततो वायुसहायस्येति लभ्यते । वारीणां वाहको बलाहकः । पृषोदरादित्वात्साधुः । तस्य [ **बलाहकस्य** ] **इव** मेघस्येव । **तद्रथस्य गतिः** संचारः **न विजघ्ने** न विहता **हि** ॥

**अथाधिशिश्ये प्रयतः प्रदोषे रथं रघुः कल्पितशस्त्रगर्भम् ।**
**सामन्तसंभावनयैव धीरः कैलासनाथं तरसा जिगीषुः ॥ २८ ॥**

**अथ प्रदोषे** रजनीमुखे । तत्काले यानाधिरोहणविधानात् । **प्रयतः धीरः रघुः** समन्ताद्भवः सामन्तः राजमात्रमिति संभावनया [ **सामन्तसंभावनया** ] **एव कैलासनाथं** कुबेरं **तरसा** बलेन **जिगीषुः** जेतुमिच्छुः सन् । कल्पितं सज्जितं शस्त्रं गर्भे यस्य तं [ **कल्पितशस्त्रगर्भम्** ] **रथमधिशिश्ये** । रथे शयितवानित्यर्थः । 'अधिशीङ्स्थासां कर्म ' इति कर्मत्वम् ॥

**प्रातः प्रयाणाभिमुखाय तस्मै सविस्मयाः कोषगृहे नियुक्ताः ।**
**हिरण्मयीं कोषगृहस्य मध्ये वृष्टिं शशंसुः पतितां नभस्तः ॥ २९ ॥**

---

१ ' अर्हतो जिनसन्मान्यौ ' इति यादवः । २ ' अवितथप्रयत्नः ' इति पा० । ३ अग्रजन्मा —अग्रे जन्म यस्य । वर्णेषु मध्ये अग्रजातत्वात् । अग्रात्प्रधानाङ्गान्मुखाज्जातत्वात् । ' ब्राह्मणोस्य मुखमासीत्' इति 'यो ब्रह्माणं विदधाति पूर्वं यश्चास्मै प्रहिणोति वेदम्' इति च श्रुतिः । तथा च ताण्ड्यमहाब्राह्मणे—'सोऽकामयत यज्ञं सृजेयेति स मुखत एव त्रिवृतमसृजत + + + + तस्मात्त्रिवृत्स्तोमानां मुखं......ब्राह्मणो मनुष्याणां...तस्माद् ब्राह्मणो मुखेन वीर्यं करोति मुखतो हि सृष्टः । ' इति । ४ अत्र रघोः कार्ये चित्तस्यानाकुलत्वमुक्तम् । उक्तं च माघकविना—आरभन्तेल्पमेवाज्ञाः कामं व्यग्रा भवन्ति च । महारम्भाः कृतधियस्तिष्ठन्ति च निराकुलाः ॥ इति । ५ बलाहकेन गत्यर्थं वायोरपेक्षितत्वान्मरुत्सखा यस्येति अभिमतः समासः । एवं सति ' राजाहःसखिभ्यष्टच् ' इति टच्प्रत्ययो न स्यात् तस्य तत्पुरुषेऽभिधानात् । अतश्चिन्त्यमेतत् इति चा० हे० दि० । ६ ' कतिपयग्रामपतिः सामन्तः ' हे० ।

**प्रातः प्रयाणाभिमुखाय तस्मै** रघवे **कोषगृहे नियुक्ताः** अधिकृता भाण्डागारिकाः **सविस्मयाः** सन्तः **कोषगृहस्य मध्ये नभस्तः** नभसः । पञ्चम्यास्तसिल्प्रत्ययः । **पतितां हिरण्मयीं** सुवर्णमयीम् । 'दाण्डिनायन–' इत्यादिना निपातनात्साधुः । **वृष्टिं शशंसुः** कथयामासुः ॥

**तं भूपतिर्भासुरहेमराशिं लब्धं कुबेरादभियास्यमानात् ।**
**दिदेश कौत्साय समस्तमेव पादं सुमेरोरिव वज्रभिन्नम् ॥ ३० ॥**

**भूपतिः** रघुः । **अभियास्यमानाद्** अभिगमिष्यमाणात् **कुबेराल्लब्धम्** । वज्रेण कुलिशेन भिन्नं [ **वज्रभिन्नम्** ] **सुमेरोः पादं** प्रत्यन्तपर्वतम् **इव** स्थितम् । 'पादाः प्रत्यन्तपर्वताः' इत्यमरः । 'शृङ्गं सुमेरोः' इति क्वचित्पाठः । **तं** भासुरं भास्वरम् । 'भञ्जभासमिदो घुरच्' । हेमराशिं [ **भासुरहेमराशिम्** ] **समस्तं** कृत्स्नम् **एव कौत्साय दिदेश** ददौ । न तु चतुर्दशकोटिमात्रमित्येवकारार्थः ॥

**जनस्य साकेतनिवासिनस्तौ द्वावप्यभूतामभिनन्द्यसत्त्वौ ।**
**गुरुप्रदेयाधिकनिःस्पृहोऽर्थी नृपोऽर्थिकामादधिकप्रदश्च ॥ ३१ ॥**

**तौ** अर्थिदातारौ **द्वावपि साकेतनिवासिनः** अयोध्यावासिनः । 'साकेतः स्यादयोध्यायां कोसला नन्दिनी च सा ।' इति यादवः । **जनस्याभिनन्द्यसत्त्वौ** स्तुत्यव्यवसायौ **अभूताम्** । 'द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु ।' इत्यमरः । कौ द्वौ । गुरुप्रदेयादधिकेऽतिरिक्तद्रव्ये निस्पृहः [ **गुरुप्रदेयाधिकनिःस्पृहः** ] **अर्थी** । **अर्थिकामाद्** अर्थिमनोरथाद् [ **अधिकप्रदः** ] अधिकं प्रददातीति तथोक्तः । 'प्रे दाज्ञः' इति कप्रत्ययः । **नृपश्च** ॥

**अथोष्ट्रवामीशतवाहितार्थं प्रजेश्वरं प्रीतमना महर्षिः ।**
**स्पृशन्करेणानतपूर्वकायं संप्रस्थितो वाचमुवाच कौत्सः ॥ ३२ ॥**

**अथ प्रीतमना महर्षिः कौत्सः संप्रस्थितः** प्रस्थास्यमानः सन् । 'आशंसायां भूतवच्च' इति भविष्यदर्थे क्तः । उष्ट्राणां क्रमेलकानां वामीनां वडवानां च शतैर्वाहितार्थं प्रापितधनम् [ **उष्ट्रवामीशतवाहितार्थं** ] **आनतपूर्वकायम्** । विनयनम्रमित्यर्थः । **प्रजेश्वरं** रघुः **करेण स्पृशन्वाचमुवाच** ।

**किमत्र चित्रं यदि कामसूर्भूर्वृत्ते स्थितस्याधिपतेः प्रजानाम् ।**
**अचिन्तनीयस्तु तव प्रभावो मनीषितं द्यौरपि येन दुग्धा ॥ ३३ ॥**

---

१ कौत्साय–कौत्सस्य, पादम्–शृङ्गं, शैलम् इ. पा० । २ वाचमुवाच–अत्र हेमाद्रिः–विशेषणं विना वाक्शब्दप्रयोगाश्चिन्त्यः । यद्वामनः–विशेष्यस्य च विशेषणप्रतिपत्त्यर्थमुक्तार्थस्य प्रयोगः । यद्वा काव्येषु संक्षेपानादरः । तथा काव्यादर्शे–अलंकृतमसंक्षिप्तं–काव्यमिति वक्ष्यमाणेन सम्बन्धः । काशिकावृत्तौ च-समुच्चये सामान्यवचनस्येत्यत्र लौकिकशब्दव्यवहारे लाघवं नाद्रियते इति । 'येनाङ्गविकारः' इत्यत्र पाणिनीयमतदर्पणे च-अक्षादिशब्देन विनापि देहः स्यादेव काणादिगुणप्रतीतेः । तथापि लोके गुरुलाघवं प्रत्यनादरात् शब्दमपि प्रयुङ्क्ते ॥ इति । चारित्रवर्धनोपि-' शुचिस्मितां वाचमवोचदच्युतः ' इत्यादौ यथा शुचिस्मितामिति विशेषणं तथात्र वाचोविशेषणायोगात् ' वाचमुवाच ' इति चिन्त्यम् ।

**वृत्ते स्थितस्य**। 'न्यायेनार्जनमर्थस्य वर्धनं पालनं तथा। सत्पात्रे प्रतिपत्तिश्च राजवृत्तं चतुर्विधम् ॥' इति कामन्दकः। तस्मिन्वृत्ते स्थितस्य **प्रजानामधिपतेः** नृपस्य **भूः** कामान्सूत इति **कामसूः यदि**। 'सत्सूद्विषद्रुह–' इत्यादिना क्विप्। **अत्र** कामप्रसवने **किं चित्रम्**। न चित्रमित्यर्थः। किंतु **तव प्रभावः** महिमा **तु अचिन्तनीयः**। **येन** त्वया **द्यौरपि मनीषितम्** अभिलषितं **दुग्धा**। दुहेर्द्विकर्मकत्वादप्रधाने कर्मणि क्तः। 'प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्। अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मणः ॥' इति स्मरणात् ॥

**आशास्यमन्यत्पुनरुक्तभूतं श्रेयांसि सर्वाण्यधिजग्मुषस्ते।**
**पुत्रं लभस्वात्मगुणानुरूपं भवन्तमीड्यं भवतः पितेव ॥ ३४ ॥**

**सर्वाणि श्रेयांसि** शुभानि **अधिजग्मुषः** प्राप्तवतः **ते** तव **अन्यत्** पुत्रातिरिक्तम् **आशास्यम्** आशीःसाध्यमाशंसनीयं वा **पुनरुक्तभूतं** सर्वं सिद्धमित्यर्थः। किंतु **ईड्यं** स्तुत्यं **भवन्तं भवतः पिता इव आत्मगुणानुरूपम्**। त्वया तुल्यगुणमित्यर्थः। **पुत्रं लभस्व** प्राप्नुहि ॥

**इत्थं प्रयुज्याशिषमग्रजन्मा राज्ञे प्रतीयाय गुरोः सकाशम्।**
**राजापि लेभे सुतमाशु तस्मादालोकमर्कादिव जीवलोकः ॥ ३५ ॥**

**अग्रजन्मा** ब्राह्मणः। 'अग्रजन्मा द्विजे श्रेष्ठे भ्रातरि ब्रह्मणि स्मृतः।' इति विश्वः। **इत्थं राज्ञे आशिषं प्रयुज्य** दत्वा **गुरोः सकाशं** समीपं **प्रतीयाय** प्राप। **राजा अपि**। **जीवलोकः** जीवसमूहः। 'जीवः प्राणिनि गीष्पतौ' इति विश्वः। **अर्कादालोकं** प्रकाशम् **इव**। 'चैतन्यम्' इति पाठे ज्ञानम्। **तस्माद्** ऋषेः **आशु सुतं लेभे** प्राप ॥

**ब्राह्मे मुहूर्ते किल तस्य देवी कुमारकल्पं सुषुवे कुमारम्।**
**अतः पिता ब्रह्मण एव नाम्ना तमात्मजन्मानमजं चकार ॥ ३६ ॥**

**तस्य** रघोः **देवी** महिषी **ब्राह्मे**। 'तस्येदम्' इत्यण्। ब्रह्मदेवताकेऽभिजिन्ना-

---

१ यद्वा 'गुरोः पूजा घृणाशौचं सत्यमिन्द्रियनिग्रहः। प्रवर्तनं हितानां च तत्सर्वं वृत्तमुच्यते ॥' इ. हे०। २ ईड्यः' इ. पा. ३ पुनरुक्तमिव। इवार्थे भूतशब्दः 'मातृभूतः' 'पितृभूतः' इत्यत्र भूतशब्दस्येवोपमानार्थत्वमिति कैयटकारेण प्रत्यपादि। इति चा०। पुत्रमिति–एवं प्र० स० 'अविघ्नमस्तु'–इ. (श्लो. ९१); शाकुन्तलेपि–'पुत्रमेवंगुणोपेतं चक्रवर्तिनमाप्नुहि' इति। आत्मगुणानुरूपम्–अत्र हेमाद्रिव्याख्या यथा–'आत्मशब्देन राजा विवक्षितः अन्तरात्मा वा। श्रुतशौर्यादयो ह्यात्मगुणाः' इति। 'अनुरूपम्' इति 'अव्ययं विभक्ति–' इत्यादिना अव्ययीभावे क्लीबता स्यात्। अथ 'कुगतिप्रादयः' इति अनुगतो रूपमित्यनुरूप इति तत्पुरुषे कृतेपि 'परवल्लिङ्गं द्वंद्वतत्पुरुषयोः' इति स एव दोष इति चेन्न। 'द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु निषेधो वक्तव्यः' इति परवल्लिङ्गतानिषेधात् निष्कौशाम्बिरिव पुल्लिंगता भवति। तथाहि कुमारसंभवे–'आत्मानुरूपां विधिनोपयेमे।' मेघदूते च 'मार्गं तावच्छृणु कथयतस्त्वत्प्रयाणानुरूपम्'। इति। ४ आशिषः प्रयोगात् न तु मुनेः, ग्राम्योक्तिप्रसङ्गात्। हे०। केचन तस्माद्द्विजादिति व्याचक्षते तन्न ग्राम्यत्वात्। चा०। ५ अग्य-ग्र-जन्मा. ६ पट्टराज्ञी प्रभावती इ. हे०। ७ ब्राह्मे मुहूर्ते–'रात्रेश्च पश्चिमे यामे मुहूर्तो ब्राह्म उच्यते।' इति पितामहोक्ते रात्रिशेषयामार्धस्थितं अरुणोदयकालात्प्राग्दण्डद्वयात्मके काले। 'शेषार्धप्रहरे ब्राह्मो मुहूर्तः' इति मदनपारिजातश्च। तत्रापि सूर्योदयात्प्रागर्धप्रहरे द्वौ मुहूर्तौ। तत्राद्यो ब्राह्मः, द्वितीयो रौद्रः, इति आह्निकतत्त्वम्। 'उत्तरघटिकात्रयं ब्राह्मो मुहूर्तः' इ. चा०। 'पश्चिमरात्रघटिकाद्वयम्' इति सु०। अस्मिन्मुहूर्ते

मके **मुहूर्ते किल** । ईषदसमाप्तं कुमारं **कुमारकल्पं** स्कन्दसदृशम् । 'ईषदसमाप्तौ' इत्यादिना कल्पप्प्रत्ययः । **कुमारं** पुत्रं **सुषुवे** । 'कुमारो बालके स्कन्दे' इति विश्वः । **अतः** ब्राह्ममुहूर्तोत्पन्नत्वात् **पिता** रघुः **ब्रह्मणः** विधेः **एव नाम्ना तमात्मजन्मानं** पुत्रम् **अजम्** अजनामकं **चकार** । 'अजो हरौ हरे कामे विधौ छागे रघोः सुते।' इति विश्वः ॥

**रूपं तदोजस्वि तदेव वीर्यं तदेव नैसर्गिकमुन्नतत्वम् ।**
**न कारणात्स्वाद्बिभिदे कुमारः प्रवर्तितो दीप इव प्रदीपात् ॥ ३७ ॥**

**ओजस्वि** तेजस्वि बलिष्ठं वा । 'ओजस्तेजसि धातूनामवष्टम्भप्रकाशयोः । ओजो बले च दीप्तौ च' इति विश्वः । **रूपं** वपुः । 'अथ रूपं नपुंसकम् । स्वभावाकृतिसौन्दर्यवपुषि श्लोकशब्दयोः ॥' इति विश्वः । **तद्** एव पैतृकमेव । **वीर्यं** शौर्यं **तदेव** । **नैसर्गिकं** स्वाभाविकम् **उन्नतत्वं तदेव** । तादृशमेवेत्यर्थः । **कुमारः** बालकः **प्रवर्तितः** उत्पादितः **दीपः प्रदीपात्** स्वोत्पादकदीपात् **इव** । **स्वात्** स्वकीयात् । 'पूर्वादिभ्यो नवभ्यो वा' इति स्माद्भावो वैकल्पिकः । **कारणात्** जनकात् **बिभिदे**[2] भिन्नः **न** अभूत् । सर्वात्मना तादृश एवाभूदित्यर्थः ॥

**उपात्तविद्यं विधिवद्गुरुभ्यस्तं यौवनोद्भेदविशेषकान्तम्**[3] **।**
**श्रीः साभिलाषापि**[4] **गुरोरनुज्ञां धीरेव कन्या पितुराचकाङ्क्ष ॥ ३८ ॥**

**गुरुभ्यः विधिवत्** यथाशास्त्रम् **उपात्तविद्यं** लब्धविद्यम् । यौवनस्योद्भेदादाविर्भावाद्धेतोर्विशेषेण कान्तं सौम्यं [ **यौवनोद्भेदविशेषकान्तं** ] **तम् अजं** प्रति **साभिलाषा अपि श्रीः धीरा** स्थिरोन्नतचित्ता । 'स्थिरा चित्तोन्नतिर्या तु तद्धैर्यमिति संज्ञितम् ।' इति भूपालः । **कन्या पितुः इव** । **गुरोः अनुज्ञाम् आचकाङ्क्ष** इयेष । यौवराज्याहोंऽभूदित्यर्थः । अनुज्ञाशब्दात्पितृपारतन्त्र्यमुपमासामर्थ्यात्पाणिग्रहणयोग्यता च ध्वन्यते ॥

---

जातस्य फलं कोष्ठीप्रदीपे--अतिसुललितकान्तिः संमतः सज्जनानां ननु भवति विनीतश्चारुकीर्तिः सुवेशः ॥ द्विजवरसुरभक्तो व्यक्तवाङ् मानवः स्यादभिजिति यदि सूतिर्भूपतिः स्वस्ववंशे ॥ इति । अत्र हेमाद्रिः—अष्टमो मुहूर्तो ब्राह्मः । ननु । "ब्राह्मे मुहूर्ते चोत्थाय चिन्तयेदात्मनो हितम् ।" इति रात्रेः पश्चिमयामे रूढिः । "पूर्वरात्रे महारात्रस्ततश्चापररात्रकः । ब्राह्मोऽप्येते क्रमाद्यामाः" इति यादवप्रकाशः । तत्र हि ब्रह्मणो देवस्याध्ययनप्रवृत्तिं निमित्तीकृत्य ब्रह्मशब्दः प्रयुक्तः । नाडिकाद्वयवाचिनो हि मुहूर्तस्य यामवाचकत्वे दोषः । स च मुहूर्तो ब्रह्मादिदेवतावाचकश्च न भवतीति तत्र । ते च मुहूर्ताः ज्योतिषरत्नमालायाम् । "रुद्राहिमित्रपितरो वसुवारिविश्वे वेधा विधिः शतमखः पुरुहूतवह्नी । नक्तंचरश्च वरुणार्यमयोनयश्च प्रोक्ता दिने दश च पञ्च तथा मुहूर्ताः" । "निशामुहूर्ता गिरिशाजपादाहिर्बुध्न्यपूषाश्वियमाग्नयश्च । विधातृचन्द्रादितिजीवविष्णुतिग्मद्युतिस्त्वाष्ट्रसमीरणाश्च ॥" इति । दैवज्ञवल्लभोपि–" ब्राह्मो मुहूर्ताभिजिदष्टमीयस्तस्मिन्नपाचं ककुभं विहाय । प्रशस्यते यानमशेषदिक्षु सर्वाणि कार्याणि च यान्ति सिद्धिम् ॥" यद्यपि दिवा निशि च ब्राह्ममुहूर्तसद्भावः तथाप्यत्र दिवैव प्राशस्त्यमिति मन्तव्यम् । 'नक्तं बुधो भौमशशांकमंदा गुर्वर्कशुक्रा दिनशक्तयः स्युः ।' इति श्रीपतिपद्धत्युक्तेः । प्रकाशकग्रहसूर्यस्य शुभग्रहगुरुशुक्रयोश्च दिवा बलीयस्त्वात् । बलिषु श्रेष्ठग्रहेषु महाभाग्यता स्यात् । नारदीयसंहितायां च । "मध्यंदिनगते भानौ मुहूर्तोऽभिजिदाह्वयः । नाशयत्यखिलान् दोषान् पिनाकी त्रिपुरं यथा ॥" इति । १ समर्थितमेतदष्टमसर्गे ५ श्लोके । ओजस्वीत्यादिविशेषणान्युभयत्र योज्यानि । २ कर्मकर्तरि प्रयोगः । ३ रम्यम् इ.पा. ४ गन्तुकामा—कामयाना, इ.पा. । ५ इति बहूक्त्या नानाविद्याप्तिः । हे० । ६ अत्र 'विनयोपग्रहान्–' इत्यादि कामन्दकवचनं तृ. स. ३५ श्लोकटीकायां टीकाकृतोद्धृतं द्रष्टव्यम् ।

**अथेश्वरेण क्रथकैशिकानां स्वयंवरार्थं स्वसुरिन्दुमत्याः ।**
**आप्तः कुमारानयनोत्सुकेन भोजेन दूतो रघवे विसृष्टः ॥ ३९ ॥**

**अथ स्वसुः** भगिन्याः **इन्दुमत्याः स्वयंवरार्थं** कुमारस्याजस्यानयन उत्सुकेन [ **कुमारानयनोत्सुकेन** ] **क्रथकैशिकानां** विदर्भदेशानाम् **ईश्वरेण** स्वामिना **भोजेन** राज्ञा **आप्तः** हितः **दूतः रघवे विसृष्टः** प्रेषितः । क्रियामात्रयोगेऽपि चतुर्थी ॥

**तं श्लाघ्यसंबन्धमसौ विचिन्त्य दारक्रियायोग्यदशं च पुत्रम् ।**
**प्रस्थापयामास ससैन्यमेनमृद्धां विदर्भाधिपराजधानीम् ॥ ४० ॥**

**असौ** रघुः **तं** भोजं **श्लाघ्यसंबन्धम्** अनूचानत्वादिगुणयोगात्स्पृहणीयसंबन्धं **विचिन्त्य** विचार्य **पुत्रं च दारक्रियायोग्यदशं** विवाहयोग्यवयसं विचिन्त्य **ससैन्यमेनं** पुत्रम् **ऋद्धां** समृद्धां विदर्भाधिपस्य भोजस्य राजधानीं पुरीं [ **विदर्भाधिपराजधानीम्** ] प्रति **प्रस्थापयामास** । धीयतेऽस्यामिति धानी । 'करणाधिकरणयोश्च' इत्यधिकरणे ल्युट्प्रत्ययः । राज्ञां धानीति विग्रहः ॥

**तस्योपकार्यारचितोपचारा वन्येतरा जानपदोपदाभिः ।**
**मार्गे निवासा मनुजेन्द्रसूनोर्बभूवुरुद्यानविहारकल्पाः ॥ ४१ ॥**

उपकार्यासु राजयोग्येषु पटभवनादिषु । 'सौधोऽस्त्री राजसदनमुपकार्योपकारिका' । इत्यमरवचनव्याख्याने क्षीरस्वामी—उपक्रियत उपकरोति वा पटमण्डपादि राजसदनमिति । रचिता उपचाराः शयनादयो येषु ते तथोक्ताः [ **उपकार्यारचितोपचाराः** ] । जानपदानां जनपदेभ्य आगतानामुपदाभिरुपायनैः [ **जानपदोपदाभिः** ] । वन्या वने भवा इतरे येषां ते **वन्येतराः** । अवन्या इत्यर्थः । 'न बहुव्रीहौ' इति सर्वनामसंज्ञानिषेधः । तत्पुरुषे सर्वनामसंज्ञा दुर्वारैव । **तस्य मनुजेन्द्रसूनोः** अजस्य **मार्गे निवासाः** वासनिकाः । उद्यानान्याक्रीडाः । 'पुमानाक्रीड उद्यानम्' इत्यमरः । तान्येव विहारा विहारस्थानानि तत्कल्पाः । तत्सदृशा इत्यर्थः । 'ईषदसमाप्तौ—' इति कल्पप्प्रत्ययः । [ **उद्यानविहारकल्पाः** ] **बभूवुः** ॥

**स नर्मदारोधसि सीकरार्द्रैर्मरुद्भिरानर्तितनक्तमाले ।**
**निवेशयामास विलङ्घिताध्वा क्लान्तं रजोधूसरकेतु सैन्यम् ॥ ४२ ॥**

**विलङ्घिताध्वा** अतिक्रान्तमार्गः **सः** अजः **सीकरार्द्रैः** । शीतलैरित्यर्थः । **मरुद्भिः** वातैः । आनर्तिताः कम्पिता नक्तमालाश्चिरबिल्वाख्यवृक्षभेदाः । 'चिरबिल्वो नक्तमालः करजश्च करञ्जके' इत्यमरः । यस्मिंस्तस्मिन् [ **आनर्तितनक्तमाले** ] । निवेशार्हे इत्यर्थः ।

---

१ 'क्रथकौशिकानाम्' इति पाठः । २ 'शीलवान्गुणसम्पन्नो राजपुत्रः कुमारः' इ. हे० ३ तदुक्तं वृद्धचाणक्ये—वरयेत्कुलजां प्राज्ञो विरूपामपि कन्यकाम् । रूपशीलां न नीचस्य विवाहः सदृशे कुले ॥ ४ 'कीर्णान्तराः' इ. पा० ५ 'सैन्यं श्रमोत्फेनवनायुजाश्वम्' इति दि० मु० ध० पठन्ति ।

नर्मदाया रोधसि रेवायास्तीरे [ **नर्मदारोधसि** ] **क्लान्तं** श्रान्तं रजोभिर्धूसराः केतवो ध्वजा यस्य तत् [ **रजोधूसरकेतु** ] **सैन्यं निवेशयामास** ॥

**अथोपरिष्टाद्भ्रमरैर्भ्रमद्भिः प्राक्सूचितान्तःसलिलप्रवेशः ।**
**निर्धौत[2]दानामलगण्डभित्तिर्वन्यः सरित्तो गज उन्ममज्ज ॥ ४३ ॥**

**अथ उपरिष्टाद्** ऊर्ध्वम् । 'उपर्युपरिष्टात्' इति निपातः । **भ्रमद्भिः** । मदलोभादिति भावः । **भ्रमरैः प्राक्** उन्मज्जनात्पूर्वं [ **सूचितान्तःसलिलप्रवेशः** ] सूचितो ज्ञापितोऽन्तःसलिले प्रवेशो यस्य स तथोक्तः । [ **निर्धौतदानामलगण्डभित्तिः** ] निर्धौतदाने क्षालितमदे अत एवामले गण्डभित्ती यस्य स तथोक्तः । 'दानं गजमदे त्यागे' इति शाश्वतः । प्रशस्तौ गण्डौ गण्डभित्ती । 'प्रशंसावचनैश्च' इति समासः । भित्तिशब्दः प्रशस्तवाची । तथा च गणरत्नमहोदधौ—'मतल्लिकोद्घमिश्राः स्युः प्रकाण्डमथ भित्तयः' इति । भित्तिः प्रदेशो वा । **वन्यः गजः सरित्तः** नर्मदायाः सकाशात् । पञ्चम्यास्तसिल्प्रत्ययः । **उन्ममज्ज** उत्थितः ।

**निःशेषविक्षालितधातुनापि वप्रक्रियामृक्षवतस्तटेषु ।**
**नीलोर्ध्वरेखाशबलेन शंसन्दन्तद्वयेनाश्मविकुण्ठितेन ॥ ४४ ॥**

कथंभूतो गजः । **निःशेषविक्षालितधातुनापि** धौतगैरिकादिनापि । नीलाभिरूर्ध्वाभी रेखाभिस्तटाभिघातजनिताभिः शबलेन कर्बुरेण [ **नीलोर्ध्वरेखाशबलेन** ]। 'चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे ।' इत्यमरः । अश्मभिः पाषाणैर्विकुण्ठितेन कुण्ठीकृतेन [ **अश्मविकुण्ठितेन** ] **दन्तद्वयेन** । ऋक्षवान्नाम कश्चित्तत्रत्यः पर्वतः । तस्य [ **ऋक्षवतः** ] **तटेषु वप्रक्रियां** वप्रक्रीडाम् । उत्खातकेलिमित्यर्थः ।'उत्खातकेलिः शृङ्गाद्यैर्वप्रक्रीडा निगद्यते ।' इति शब्दार्णवः । **शंसन्** कथयन् । सूचयन्नित्यर्थः । युग्मम् ॥

**संहारविक्षेपलघुक्रियेण हस्तेन तीराभिमुखः सशब्दम् ।**
**बभौ स भिन्दन्बृहतस्तरङ्गान्वार्यर्गलाभङ्ग इव प्रवृत्तः ॥ ४५ ॥**

संहारविक्षेपयोः संकोचनप्रसारणयोर्लघुक्रियेण क्षिप्रव्यापारेण । [ **संहारविक्षेपलघुक्रियेण** ]। 'लघु क्षिप्रमरं द्रुतम्' इत्यमरः । **हस्तेन** शुण्डादण्डेन । 'हस्तो नक्षत्रभेदे स्यात्करेभकरयोरपि ।' इति विश्वः । **सशब्दं** सघोषं **बृहतस्तरङ्गान्भिन्दन्** विदारयन् **तीराभिमुखः स** गजः । **वारी** गजबन्धनस्थानम् । 'वारी तु

---

१ 'अनेन सैन्यबाहुल्यं सूचितम्' इति हे०। २ 'निर्धौत'–'निर्धूत' इ. चा० दि० वि०; 'निर्धूत–गल्लभित्तिः' इ० हे० व०, 'निर्धूत–गण्डलेखः' इ० सु० ध० च पठन्ति. ३ कुलपर्वतविशेषः। महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्वतः । विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वताः॥ ४ लघुक्रियेण 'कुशलेन' इ.दि० । वारी गजबन्धनस्थानं तस्या बहिर्गमनरोधार्थं दत्तार्गला विष्कम्भस्तस्या भङ्गे प्रवृत्त इव । यद्वा वारि एव जलमेवार्गला तस्या भङ्गे प्रवृत्त इव। इति हे०।

अत्र भिन्नरूपः श्लोक एकः पठ्यते चा० ध० दि०रादिभिः । स यथा–

**स भोगिभोगाधिकपीवरेण संवेष्टितार्धप्रसृतेन [ –तोध्वेप्रहरेण–तार्धप्रभुतेन ] दाघान् ।**
**प्रतिक्षिपंस्तीरमुखः [ चिक्षेप तीराभिमुखः ] सशब्दं हस्तेन वारीपरिघानिवोर्मीन् ॥**

गजबन्धनी' इति यादवः । वार्या अर्गलाया विष्कम्भस्य भङ्गे भञ्जने [ वार्यर्गलाभङ्गे ] प्रवृत्तः इव बभौ ॥

**शैलोपमः शैवलमञ्जरीणां जालानि कर्षन्नुरसा स पश्चात् ।**
**पूर्वं तदुत्पीडितवारिराशिः सरित्प्रवाहस्तटमुत्ससर्प ॥ ४६ ॥**

**शैलोपमः स** गजः **शैवलमञ्जरीणां जालानि** वृन्दानि **उरसा कर्षन्पश्चात्** तटमुत्ससर्प । **पूर्वं** तेन गजेनोत्पीडितो नुन्नो वारिराशिर्यस्य स [ **तदुत्पीडितवारिराशिः** ] **सरित्प्रवाहः तटमुत्ससर्प** ॥

**तस्यैकनागस्य कपोलभित्त्योर्जलावगाहक्षणमात्रशान्ता ।**
**वन्येतरानेकपदर्शनेन पुनर्दिदीपे मददुर्दिनश्रीः ॥ ४७ ॥**

**तस्य एकनागस्य** एकाकिनो गजस्य **कपोलभित्त्योः** जलावगाहेन क्षणमात्रं शान्ता निवृत्ता [ **जलावगाहक्षणमात्रशान्ता** ] **मददुर्दिनश्रीः** मदवर्षलक्ष्मीर्वन्येतरेषां ग्राम्याणामनेकपानां द्विपानां दर्शनेन [ **वन्येतरानेकपदर्शनेन** ] **पुनर्दिदीपे** ववृधे ॥

**सप्तच्छदक्षीरकटुप्रवाहमसह्यमाघ्राय मदं तदीयम् ।**
**विलङ्घिताधोरणतीव्रयत्नाः सेनागजेन्द्रा विमुखा बभूवुः ॥ ४८ ॥**

सप्तच्छदस्य वृक्षविशेषस्य क्षीरवत्कटुः सुरभिः प्रवाहः प्रसारो यस्य तम् [ **सप्तच्छदक्षीरकटुप्रवाहम्** ] । 'कटुतिक्तकषायास्तु सौरभ्येऽपिप्रकीर्तिताः ।' इति यादवः । **असह्यं तदीयं मदमाघ्राय सेनागजेन्द्राः** । [ **विलङ्घिताधोरणतीव्रयत्नाः** ] विलंघितास्तिरस्कृत आधोरणानां हस्तिपकानां तीव्रो महान्यत्नो यैस्ते तथोक्ताः सन्तः । 'आधोरणा हस्तिपका हस्त्यारोहा निषादिनः ।' इत्यमरः । **विमुखाः** पराङ्मुखाः **बभूवुः** ॥

**स च्छिन्नबन्धद्रुतयुग्यशून्यं भग्नाक्षपर्यस्तरथं क्षणेन ।**
**रामापरित्राणविहस्तयोधं सेनानिवेशं तुमुलं चकार ॥ ४९ ॥**

**स** गजः । छिन्ना बन्धा यैस्ते छिन्नबन्धाः । द्रुताः पलायिताः । युगं वहन्तीति युग्या वाहा यस्मिन्सः । स चासौ शून्यश्च तं [ **छिन्नबन्धद्रुतयुग्यशून्यम्** ] । भग्ना अक्षा रथावयवदारुविशेषाः । 'अक्षो रथस्यावयवे पाशकेऽप्यक्षमिन्द्रियम् ।' इति शाश्वतः । येषां ते भग्नाक्षा अत एव पर्यस्ताः पतिता रथा यस्मिंस्तं [ **भग्नाक्षपर्यस्तरथम्** ] ।

---

१ उरसा–' तरसा ' इ. पा. अत्र भिन्नरूपं श्लोकं पठन्ति चा० हे० व० भादयः । यथा—
**कारण्डवोत्सृष्टमृदुप्रवालाः [ प्रतानाः–प्रतान्ताः ] पुलिन्दयोषाम्बुविहारकाञ्चीः कर्षन् स शै( से )वाललता नदीष्णः प्रवाह ( प्रौ-प्रां-हाव ) लग्नास्तटमुत्ससर्प ॥**
२ ' ह्रदा ' इ चा० हे० व० दि० सु० ध० वि० पठन्ति ।
३ अत्र एकशब्दः संख्यार्थो मुख्यार्थो वा । ' एके मुख्यान्यकेवलाः । इति ' हे० चा० । दुर्दिनशब्देन दानवर्षणमुच्यते । हे०　४ ' विमुखीबभूवुः ' इति बहुसम्मतः पाठः ।
५ ' युगकीलकाः ' इ. दि० । यद्वा अक्षा रथचक्राणि । 'अक्षो ज्ञातार्थशकटव्यवहारेषु पाशके । × × × ॥ चक्रे कर्षे पुमान् ' इति मेदिनी ।

रामाणां स्त्रीणां परित्राणे संरक्षणे विहस्ता व्याकुलाः। 'विहस्तव्याकुलौ समौ' इत्यमरः। योधा यस्मिंस्तं [ **रामापरित्राणविहस्तयोधं** ] **सेनानिवेशं** शिबिरं **क्षणेन तुमुलं** संकुलं **चकार** ॥

**तमापतन्तं नृपतेरवध्यो वन्यः करीति श्रुतवान्कुमारः।**
**निवर्तयिष्यन्विशिखेन कुम्भे जघान नात्यायतकृष्टशार्ङ्गः ॥ ५० ॥**

**नृपतेः** राज्ञः **वन्यः करी अवध्यः इति श्रुतवान्** शास्त्राज्ज्ञातवान् **कुमारः आपतन्तम्** अभिधावन्तं **तं** गजं **निवर्तयिष्यन्** न तु प्रहरिष्यन्। अत एव नात्यायतमनतिदीर्घं यथा स्यात्तथा। नञर्थस्य नशब्दस्य सुप्सुपेति समासः। कृष्टशार्ङ्ग ईषदाकृष्टचापः[1] [ **नात्यायतकृष्टशार्ङ्गः** ] सः। **विशिखेन** बाणेन **कुम्भे जघान**। अत्र चाक्षुषः—'लक्ष्मीकामो युद्धादन्यत्र करिवधं न कुर्यात्। इयं हि श्रीर्यत् करिणः' इति। अत एव 'युद्धादन्यत्र' इति द्योतनार्थमेव वन्यग्रहणं कृतम् ॥

**स विद्धमात्रः किल नागरूपमुत्सृज्य तद्विस्मितसैन्यदृष्टः।**
**स्फुरत्प्रभामण्डलमध्यवर्ति कान्तं वपुर्व्योमचरं प्रपेदे ॥ ५१ ॥**

**स** गजः **विद्धमात्रः**[2] ताडितमात्रः **किल** न तु प्रहृतः तथापि **नागरूपं** गजशरीरम् **उत्सृज्य** ; तेन वृत्तान्तेन विस्मितैस्तद्विस्मितैः सैन्यैर्दृष्टः [ **तद्विस्मितसैन्यदृष्टः** ] सन्। स्फुरतः प्रभामण्डलस्य मध्यवर्ति [ **स्फुरत्प्रभामण्डलमध्यवर्ति** ] **कान्तं** मनोहरं **व्योमचरं वपुः प्रपेदे** प्राप ॥

**अथ प्रभावोपनतैः कुमारं कल्पद्रुमोत्थैरवकीर्य पुष्पैः।**
**उवाच वाग्मी दशनप्रभाभिः संवर्धितोरःस्थलतारहारः ॥ ५२ ॥**

**अथ** प्रभावेनोपनतैः[3] प्राप्तैः [ **प्रभावोपनतैः** ] **कल्पद्रुमोत्थैः** कल्पवृक्षोत्पन्नैः **पुष्पैः कुमारम्** अजम् **अवकीर्य** अभिवृष्य **दशनप्रभाभिः** दन्तकान्तिभिः [ **संवर्धितोरःस्थलतारहारः** ][4] संवर्धिता उरःस्थले ये तारहाराः स्थूलमुक्ताहारास्ते येन स तथोक्तः। वाचोऽस्य सन्तीति **वाग्मी** वक्ता। 'वाचो ग्मिनिः' इति ग्मिनिप्रत्ययः। स पुरुषः **उवाच** ॥

**मतङ्गशापादवलेपमूलादवाप्तवानस्मि मतङ्गजत्वम्।**
**अवेहि गन्धर्वपतेस्तनूजं प्रियंवदं मां प्रियदर्शनस्य ॥ ५३ ॥**

**अवलेपमूलाद्** गर्वहेतुकात्। 'अवलेपस्तु गर्वे स्याल्लेपने द्वेषणेऽपि च।' इति विश्वः। मतङ्गस्य मुनेः शापात् [ **मतङ्गशापात्** ] **मतङ्गजत्वमवाप्तवानस्मि। मां प्रियदर्शनस्य** प्रियदर्शनाख्यस्य **गन्धर्वपतेः** गन्धर्वराजस्य **तनूजं** पुत्रम्।

---

१ 'कृष्टचापः' इ. हे० वि० व० पठन्ति। २ विद्ध एव विद्धमात्रः। सुप्सुपेति समासः। ३ प्रभावो दिव्यसामर्थ्यम्। ४ तारहारः—'तारस्तु मुक्ताधौतमुक्तेऽतिदीप्तौ तारः' इति विक्रमादित्योक्तिः' इ. चा०। ५ 'पुरा किलेश्वरसेवागमनेऽखर्वगर्वसन्तापितेन जानमन्यना गजो भवेति शप्त इति वार्ता।' इ. चा० सु०।

'स्त्रियां मूर्तिस्तनुस्तनूः' इत्यमरः। तन्वादेर्वेत्यूङिति केचित्। **प्रियंवदं** प्रियंवदाख्यम् **अवेहि** जानीहि। प्रियं वदतीति प्रियंवदः। 'प्रियवशे वदः खच्' इति खच्प्रत्ययः॥

**स चानुनीतः प्रणतेन पश्चान्मया महर्षिर्मृदुतामगच्छत्।**
**उष्णत्वमग्न्यातपसंप्रयोगाच्छैत्यं हि यत्सा प्रकृतिर्जलस्य ॥ ५४ ॥**

**स महर्षिश्च प्रणतेन मया अनुनीतः** सन् **पश्चात् मृदुतां** शान्तिं **अगच्छत्।** तथा हि। **जलस्य उष्णत्वम्** अग्नेरातपस्य वा संप्रयोगात्संपर्कात् [ **अग्न्यातपसंप्रयोगात्** ] न तु प्रकृत्योष्णत्वम्। **यच्छैत्यं सा प्रकृतिः** स्वभावः। विधेयप्राधान्यात्सेति स्त्रीलिङ्गनिर्देशः। महर्षीणां शान्तिरेव स्वभावो न क्रोध इत्यर्थः॥

**इक्ष्वाकुवंशप्रभवो यदा ते भेत्स्यत्यजः कुम्भमयोमुखेन।**
**संयोक्ष्यसे स्वेन वपुर्महिम्ना तदेत्यवोचत्स तपोनिधिर्माम् ॥ ५५ ॥**

इक्ष्वाकुवंशः प्रभवो यस्य सः [ **इक्ष्वाकुवंशप्रभवः** ] **अजः यदा ते कुम्भम् अयोमुखेन** लोहाग्रेण शरेण **भेत्स्यति** विदारयिष्यति **तदा स्वेन** वपुषो महिम्ना [ **वपुर्महिम्ना** ] पुनः **संयोक्ष्यसे** संगंस्यसे **इति स तपोनिधिर्मामवोचत्**॥

**संमोचितः सत्त्ववता त्वयाहं शापाच्चिरप्रार्थितदर्शनेन।**
**प्रतिप्रियं चेद्भवतो न कुर्यां वृथा हि मे स्यात्स्वपदोपलब्धिः ॥ ५६ ॥**

चिरं प्रार्थितं दर्शनं यस्य तेन [ **चिरप्रार्थितदर्शनेन** ] **सत्त्ववता** बलवता **त्वयाहं शापात्संमोचितः** मोक्षं प्रापितः। **भवतः प्रतिप्रियं** प्रत्युपकारं **न कुर्यां चेन्मे स्वपदोपलब्धिः** स्वस्थानप्राप्तिः। 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु।' इत्यमरः। **वृथा स्यात् हि**। तदुक्तम्—'प्रतिकर्तुमशक्तस्य जीवितान्मरणं वरम्।' इति॥

**संमोहनं नाम सखे ममास्त्रं प्रयोगसंहारविभक्तमन्त्रम्।**
**गान्धर्वमादत्स्व यतः प्रयोक्तुर्न चारिहिंसा विजयश्च हस्ते ॥ ५७ ॥**

हे **सखे**। सखिशब्देन समप्राणतोक्ता। यथोक्तम्—'अत्यागसहनो बन्धुः सदैवानुमतः सुहृत्। एकक्रियं भवेन्मित्रं समप्राणः सखा मतः॥' इति। प्रयोगसंहारयोर्विभक्तमन्त्रं [ **प्रयोगसंहारविभक्तमन्त्रम्** ] **गान्धर्वं** गन्धर्वदेवताकम्। संमोह्यतेऽनेनेति **संमोहनं नाम ममास्त्रमादत्स्व** गृहाण। **यतः** अस्त्रात् **प्रयोक्तुः** अस्त्रप्रयोगिणः **अरिहिंसा न च विजयश्च हस्ते**। हस्तगतो विजयो भवतीत्यर्थः॥

---

१ 'आमरणान्ताः प्रणयाः कोपास्तत्क्षणभङ्गुराः। परित्यागाश्च निःसङ्गा भवन्ति हि महात्मनाम्'॥ इति हितोपदेशे। मुनीनां क्रोधस्तु कुतश्चित्कारणात्संधुक्षितोऽप्यस्वभावत्वात्तत्क्षणं विनश्यति। शमस्तु प्रकृतिसिद्धत्वाच्चिरस्थायीत्यर्थः। २ अनेन शापविमोचनसामर्थ्यं प्रदर्शितम्। ३ आदत्स्व–'आधत्स्व;' 'प्रयोक्तुः'–'प्रहर्तुः'; च हस्ते–'स्वहस्ते' इ. पा०। सर्वोऽपि श्लोकान्यथोपलभ्यते क्वचित्। यथा–'**गान्धर्वमस्त्रं तदितः प्रतीच्छ प्रयोगसंहारविभक्तमन्त्रम्। प्रस्वापनं नाम यतः प्रहर्तुर्न चारिहिंसा विजयः स्वहस्ते॥**' ४ स्वास्त्रस्यास्त्रान्तरविलक्षणं गुणमाह–यत इति। न चारिहिंसा–'न हिंस्यात्सर्वाणि भूतानि' इति श्रुतेर्हिंसां विना विजयलाभ एव श्रेयस्कर इति भावः।

वधलज्जितः कथमस्त्रग्रहणपरः स्यामिति चेत्तत्राह—

**अलं ह्रिया मां प्रति यन्मुहूर्तं दयापरोऽभूः प्रहरन्नपि त्वम् ।**
**तस्मादुपच्छन्दयति प्रयोज्यं मयि त्वया न प्रतिषेधरौक्ष्यम् ॥ ५८ ॥**

किं च । **मां प्रति ह्रिया** प्रहारनिमित्तया **अलम्** । कुतः । **यद्** यतो हेतोः **त्वं** मां **प्रहरन्नपि मुहूर्तं दयापरः** कृपालुः **अभूः** । **तस्मादुपच्छन्दयति** प्रार्थयमाने **मयि त्वया** [ **प्रतिषेधरौक्ष्यम्** ] प्रतिषेधः परिहारः स एव रौक्ष्यं पारुष्यं तत् **न प्रयोज्यं** न कर्तव्यम् ॥

**तथेत्युपस्पृश्य पयः पवित्रं सोमोद्भवायाः सरितो नृसोमः ।**
**उदङ्मुखः सोऽस्त्रविदस्त्रमन्त्रं जग्राह तस्मान्निगृहीतशापात् ॥ ५९ ॥**

ना सोमः चन्द्र इव **नृसोमः** । उपमितसमासः । 'सोम ओषधिचन्द्रयोः' इति शाश्वतः । पुरुषश्रेष्ठ इत्यर्थः । **अस्त्रविद्** अस्त्रज्ञः **सः** अजः **तथेति** 'सोम उद्भवो यस्याः सा तस्याः **सोमोद्भवायाः सरितः** नर्मदायाः । 'रेवा तु नर्मदा सोमोद्भवा मेखलकन्यका ।' इत्यमरः । **पवित्रं पयः उपस्पृश्य** पीत्वा । आचम्येत्यर्थः । **उदङ्मुखः** सन् **निगृहीतशापात्** निवर्तितशापात् । उपकृतादित्यर्थः । **तस्मात्** प्रियंवदाद् **अस्त्रमन्त्रं जग्राह** ॥

**एवं तयोरध्वनि दैवयोगादासेदुषोः सख्यमचिन्त्यहेतु ।**
**एको ययौ चैत्ररथप्रदेशान्सौराज्यरम्यानपरो विदर्भान् ॥ ६० ॥**

**एवमध्वनि** मार्गे **दैवयोगाद्** दैववशाद् **अचिन्त्यहेतु** अनिर्धार्यहेतुकं **सख्यं** सखित्वम् । 'सख्युर्यः' इति यप्रत्ययः । **आसेदुषोः** प्राप्तवतोः **तयोः** मध्ये **एकः** गन्धर्वश्चैत्ररथस्य कुबेरोद्यानस्य प्रदेशान् [ **चैत्ररथप्रदेशान्** ] । 'अस्योद्यानं चैत्ररथम्' इत्यमरः । **अपरः** अजः सौराज्येन राजन्वत्तया रम्यान् [ **सौराज्यरम्यान्** ] **विदर्भान्** विदर्भदेशान् **ययौ** ॥

**तं तस्थिवांसं नगरोपकण्ठे तदागमारूढगुरुप्रहर्षः ।**
**प्रत्युज्जगाम क्रथकैशिकेन्द्रश्चन्द्रं प्रवृद्धोर्मिरिवोर्मिमाली ॥ ६१ ॥**

नगरस्योपकण्ठे समीपे [ **नगरोपकण्ठे** ] **तस्थिवांसं** स्थितं **तम्** अजं तस्याजस्यागमेनागमनेनारूढ उत्पन्नो गुरुः प्रहर्षो यस्य सः [ **तदागमारूढगुरुप्रहर्षः** ] **क्रथकैशिकेन्द्रः** विदर्भराजः । **प्रवृद्धोर्मिः ऊर्मिमाली** समुद्रः **चन्द्रमिव** । **प्रत्युज्जगाम** ॥

---

१ 'वारणार्थालंयोगे तृतीयैव' इ. हे० सु० । 'अलं भूषणपर्याप्तिशक्तिवारणवाचकम् ।' इत्यमरः । तस्मादिति–अनुरूपा प्रार्थना द्वितीये–'तद्भूतनाथानुग–' (५८) इति । २ 'अत्रोभयोरानन्दकारित्वं साम्यम् । नर्मदाशब्देन सुखदातृत्वं व्यज्यते' हे० । उदङ्मुखः–उत्तरास्यः । 'उदङ्मुखस्तु गृह्णीयात्' इति स्मृतेः । यद्वा उदङ्मुख उपस्पृश्य । 'अन्तर्जानु शुचौ देशे उपविष्ट उदङ्मुखः । प्राग्वा ब्राह्मेण तीर्थेन द्विजो नित्यमुपस्पृशेत् ॥' इति याज्ञवल्क्यः । इति हे० ३ अस्त्रविद्–'अस्त्रविदः' इ. चा० दिनकरादिसम्मतः पाठः । अस्त्रविदोऽस्त्रज्ञात् इति तदर्थः । निगृहीतशापात्–'निगृहीतशास्ता' इ. हे० दि० चा० पठन्ति । दि० व्याचष्टे च–'निःशेषेण गुरोः सकाशाद्गृहीतं विद्यादि शास्ति रक्षतीति तथा ।' ४ चित्ररथेन गन्धर्वराजेन निर्वृत्तं चैत्ररथम् ।

**प्रवेश्य चैनं पुरमग्रयायी नीचैस्तथोपाचरदर्पितश्रीः ।**
**मेने यथा तत्र जनः समेतो वैदर्भमागन्तुमजं गृहेशम् ॥ ६२ ॥**

**एनम्** अजम **अग्रयायी** । सेवाधर्मेण पुरो गच्छन्नित्यर्थः । **नीचैः** नम्रः **पुरं प्रवेश्य** प्रवेशं कारयित्वा प्रीत्या **अर्पितश्रीः तथा** तेन प्रकारेण **उपाचरत्** उपचरितवान् [ **च** ] । **यथा** येन प्रकारेण **तत्र** पुरे **समेतः** मिलितः **जनः वैदर्भं** भोजम **आगन्तुं** प्राघूर्णिकं मेने । **अजं गृहेशं** गृहपतिं **मेने** ॥

**तस्याधिकारपुरुषैः प्रणतैः प्रदिष्टां**
**प्राग्द्वारवेदिविनिवेशितपूर्णकुम्भाम् ।**
**रम्यां रघुप्रतिनिधिः स नवोपकार्यां**
**बाल्यात्परामिव दशां मदनोऽध्युवास ॥ ६३ ॥**

**रघुप्रतिनिधिः** रघुकल्पः । रघुतुल्य इत्यर्थः । उक्तं च दण्डिना सादृश्यवाचकप्रस्तावे—' कल्पदेशीयदेश्यादि प्रख्यप्रतिनिधी अपि । ' इति । **सः** अजः **प्रणतैः** नमस्कृतवद्भिः । कर्तरि क्तः । **तस्य** भोजस्याधिकारो नियोगस्तस्य पुरुषैः [ **अधिकारपुरुषैः** ] । अधिकृतैरित्यर्थः । **प्रदिष्टां** निर्दिष्टां प्राग्द्वारस्य वेद्यां विनिवेशितः प्रातिष्ठापितः पूर्णकुम्भो यस्यास्ताम् [ **प्राग्द्वारवेदिविनिवेशितपूर्णकुम्भाम्** ] । स्थापितमङ्गलकलशामित्यर्थः । **रम्यां** रमणीयां **नवोपकार्यां** नूतनं राजभवनम् । ' उपकार्या राजसद्मन्युपचारचितेऽन्यवत् । ' इति विश्वः । **मदनः बाल्यात्परां** शैशवादनन्तरां **दशामिव** । यौवनमित्यर्थः । **अध्युवास** अधिष्ठितवान् । तत्रोषितवानित्यर्थः । ' उपान्वध्याङ्वसः ' इति कर्मत्वात् ॥

**तत्र स्वयंवरसमाहृतराजलोकं**
**कन्याललाम कमनीयमजस्य लिप्सोः ।**
**भावावबोधकलुषा दयितेव रात्रौ**
**निद्रा चिरेण नयनाभिमुखी बभूव ॥ ६४ ॥**

**तत्र** उपकार्यायाम् । स्वयंवरनिमित्तं समाहृतः संमेलितो राजलोको येन तत् [ **स्वयंवरसमाहृतराजलोकं** ] **कमनीयं** स्पृहणीयं **कन्याललाम** कन्यासु श्रेष्ठम् । ' ललामोऽस्त्री ललामापि प्रभावे पुरुषे ध्वजे । श्रेष्ठभूषापुण्ड्रशृङ्गपुच्छचिह्नाश्वलिङ्गिषु ॥ ' इति यादवः । **लिप्सोः** लब्धुमिच्छोः । लभेः सन्नन्तादुप्रत्ययः । **अजस्य** भावावबोधे पुरुषस्याभिप्रायपरिज्ञाने कलुषा असमर्था [ **भावावबोधकलुषा** ]

---

१ तस्मिन्स्वयंवरे । इ. हे० । समेतः–' समरतः ' ' समग्रः ' इ. पा० । २ पटकुटीम् । चा० स० । प्राग् द्वारं यस्याः सा प्राग्द्वारा सा चासौ वेदिश्च तत्र निवेशितो हेम्नः कुम्भो यस्याः सा ताम् । इति दि० व्याख्याति । ' इतो एकादश श्लोका वसन्ततिलकाछंदसा । तल्लक्षणं च–' उक्ता वसन्ततिलका तभजा जगौ गः ' । इ. चा० । अधिकार०–' अधिकार० ', पूर्ण०–'हेम ' इ. पा. ३ मुग्धतयेति शेषः । यद्वा तस्येन्दुमतीगतमनस्कतया ' अन्यत्रानुसक्तोऽयमित्यभिप्रायवेदनेन कलुषा अप्रसन्ना ' इ. चा० हे० । ईदृशी कान्तापि पत्युर्विविधाननयैर्भिरात्तदभिमुखी भवति । चिरेण इ०---बहुषु स्थितेषु मां वृणीत न वेत्याकुलत्वात् चिरेण निद्रामगमत् ' इ. हे० । ' केचित्तु निद्राकथनं शृङ्गारपोषकं न भवतीत्याहुः ' इ. चा०

दयितेव। रात्रौ निद्रा चिरेण नयनाभिमुखी बभूव। 'राजानं कामिनं चौरं प्रविशन्ति प्रजागराः।' इति भावः। अभिमुखीशब्दो ङीपन्तश्च्यन्तो वा॥

**तं कर्णभूषणनिपीडितपीवरांसं**
**शय्योत्तरच्छदविमर्दकृशाङ्गरागम्।**
**सूतात्मजाः सवयसः प्रथितप्रबोधं**
**प्राबोधयन्नुषसि वाग्भिरुदारवाचः॥ ६५॥**

कर्णभूषणाभ्यां निपीडितौ पीवरौ पीनावंसौ यस्य तम् [ **कर्णभूषणनिपीडितपीवरांसम्** ]। शय्याया उत्तरच्छदस्योपर्यास्तरणवस्त्रस्य विमर्देन घर्षणेन कृशो विरलोऽङ्गरागो यस्य तं [ **शय्योत्तरच्छदविमर्दकृशाङ्गरागम्** ]। न त्वङ्गनासङ्गादिति भावः। **प्रथितप्रबोधं** प्रकृष्टज्ञानं **तम्** एनमजं **सवयसः** समानवयस्काः **उदारवाचः** प्रगल्भगिरः **सूतात्मजाः** बन्दिपुत्राः। '[१]वैतालिकाः' इति वा पाठः। 'वैतालिका बोधकराः' इत्यमरः। **वाग्भिः** स्तुतिपाठैः **उषसि प्राबोधयन्** प्रबोधयामासुः॥

**रात्रिर्गता मतिमतां वर मुञ्च शय्यां**
**धात्रा द्विधैव ननु धूर्जगतो विभक्ता।**
**ताम्[३]एकतस्तव बिभर्ति गुरुर्विनिद्र-**
**स्तस्या भवानपरधुर्यपदावलम्बी॥ ६६॥**

हे **मतिमतां वर**। निर्धारणे षष्ठी। **रात्रिर्गता**। **शय्यां मुञ्च** विनिद्रो भवेत्यर्थः। विनिद्रत्वे फलमाह—धात्रेति। **धात्रा** ब्रह्मणा **जगतः धूः** भारः। 'धूः स्याद्यानमुखे भारे' इति यादवः। **द्विधैव**। द्वयोरेवेत्यर्थः। एवकारस्तृतीयनिषेधार्थः। **विभक्ता ननु** विभज्य स्थापिता खलु। तत्किमत आह—**तां** धुरम् **एकतः** एककोटौ **तव गुरुः** पिता **विनिद्रः** सन् **बिभर्ति**। **तस्याः** धुरः **भवान्**। धुरं वहतीति धुर्यो भारवाही। तस्य पदं वहनस्थानम्। अपरं यद्धुर्यपदं तदवलम्बी [ **अपरधुर्यपदावलम्बी** ]। ततो विनिद्रो भवेत्यर्थः। न ह्युभयवाह्यमेको वहतीति भावः॥

**निद्रावशेन भवताप्यनवेक्षमाणा**
**पर्युत्सुकत्वमबला निशि खण्डितेव।**

---

१ अयं हे० चा० दि० व० सु० धर्म० वि० सम्मतः पाठः। 'प्रतिबोधहेतोः' इति दि० पठति। 'वैतालिकाः स्फुटपदप्रकटार्थबन्धम्' 'वैतालिका ललितबन्धमनोहराभिः' इ. तृ० पादपा०। २ मधुरगानेन हि प्रभूणां प्रबोधः क्रियते। तथाहि भोजः—मृदुभिर्मर्दनैः पादे शीतैर्व्यजनकैस्तथा। श्रुतौ वा मधुरैर्गानैर्निद्रातो बोधयेत्प्रभुम्॥ इ. हे० ३ ताम्—'याम्'। विनिद्रः—'वितन्द्रः' इ. पा०

लक्ष्मीर्विनोदयति येन दिगन्तलम्बी
सोऽपि त्वदाननरुचिं विजहाति चन्द्रः ॥ ६७ ॥

चन्द्रारविन्दराजवदनादयो लक्ष्मीनिवासस्थानानीति प्रसिद्धिमाश्रित्योच्यते । **निद्रावशेन** निद्राधीनेन । स्त्र्यन्तरासङ्गोऽत्र ध्वन्यते । **भवता पर्युत्सुकत्वमपि** । त्वय्यनुरक्तत्वमपीत्यर्थः । 'प्रसितोत्सुकाभ्यां तृतीया च' इति सप्तम्यर्थे तृतीया । अपिशब्दस्तद्विषयानुरागस्यानपेक्ष्यत्वद्योतनार्थः । **निशि खण्डिता** भर्तुरन्यासङ्गज्ञानकलुषिता **अबलेव** नायिकेव । 'ज्ञातेऽन्यासङ्गविकृते खण्डितेर्ष्याकषायिता ।' इति दशरूपके । **अनवेक्षमाणा** अविचारयन्ती सती । उपेक्षमाणेत्यर्थः । **लक्ष्मीः येन** चन्द्रेण सह । त्वदाननसदृशत्वादिति भावः । **विनोदयति** विनोदं करोति । विनोदशब्दात् 'तत्करोति तदाचष्टे' इति णिच्प्रत्ययः । सादृश्यदर्शनादयो हि विरहिणां विनोदस्थानानीति भावः । **स चन्द्रः अपि दिगन्तलम्बी** पश्चिमाशां गतः सन् । अस्तं गच्छन्नित्यर्थः । अत एव **त्वदाननरुचिं विजहाति** । त्वन्मुखसादृश्यं त्यजतीत्यर्थः । अतो निद्रां विहाय तां लक्ष्मीमनन्यशरणां परिगृहाणेति भावः । अथवा [ 'ह्यनवेक्ष्यमाणा' इति पाठे ] निद्रावशेन भवतानवेक्ष्यमाणाऽनिरीक्ष्यमाणा । कर्मणि शानच् । लक्ष्मीः प्रयोजककर्त्री येन प्रयोज्येन चन्द्रेण पर्युत्सुकत्वं त्वद्विरहवेदनाम् । 'कालाक्षमत्वमौत्सुक्यं मनस्तापज्वरादिकृत् ।' इत्यलङ्कारे । विनोदयति निरासयतीति योजना । शेषं पूर्ववत् । नाथस्त्वर्थोपपत्तिमपश्यन्निमं पक्षमुपेक्षिष्ट ॥

तद्वल्गुना युगपदुन्मिषितेन ताव-
त्सद्यः परस्परतुलामधिरोहतां द्वे ।
प्रस्पन्दमानपरुषेतरतारमन्त-
श्चक्षुस्तव प्रचलितभ्रमरं च पद्मम् ॥ ६८ ॥

**तत्** तस्माल्लक्ष्मीपरिग्रहणाद् **वल्गुना** मनोज्ञेन । 'वल्गु स्थाने मनोज्ञे च वल्गु भाषित-

---

१ यद्वा 'अपि' शब्दस्य 'भवता' इत्यनेनान्वयः । भवतापि त्वद्विषयकमपि । अत एवानपेक्षणीयं पर्युत्सुकत्वम् । २ अयं वल्लभसम्मतः पाठः । तद्व्याख्या यथा—हे मतिमतां वर सोऽपि चन्द्रस्त्वदाननरुचिं तव मुखकान्तिं विजहाति परित्यजत्यस्तं व्रजति । विच्छायीभवतीत्यर्थः । कोसावित्याह । हि निश्चितम् । लक्ष्मीः श्रीर्भवता त्वयाऽनवेक्ष्यमाणाऽसेव्यमाना सती निशि रात्रौ येन चन्द्रमसा सह पर्युत्सुकत्वं विनोदयति रणरणकत्वमतिवाहयति । किंभूतेन त्वया । निद्रावशेन निद्रया वशीकृतेन । किंभूतश्चन्द्रः । दिगन्तलम्बी । केव लक्ष्मीः । खण्डिताऽबलेव । यथा खण्डिताबला निशि रात्रौ नार्यन्तरसङ्गाद्भर्त्रानवेक्ष्यमाणा सती क्वापि तत्प्रतिनिधिमुहृत्सन्निधाने औत्सुक्यं विनोदयति । इ० । खण्डितालक्षणं वल्लभव्याख्याने—निद्राकषायमुकुलीकृतताम्रनेत्रो नारीनखव्रणविशेषविचित्रिताङ्गः । यस्याः कुतोपि गृहमेति पतिः प्रभाते सा खण्डितेति कथिता कविभिः पुराणैः ॥ इति । 'अनवेक्षमाणा' इत्यत्र 'अनपेक्षमाणा' इति दि० पठति 'अनभिलषन्ती' इति व्याचष्टे च । दि० तु श्लोकमिमं प्रक्षिप्तं मन्यते । अयं श्लोको भिन्नरूपः पठ्यते कैश्चित् । यथा—

**निद्रावशं त्वयि गते शशिना कथंचिदात्मानमाननरुचा [ चिः ] भवतो वियुज्य [ विनोद्य ] । लक्ष्मीर्विभातसमयेपि हि [प्रिय] दर्शनेन पर्युत्सुका प्रणयिनी [ यणी ] निशि खण्डितेव ॥**

मन्यवत् ' इति विश्वः । **युगपत्** तावत् **उन्मिषितेन** युगपदेवोन्मीलितेन **सद्यः द्वे** अपि **परस्परतुलाम्** अन्योन्यसादृश्यम् **अधिरोहतां** प्राप्नुताम् । प्रार्थनायां लोट् । के द्वे । **अन्तः [ प्रस्पन्दमानपरुषेतरतारम् ]** प्रस्पन्दमाना चलन्ती परुषेतरा स्निग्धा तारा कनीनिका यस्य तत्तथोक्तम् । ' तारकाक्ष्णः कनीनिका ' इत्यमरः । **तव चक्षुः** । **अन्तः प्रचलितभ्रमरं** चलद्भृङ्गं **पद्मं च** । युगपदुन्मेषे संपूर्णसादृश्यलाभ इति भावः ॥

वृन्ताच्छ्लथं हरति पुष्पमनोकहानां
संसृज्यते सरसिजैररुणांशुभिन्नैः ।
स्वाभाविकं परगुणेन विभातवायुः
सौरभ्यमीप्सुरिव ते मुखमारुतस्य[1] ॥ ६९ ॥

**विभातवायुः** प्रभातवायुः **स्वाभाविकं** नैसर्गिकं **ते** तव **मुखमारुतस्य** निश्वासपवनस्य **सौरभ्यम्** तादृक्सौगन्ध्यमित्यर्थः । **परगुणेन** अन्यदीयगुणेन । साङ्कांतिक-गन्धेनेत्यर्थः । **ईप्सुः** आप्तुमिच्छुः **इव** । ' आप्ज्ञप्यृधामीत् ' इतीकारादेशः । **अनोकहानां**[2] वृक्षाणां **श्लथं** शिथिलं **पुष्पं वृन्तात्** पुष्पबन्धनात् । ' वृन्तं प्रसवबन्धनम् ' इत्यमरः । **हरति** आदत्ते । **अरुणांशुभिन्नैः** तरणिकिरणोद्बोधितैः सरसि जातैः **सरसिजैः** कमलैः सह । ' तत्पुरुषे कृति बहुलम् ' इति सप्तम्या अलुक् । **संसृज्यते** संगच्छते । सृजेर्दैवादिकात्कर्तरि लट् ॥

ताम्रोदरेषु पतितं तरुपल्लवेषु[4]
निर्धौतहारगुलिकाविशदं हिमाम्भः ।
आभाति लब्धपरभागतयाधरोष्ठे
लीलास्मितं[5] सदशनार्चिरिव त्वदीयम् ॥ ७० ॥

**ताम्रोदरेषु** अरुणाभ्यन्तरेषु **तरुपल्लवेषु पतितं** निर्धौता या हारगुलिका मुक्तामणयस्तद्वद्विशदं [ **निर्धौतहारगुलिकाविशदं** ] **हिमाम्भः** **लब्धपरभागतया** लब्धोत्कर्षतया । ' परभागो गुणोत्कर्षे ' इति यादवः । **अधरोष्ठे त्वदीयं सदशनार्चिः** दन्तकान्तिसहितं **लीलास्मितमिव आभाति** शोभते ॥

---

१ अस्मात्परं भिन्नरूपं श्लोकं पठन्ति सु० दि० रादयः—
मन्दं निवाति हिमसंभृतशीतभावः संसृज्यते सरसिजैररुणांशुभिन्नैः ॥
सौरभ्यमीप्सुरिव ते मुखमारुतस्य यन्नो गुणान्प्रति निशापरिणामवायुः ॥
संसृज्यते—' संयुज्यते ' इ. पा. २ उत्तमजातीयपुरुषस्य मुखमारुतः पद्मसुरभिर्भवति । प्र-स. श्लो. ४३ द्रष्टव्यः । ३ अनसः शकटस्याकं गतिं हन्तीति अनोकहः । ४ ' द्रुमपल्लवेषु ' इ. पा० । निर्धौत०—'निर्धूतहारगुटिका—' इ. पा० । ५ लीलास्मितम्—लीलया स्मितं विलासान्मन्दहसितम् । उक्तं च साहित्यदर्पणे—' ज्येष्ठानां स्मितहसिते मध्यानां विहसितावहसिते च । ' इत्या० । लब्धेति—अनुरूपभाववर्णनं कुमारे—पुष्पं प्रवालोपहितं यदि स्यान्मुक्ताफलं वा स्फुटविद्रुमस्थम् । ततोऽनुकुर्याद्विशदस्य तस्यास्ताम्रौष्ठपर्यस्तरुचः स्मितस्य ॥ इति ।

**यावत्प्रतापनिधिराक्रमते न भानु-**
**रह्नाय तावदरुणेन तमो निरस्तम् ।**
**आयोधनाग्रसरतां त्वयि वीर याते**
**किं वा रिपूंस्तव गुरुः स्वयमुच्छिनत्ति ॥ ७१ ॥**

**प्रतापनिधिः** तेजोनिधिः **भानुः यावत् न आक्रमते** नोद्गच्छति । 'आङ उद्गमने' इत्यात्मनेपदम् । **तावत्** । भानावनुदित एवेत्यर्थः । **अह्नाय** झटिति । 'द्राग्झटित्यञ्जसाह्नाय' इत्यमरः । **अरुणेन** अनूरुणा । 'सूर्यसूतोऽरुणोऽनूरुः' इत्यमरः । **तमः निरस्तम्** । तथाहि । हे **वीर त्वयि** आयोधनेषु युद्धेषु । 'युद्धमायोधनं जन्यम्' इत्यमरः । अग्रसरतां पुरःसरतां [ **आयोधनाग्रसरतां** ] **याते** सति **तव गुरुः** पिता **रिपून् स्वयम् उच्छिनत्ति किं वा** नोच्छिनत्त्येवेत्यर्थः । न खलु योग्यपुत्रन्यस्तभाराणां स्वामिनां स्वयं व्यापारखेद इति भावः ॥

**शय्यां जहत्युभयपक्षविनीतनिद्राः**
**स्तम्बेरमा मुखरशृङ्खलकर्षिणस्ते ।**
**येषां विभान्ति तरुणारुणरागयोगा-**
**द्भिन्नाद्रिगैरिकतटा इव दन्तकोशाः ॥ ७२ ॥**

उभाभ्यां पक्षाभ्यां पार्श्वाभ्यां विनीतापगता निद्रा येषां ते **उभयपक्षविनीतनिद्राः** । अत्र समासविषय उभशब्दस्थान उभयशब्दप्रयोग एव साधुरित्यनुसंधेयम् । यथाह कैयटः—'उभादुदात्तो नित्यमिति नित्यग्रहणस्येदं प्रयोजनं वृत्तिविषय उभशब्दस्य प्रयोगो मा भूत् । उभयशब्दस्यैव यथा स्यात् उभयपुत्र इत्यादि भवति' इति । [ **मुखरशृङ्खलकर्षिणः** ] मुखराण्युत्थानचलनाच्छब्दायमानानि शृङ्खलानि निगडानि कर्षन्तीति तथोक्ताः **ते** तव स्तम्बे रमन्त इति **स्तम्बेरमाः** हस्तिनः । 'स्तम्बकर्णयो रमिजपोः' इत्यच्प्रत्ययः । 'हस्तिसूचकयोः' इति वक्तव्यात् । 'इभः स्तम्बेरमः पद्मी' इत्यमरः ।

---

१ 'त्वयि संग्रामाग्रणीत्वं प्राप्ते सति' इ. हे० । अग्रसरताम्-अत्र हे० चा० व्याख्या यथा-"पुरोऽग्रतोऽग्रेषु सर्तेः" इति सूत्रे न्यासकृत्-'अग्रेसरः इत्येतद्रूपं सप्तम्या अलुकापि सिध्यत्येव । अग्रं सरतीत्यसप्तम्यन्त उपपदे अग्रेसर इत्येतद्रूपं यथा स्यादित्येवमर्थमग्रेशब्दस्य एकारान्तत्वनिपातनमिति विज्ञेयम्' । अतः अग्रसरता इति प्रयोगश्चिन्त्यः । तथा-पुरोऽग्रेसरः पृष्ठाग्रतःसरः पुरःसराः । यथात्रैव षष्ठे सर्गे "अग्रेसरैर्वाजिभिरुद्धृतानि" । भर्तृहरिश्च "किं जीर्णं तृणमत्ति मानमहतामग्रेसरः केसरी" इति । अथवा अग्रे सरन्तः गच्छन्तः अग्रसरन्तः । तेषां सुभटानां मध्ये वीर इति वा । तदा त्वयि रिपून् याते इति । सरतीति सरः । "पचाद्यच्" इति विशेषणसमासे साधुत्वमिति वा । 'यङोचि च' इति सूत्रे सर्वे धातवः पचाद्यन्तःपातिनः इति न्यासकृत् । तथात्रैव नवमे सर्गे 'सवरुणावरुणाग्रसरं रुचा' 'हरिहयाग्रसरेण धनुर्भृता' 'यूथं तदग्रसरगर्वितकृष्णसारं' इति । २ 'सेनागजाः' इ. पा० । ३ 'कान्ति' इ. पा० ४ 'कैयटविवरणे च-'उभादुदात्तो नित्यमित्यग्रास्वरितत्वाद्वृत्येतन्नानुवर्तते । न तन्निवृत्त्यर्थं नित्यग्रहणम्' इति भावः ।' इ. हे०

'तत्पुरुषे कृति बहुलम्' इति सप्तम्या अलुक् । **शय्यां जहति** त्यजन्ति । **येषां** स्तम्बेरमाणाम् । दन्ताः[1] कोशा इव **दन्तकोशाः** दन्तकुड्मलाः । **तरुणारुणरागयोगात्** बालार्कारुणसंपर्कात् **भिन्नाद्रिगैरिकतटाः इव विभान्ति** । धातुरक्ताः इव भान्तीत्यर्थः ॥

**दीर्घेष्वमी नियमिताः पटमण्डपेषु**
**निद्रां विहाय वनजाक्ष[2] वनायुदेश्याः ।**
**वक्त्रोष्मणा मलिनयन्ति पुरोगतानि**
**लेह्यानि सैन्धवशिलाशकलानि वाहाः ॥ ७३ ॥**

हे **वनजाक्ष** नीरजाक्ष । 'वनं नीरं वनं सत्त्वम्' इति शाश्वतः । **दीर्घेषु पटमण्डपेषु नियमिताः** बद्धाः **वनायुदेश्याः** वनायुदेशे भवाः । 'पारसीका वनायुजाः' इति हलायुधः । **अमी वाहाः** अश्वाः **निद्रां विहाय पुरोगतानि लेह्यानि** आस्वाद्यानि **सैन्धवशिलाशकलानि** । 'सैन्धवोऽस्त्री सित( शीत )शिवं माणिमन्थं च सिन्धुजे ।' इत्यमरः । **वक्त्रोष्मणा मलिनयन्ति** मलिनानि कुर्वन्ति । उक्तं च सिद्धयोगसंग्रहे— 'पूर्वाह्णकाले चाश्वानां प्रायशो लवणं हितम् । शूलमोहविबन्धघ्नं लवणं सैन्धवं वरम् ॥' इत्यादि ॥

**भवति विरलभक्तिर्म्लानपुष्पोपहारः**
**स्वकिरणपरिवेषोद्भेदशून्याः प्रदीपाः ।**
**अयमपि च गिरं नस्त्वत्प्रबोधप्रयुक्ता-**
**मनुवदति शुकस्ते मञ्जुवाक्पञ्जरस्थः ॥ ७४ ॥[3]**

[ **म्लानपुष्पोपहारः** ] म्लानः पुष्पोपहारः पुष्पपूजा म्लानत्वादेव **विरलभक्तिः** विरलरचनः **भवति** । **प्रदीपाः** च स्वकिरणानां परिवेषस्य मण्डलस्योद्भेदेन स्फुरणेन शून्याः [ **स्वकिरणपरिवेषोद्भेदशून्याः** ] भवन्ति । निस्तेजस्का भवन्तीत्यर्थः । **अपि चायं मञ्जुवाक्** मधुरवचनः **पञ्जरस्थः ते** तव **शुकः** त्वत्प्रबोधनिमित्ते प्रयुक्तामुच्चारितां [ **त्वत्प्रबोधप्रयुक्तां** ] **नः** अस्माकं **गिरं** वाणीम् **अनुवदति** । अनुकृत्य वदतीत्यर्थः । इत्थं प्रभातलिङ्गानि वर्तन्ते । अतः प्रबोद्धव्यमिति भावः ॥

**इति विरचितवाग्भिर्बन्दिपुत्रैः कुमारः**
**सपदि विगत[4]निद्रस्तल्पमुज्झाञ्चकार ।**

---

१ 'कोशस्तु कुड्मले पात्रे दिव्यखड्गपिधानयोः । इति विश्वः । २ 'वनजेक्षण वाह्नि[ बाह्लि ]देश्याः' इ. 'वनायुजास्ते' इ. पा० । ३ श्लोकद्वयस्य मालिनी वृत्तम् । 'ननमयययुतेयं मालिनी भोगिलोकैः' इति तल्लक्षणम् । ४ 'विहत-विहृत-गलित-निद्रः' इ. पा० ।

**मदपटुनिनदद्भिर्बोधितो राजहंसैः**
**सुरगज इव गाङ्गं सैकतं सुप्रतीकः ॥ ७५ ॥**

**इति** इत्थं **विरचितवाग्भिः बन्दिपुत्रैः** वैतालिकैः । पुत्रग्रहणं समानवयस्कत्वद्योतनार्थम् । **सपदि विगतनिद्रः कुमारः** । **तल्पं** शय्याम् । 'तल्पं शय्याट्टदारेषु' इत्यमरः । **उज्झाञ्चकार** विससर्ज । 'इजादेश्च गुरुमतोऽनृच्छः' इत्याम्प्रत्ययः । कथमिव । मदेन पटु मधुरं [ **मदपटु** ] **निनदद्भिः राजहंसैः बोधितः** [ **सुप्रतीकः** ] सुप्रतीकाख्यः **सुरगजः** ईशानदिग्गजः गङ्गाया इदं **गाङ्गम् सैकतं** पुलिनम् **इव** । 'तोयोत्थितं तत्पुलिनं सैकतं सिकतामयम् ।' इत्यमरः । 'सिकताशर्कराभ्यां च' इत्यण्प्रत्ययः । सुप्रतीकग्रहणं प्रायशः कैलासवासिनस्तस्य नित्यं गङ्गातटविहारसंभवादित्यनुसंधेयम् ॥

**अथ विधिमवसाय्य शास्त्रदृष्टं दिवसमुखोचितमञ्चिताक्षिपक्ष्मा ।**
**कुशलविरचितानुकूलवेषः क्षितिपसमाजमगात्स्वयंवरस्थम् ॥ ७६ ॥**

**अथ** उत्थानानन्तरमञ्चितानि चारूण्यक्षिपक्ष्माणि यस्य सः [ **अञ्चिताक्षिपक्ष्मा** ] अजः शास्त्रे दृष्टमवगतं [ **शास्त्रदृष्टं** ] **दिवसमुखोचितं** प्रातःकालोचितं **विधिम्** अनुष्ठानम् **अवसाय्य** समाप्य । स्यतेर्ण्यन्तात् ल्यप् । [ **कुशलविरचितानुकूलवेषः** ] कुशलैः प्रसाधनदक्षैर्विरचितोऽनुकूलः स्वयंवरोचितो वेषो नेपथ्यं यस्य स तथोक्तः सन् । **स्वयंवरस्थं क्षितिपसमाजं** राजसमूहम् **अगात्** अगमत् । 'इणो गा लुङि' इति गादेशः पुष्पिताग्रावृत्तमेतत् । तल्लक्षणम्—'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा ।' इति ॥

**इति महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया संजीविनीसमाख्यया व्याख्यया समेतो महाकविश्रीकालिदासकृतौ रघुवंशे महाकाव्ये अजस्वयंवराभिगमनो नाम पञ्चमः सर्गः ।**

---

१ अस्मात्परमस्मान्नातिभिन्नं श्लोकं पठन्ति चा० दयः—
**इति स विगतनिद्रस्तल्पमल्पेतरांशः सुरगज इव गङ्गासैकतं सुप्रतीकः ।**
**परिजनवनितानां पादयोर्व्यापृतानां वलयमणिविदिष्टं प्रच्छदान्तं मुमोच ॥**

२ 'अनुरूपवेषः' इ. पा०. ३ अनेन सुलक्षणत्वोक्तिः । उक्तं च-'मुखमर्धं शरीरस्य सर्वं वा मुखमुच्यते । तत्रापि नासिका श्रेष्ठा नासिकायाश्च लोचने ॥' इ० चा०.

जांह्ववी मूर्ध्नि पादे वा कालः कण्ठे वपुष्यथ ।
कामारिं कामतातं वा कंचिदेकं ( देवं ) भजामहे ॥

स तत्र मञ्चेषु मनोज्ञवेषान्सिंहासनस्थानुपचारवत्सु ।
वैमानिकानां मरुतामपश्यदाकृष्टलीलान्नरलोकपालान् ॥ १ ॥

सः अजः तत्र स्थाने उपचारवत्सु राजोपचारवत्सु मञ्चेषु पर्यङ्केषु सिंहासनस्थान् मनोज्ञवेषान् मनोहरनेपथ्यान् वैमानिकानां विमानैश्चरताम् । 'चरति' इति ठक्प्रत्ययः । मरुताम् अमराणाम् । 'मरुतौ पवनामरौ' इत्यमरः । आकृष्टलीलान् गृहीतसौभाग्यान् । आकृष्टमरुल्लीलानित्यर्थः । सापेक्षत्वेऽपि गमकत्वात्समासः । नरलोकं पालयन्तीति नरलोकपालाः । कर्मण्यण्प्रत्ययः । तान् भूपालान् [ नरलोकपालान् ] अपश्यत् । सर्गेऽस्मि- न्नुपजातिश्छन्दः ॥

रतेर्गृहीतानुनयेन कामं प्रत्यर्पितस्वाङ्गमिवेश्वरेण ।
काकुत्स्थमालोकयतां नृपाणां मनो बभूवेन्दुमतीनिराशम् ॥ २ ॥

'रतिः स्मरप्रियायां च रागे च सुरते स्मृता ।' इति विश्वः । रतेः कामप्रियायाः गृहीतानुनयेन स्वीकृतप्रार्थनेन । गृहीतरत्यनुनयेनेत्यर्थः । सापेक्षत्वेऽपि गमकत्वात्समासः । ईश्वरेण हरेण प्रत्यर्पितस्वाङ्गं काममिव स्थितं काकुत्स्थम् अजम् आलोकयतां नृपाणां मनः इन्दुमतीनिराशं वैदर्भीनिःस्पृहं बभूव । इन्दुमती सत्पतिमेनं विहाय नास्मान्वरिष्यतीति निश्चिक्युरित्यर्थः । सर्वातिशयसौन्दर्यमस्येति भावः ॥

वैदर्भनिर्दिष्टमसौ कुमारः क्लृप्तेन सोपानपथेन मञ्चम् ।
शिलाविभङ्गैर्मृगराजशावस्तुङ्गं नगोत्सङ्गमिवारुरोह ॥ ३ ॥

असौ कुमारः वैदर्भेण भोजेन निर्दिष्टं प्रदर्शितं [ वैदर्भनिर्दिष्टम् ] मञ्चं पर्यङ्कं क्लृप्तेन सुविहितेन सोपानपथेन मृगराजशावः सिंहपोतः । 'पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः ।' इत्यमरः । शिलानां विभङ्गैर्भङ्गीभिः [ शिलाविभङ्गैः ] तुङ्गम् उन्नतं नगोत्सङ्गं शैलाग्रम् इव । आरुरोह ॥

परार्ध्यवर्णास्तरणोपपन्नमासेदिवान्रत्नवदासनं सः ।
भूयिष्ठमासीदुपमेयकान्तिर्मयूरपृष्ठाश्रयिणा गुहेन ॥ ४ ॥

---

१ जह्नोरपत्यं स्त्री जाह्नवी । सा कामारेः शिवस्य शिरसि वर्तते । कामतातस्य प्रद्युम्नपितुः कृष्णस्य । विष्णोरित्यर्थः । पादे वर्तते । अत्रोभयोः साम्यादाभिन्नरूपत्वं ध्वनितम् । २ इमं श्लोकं भिन्नरूपत्वेन पठतः चा० सु० । यथा—

स तत्र मञ्चेषु विमानकल्पेष्वाकल्पसंमूर्च्छितरूपशोभान् ।
सिंहासनस्थान्नृपतीनपश्यत् [ न्ददर्श ] यूपान् प्रशस्तानिव हैमवेदी (दीन्) ॥

३ तत्र–'समाजे' हे० चा० । ४ चित्रादिरुपचारो विद्यते येषु तेषु तथोक्तेषु । इ. सु० ५ सिंहासनस्योपरि सिंहासनं मञ्चकं कथ्यते । इ. सु०. ६ ईश्वरपदेन दानसामर्थ्यं सूचितम् । हे०. ७ 'अर्थो' इ. पा. ८ कुमार इत्युक्तत्वात् 'शावः' इति पदम् । हे०.

पराध्यः श्रेष्ठा वर्णा नीलपीतादयो यस्य तेनास्तरणेन कम्बलादिनोपपन्नं संगतं [ **पराध्यवर्णास्तरणोपपन्नम्** ] **रत्नवत्** रत्नखचितम् **आसनं** सिंहासनम् **आसेदिवान्** अधिष्ठितवान् **सः** अजः । **मयूरपृष्ठाश्रयिणा गुहेन** सेनान्या सह । 'सेनानीरग्निभूर्गुहः' इत्यमरः । **भूयिष्ठम्** अत्यर्थम् **उपमेयकान्तिः आसीत्** । मयूरस्य विचित्ररूपत्वात्तत्साम्यं रत्नासनस्य । तद्वारा च तदारूढयोरपीति भावः ॥

**तासु श्रिया राजपरम्परासु प्रभाविशेषोदयदुर्निरीक्ष्यः ।**
**सहस्रधात्मा व्यरुचद्विभक्तः पयोमुचां पङ्क्तिषु विद्युतेव ॥ ५ ॥**

**तासु राजपरम्परासु श्रिया** लक्ष्म्या कर्त्र्या **पयोमुचां** मेघानां **पङ्क्तिषु विद्युतेव सहस्रधा विभक्तः** । तरङ्गेषु तरणिरिव स्वयमेक एव प्रत्येकं संक्रामित इत्यर्थः । प्रभाविशेषस्योदयेनाविर्भावेन दुर्निरीक्ष्यः दुर्दर्शनः [ **प्रभाविशेषोदयदुर्निरीक्ष्यः** ] **आत्मा** श्रियः स्वरूपं **व्यरुचत्** व्यद्योतिष्ट । 'द्युद्भ्यो लुङि' इति परस्मैपदम् । द्युतादित्वादङ्प्रत्ययः । तस्मिन्समये प्रत्येकं संक्रान्तलक्ष्मीकतया तेषां किमपि दुरासदं तेजः प्रादुरासीदित्यर्थः ॥

**तेषां महार्हासनसंस्थितानामुदारनेपथ्यभृतां स मध्ये ।**
**रराज धाम्ना रघुसूनुरेव कल्पद्रुमाणामिव पारिजातः ॥ ६ ॥**

**महार्हासनसंस्थितानां** श्रेष्ठसिंहासनस्थानाम् । **उदारनेपथ्यभृताम्** उज्ज्वलवेषधारिणां **तेषां** राज्ञां **मध्ये** । **कल्पद्रुमाणां** मध्ये **पारिजातः इव** सुरद्रुमविशेष इव । 'पञ्चैते देवतरवो मन्दारः पारिजातकः । संतानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम् ॥' इत्यमरः । **स रघुसूनुरेव धाम्ना** तेजसा । 'भूम्ना' इति पाठेऽतिशयेनेत्यर्थः । **रराज** । अत्र कल्पद्रुमशब्दः पञ्चान्यतमविशेषवचनः । उपकल्पयन्ति मनोरथानिति व्युत्पत्त्या सुरद्रुममात्रोपलक्षकतया प्रयुक्त इत्यनुसंधेयम् । कल्पा इति द्रुमाः कल्पद्रुमा इति विग्रहः ॥

**नेत्रव्रजाः पौरजनस्य तस्मिन्विहाय सर्वान्नृपतीन्निपेतुः ।**
**मदोत्कटे रेचितपुष्पवृक्षा गन्धद्विपे वन्य इव द्विरेफाः ॥ ७ ॥**

**पौरजनस्य नेत्रव्रजाः सर्वान्नृपतीन्विहाय तस्मिन्** अजे **निपेतुः** । स एव सर्वोत्कर्षेण ददृशे इत्यर्थः । कथमिव । **मदोत्कटे** मदेनोद्भिन्नगण्डे निर्भरमदे वा **वन्ये गन्धद्विपे** गन्धप्रधाने द्विपे गजे । रेचिता रिक्तीकृताः पुष्पाणां वृक्षा यैस्ते [ **रेचित-**

१ 'सहस्रधामा' इ. पा० २ 'प्रतापोद्गमस्य विद्युत्पक्षे वर्णभेदस्य' हे० । विद्युतश्च चतुर्विधाः । तदुक्तं ज्योतिषे–'वाताय कपिला विद्युदातपाय हि लोहिता । पीता वर्षाय विज्ञेया दुर्भिक्षाय सिता भवेत् ॥' इति । 'मेघोपमा राज्ञां मालिन्यार्थम्' इ. हे०

३ 'कल्पयति मनोरथमिति कल्पः । स चासौ द्रुमश्च । पञ्चानां मध्ये एकस्य कल्पद्रुमस्य शब्दवाच्यत्वं यद्यपि प्रतीयते तथापि प्रवृत्तिनिमित्तस्य संकल्पार्थस्य पूरणेन पञ्चानामपि साधारण्यात्कल्पद्रुमाणामिति बहुवचनम् । यथा माघकाव्ये 'कल्पद्रुमैः सह विचित्रफलैर्विरेजुः ।' इति हे० । उपमालङ्कारः ।

४ गन्धप्रधानो द्विपः । तल्लक्षणं पालकाप्ये–'यस्य गन्धं समाघ्राय न तिष्ठन्ति प्रतिद्विपाः । तं गन्धहस्तिनं प्राहुर्नृपतेर्विजयावहम् ॥' इति ।

पुष्पवृक्षाः ] त्यक्तपुष्पवृक्षा इत्यर्थः । **द्विरेफाः** भृङ्गाः **इव** । द्विपस्य वन्यविशेषणं द्विरेफाणां पुष्पवृक्षत्यागसंभावनार्थं कृतम् ॥

त्रिभिर्विशेषकमाह—

**अथ स्तुते बन्दिभिरन्वयज्ञैः सोमार्कवंश्ये नरदेवलोके ।**
**संचारिते चागुरुसारयोनौ धूपे समुत्सर्पति वैजयन्तीः ॥ ८ ॥**

**अथ अन्वयज्ञैः** राजवंशाभिज्ञैः **बन्दिभिः** स्तुतिपाठकैः । 'वन्दिनः स्तुतिपाठकाः' इत्यमरः । **सोमार्कवंश्ये** सोमसूर्यवंशभवे **नरदेवलोके** राजसमूहे **स्तुते** सति । विवेशेत्युत्तरेण सम्बन्धः । एवमुत्तरत्रापि योज्यम् । **संचारिते** समन्तात्प्रचारिते । अगुरुसारो योनिः कारणं यस्य तस्मिन् [ **अगुरुसारयोनौ** ] **धूपे च वैजयन्तीः** पताकाः **समुत्सर्पति** सति । अतिक्रम्य गच्छति सति ॥

**पुरोपकण्ठोपवनाश्रयाणां कलापिनामुद्धतनृत्यहेतौ ।**
**प्रध्मातशङ्खे परितो दिगन्तांस्तूर्यस्वने मूर्च्छति मङ्गलार्थे ॥ ९ ॥**

किं च । पुरस्योपकण्ठे समीप उपवनान्याश्रयो येषां तेषां [ **पुरोपकण्ठोपवनाश्रयाणाम्** ] **कलापिनां** बर्हिणाम् **उद्धतनृत्यहेतौ** मेघध्वनिसादृश्यात्ताण्डवकारणे । प्रध्माताः पूरिताः शङ्खा यत्र तस्मिन् [ **प्रध्मातशङ्खे** ] । **मङ्गलार्थे** मङ्गलप्रयोजनके । **तूर्यस्वने** वाद्यघोषे **परितः** सर्वतः **दिगन्तान् मूर्च्छति** व्याप्नुवति सति ॥

**मनुष्यवाह्यं चतुरस्रयानमध्यास्य कन्या परिवारशोभि ।**
**विवेश मञ्चान्तरराजमार्गं पतिंवरा क्लृप्तविवाहवेषा ॥ १० ॥**

पतिं वृणोतीति **पतिंवरा** स्वयंवरा । 'अथ स्वयंवरा । पतिंवरा च वर्या च' इत्यमरः । 'संज्ञायां भृतॄवृजि—' इत्यादिना खच्प्रत्ययः । **क्लृप्तविवाहवेषा कन्या** इन्दुमती मनुष्यैर्वाह्यं [ **मनुष्यवाह्यं** ] परिवारेण परिजनेन शोभि [ **परिवारशोभि** ] **चतुरस्रयानं** चतुरस्रवाहनं शिबिकाम् **अध्यास्य** आरुह्य मञ्चान्तरे मञ्चमध्ये यो राजमार्गस्तं [ **मञ्चान्तरराजमार्गम्** ] **विवेश** ॥

---

१ 'धूमं शिखाभावितकेतुमाले' इति दि० पठति । 'धूपे शिखावासितकेतुमाले' इ० च पा०.

२ आर्यावर्ते हि पौराणिकनृपाणां द्विधैव वंशविस्तरः । तथा हि । नारायणनाभिकमलात्प्रथमं ब्रह्मा जज्ञे । तस्य पुत्रो मरीचिः । तत्सुतः कश्यपः । तस्य सूर्यः । तस्य वैवस्वतो मनुः । स एव कृतयुगे सूर्यवंशस्य प्रथमो राजा । त्रेतायां तस्य पुत्र ऐक्ष्वाकुरयोध्यायां राजासीत् । चन्द्रपुत्रो बुधो वैवस्वतमनुकन्यामिलामुपयेमे । इलायां पुरूरवा जातः । स च चन्द्रवंशस्य प्रथमो राजा । ३ 'शिखण्डिनाम्' इ० पा० ४ कंबवः । शमयन्त्यमङ्गलमिति शङ्खाः । 'पायात्स वः कुमुदकुन्दमृणालगौरः शङ्खो हरेः करतलाम्बरपूर्णचन्द्रः । नादेन यस्य सुरशत्रुविलासिनीनां नीव्यो भवन्ति शिथिला जघनस्थलीषु ॥' इ० हे० । शं खनति जनयति, शं खमस्येति वा। शमयत्यलक्ष्मीं वा । ५ 'चतुरन्तयानम्' 'चतुरं च यानम्' इ० पा० ६ 'कौतुकशुद्धवेषा' इ० पा० ७ चतस्रोऽस्रयोऽस्य चतुरस्रं । ८ मञ्चानामन्तरमेव राजमार्गस्तमिति वा ।

**तस्मिन्विधानातिशये विधातुः कन्यामये नेत्रशतैकलक्ष्ये ।**
**निपेतुरन्तःकरणैर्नरेन्द्रा देहैः स्थिताः केवलमासनेषु ॥ ११ ॥**

नेत्रशतानामेकलक्ष्य एकदृश्ये [ **नेत्रशतैकलक्ष्ये** ] **कन्यामये** कन्यारूपे **तस्मिन् विधातुः विधानातिशये** सृष्टिविशेषे **नरेन्द्राः अन्तःकरणैः निपेतुः** । **आसनेषु देहैः केवलं** देहैरेव **स्थिताः** । देहानपि विस्मृत्य तत्रैव दत्तचित्ता बभूवुरित्यर्थः । अन्तःकरणकर्तृके निपतने नरेन्द्राणां कर्तृत्वव्यपदेश आदरातिशयार्थः ॥

**तां प्रत्यभिव्यक्तमनोरथानां महीपतीनां प्रणयाग्रदूत्यः ।**
**प्रवालशोभा इव पादपानां शृङ्गारचेष्टा विविधा बभूवुः ॥ १२ ॥**

**ताम्** इन्दुमतीं **प्रति** । **अभिव्यक्तमनोरथानां** प्ररूढाभिलाषाणां **महीपतीनां** राज्ञां **प्रणयाग्रदूत्यः** । प्रणयः प्रार्थना प्रेम वा । 'प्रणयास्त्वमी । विस्रम्भयाच्ञाप्रेमाणः' इत्यमरः । प्रणयेष्वग्रदूत्यः प्रथमदूतिकाः । प्रणयप्रकाशकत्वसाम्याद्दूतीत्वव्यपदेशः । **विविधाः शृङ्गारचेष्टाः** शृङ्गारविकाराः **पादपानां प्रवालशोभाः** पल्लवसंपदः **इव बभूवुः** उत्पन्नाः । अत्र शृङ्गारलक्षणं रससुधाकरे—' विभावैरनुभावैश्च स्वोचितैर्व्यभिचारिभिः । नीता सदस्यरस्यत्वं रतिः शृङ्गार उच्यते ॥ ' रतिरिच्छाविशेषः । तच्चोक्तं तत्रैव—' यूनोरन्योन्यविषयस्थायिनीच्छा रतिः स्मृता । ' इति । चेष्टाशब्देन तदनुभावविशेषा उच्यन्ते । तेऽपि तत्रैवोक्ताः–' भावं मनोगतं साक्षात्स्वहेतुं व्यञ्जयन्ति ये । तेऽनुभावा इति ख्याता भ्रूविक्षेपास्मितादयः ॥ ते चतुर्धा चित्तगात्रवाग्बुद्ध्यारम्भसंभवाः ॥ ' इति । तत्र गात्रारम्भसंभवांश्चेष्टाशब्दोक्ताननुभावान् ' कश्चित्–' इत्यादिभिः श्लोकैर्वक्ष्यति । शृङ्गाराभासश्चायम् । एकत्रैव प्रतिपादनात् । तदुक्तम्—' एकत्रैवानुरागश्चेत्तिर्यङ्म्लेच्छगतोऽपि वा । योषितां बहुसक्तिश्चेद्रसाभासस्त्रिधा मतः ॥ ' इति ॥

'शृङ्गारचेष्टा बभूवुः' इत्युक्तम् । ता एव दर्शयति—

**कश्चित्कराभ्यामुपगूढनालमालोलपत्राभिहतद्विरेफम् ।**
**रजोभिरन्तःपरिवेषबन्धि लीलारविन्दं भ्रमयाञ्चकार ॥ १३ ॥**

**कश्चित्** राजा **कराभ्यां** पाणिभ्याम् **उपगूढनालं** गृहीतनालम् । [ **आलोलपत्राभिहतद्विरेफम्** ] आलोलैश्चलैः पत्रैरभिहतास्ताडिता द्विरेफा भ्रमरा येन तत्तथो-

---

१ निर्माणकौशले । इ. चा० । रूपनिर्माणकौशलसामग्र्यामित्यर्थः । २ दर्शनमात्रेण तेषां मन आचकर्षेति वाक्यार्थः। हे० चा०. ३ प्रवालोपमया शृङ्गारचेष्टानामभिनवत्वं सूचितम् । हे० ४ शृङ्गं हि मन्मथोद्भेदस्तदागमनहेतुकः । पुरुषप्रमदाभूमिः शृङ्गार इति गीयते '॥ ' अन्योन्यानुरक्तयोः स्त्रीपुंसयोश्चेष्टाविशेषः शृङ्गारः ' इ. रुद्रटः । ' यथास्वमिन्द्रियाणां प्रवृत्तौ वाङ्मनःसुखाभिमानः शृङ्गारः' इति भोजः । यदाह–' चेष्टा भवन्ति पुन्नार्योर्या रत्युन्था विरक्तयोः । संभोगो विप्रयोगश्च शृङ्गारो द्विविधो मतः ॥ ऋतुमाल्यालङ्कारैः प्रियजनगान्धर्वप्रणयसेवाभिः । उपवनगमनविहारैः शृङ्गाररसः समुद्भवति ॥ नयनवदनप्रसादैः श्रुतिमधुरवचोभिर्धृतिप्रमोदैश्च ललितैश्चाङ्गविहारैस्तदभिनयः संप्रयोक्तव्यः ॥ इ. भरतः । हे० चा० । केचित् शृङ्गारस्य त्रैविध्यमाहुः–'अयोगो विप्रयोगश्च संभोगश्चेति स त्रिधा । ' इति । चा० दि० ।

कम्। **रजोभिः** परागैः अन्तः परिवेषं मण्डलं बध्नातीति **अन्तःपरिवेषबन्धि**। **लीलारविन्दं भ्रमयांचकार**। करस्थलीलारविन्दवत्त्वयाहं भ्रमयितव्य इति नृपाभिप्रायः। हस्तघूर्णकोऽयमपलक्षणक इतीन्दुमत्यभिप्रायः॥

**विस्रस्तमंसादपरो विलासी रत्नानुविद्धाङ्गदकोटिलग्नम्।**
**प्रालम्बमुत्कृष्य यथावकाशं निनाय साचीकृतचारुवक्त्रः॥ १४॥**

विलसनशीलः **विलासी**[1]। 'वौ कषलसकत्थस्रम्भः' इति घिनुण्प्रत्ययः। **अपरः** राजा **अंसाद् विस्रस्तं** रत्नानुविद्धं रत्नखचितं यदङ्गदं केयूरं तस्य कोटिलग्नं [ **रत्नानुविद्धाङ्गदकोटिलग्नम्** ] **प्रालम्बम्** ऋजुलम्बिनीं स्रजम्। 'प्रालम्बमृजुलम्बि स्यात्कण्ठात्' इत्यमरः। 'प्रावारम्' इति पाठे तु उत्तरीयं वस्त्रम्। **उत्कृष्य** उद्धृत्य [ **साचीकृतचारुवक्त्रः** ] साचीकृतं तिर्यक्कृतं चारु वक्त्रं यस्य स तथोक्तः सन् **यथावकाशं** स्वस्थानं **निनाय**। प्रावारोत्क्षेपणच्छलेनाहं त्वामेवं परिरप्स्य इति नृपाभिप्रायः। गोपनीयं किंचिदङ्गेऽस्ति ततोयं प्रावृणुत इतीन्दुमत्याभिप्रायः॥

**आकुञ्चिताग्राङ्गुलिना ततोऽन्यः किंचित्समावर्जितनेत्रशोभः।**
**तिर्यग्विसंसर्पिनखप्रभेण पादेन हैमं विलिलेख पीठम्॥ १५॥**

**ततः** पूर्वोक्ताद् **अन्यः** अपरो राजा **किंचित्समावर्जितनेत्रशोभः** ईषदर्वाक्पातितनेत्रशोभः सन्। आकुञ्चिता आभुग्ना अग्राङ्गुल्यो[4] यस्य तेन [ **आकुञ्चिताग्राङ्गुलिना** ] तिर्यग्विसंसर्पिण्यो नखप्रभा यस्य तेन [ **तिर्यग्विसंसर्पिनखप्रभेण** ] च **पादेन हैमं** हिरण्मयं **पीठं** पादपीठं **विलिलेख** लिखितवान्। पादाङ्गुलीनामाकुञ्चनेन त्वं मत्समीपमागच्छेति नृपाभिप्रायः। भूमिविलेखकोऽयमपलक्षणक इतीन्दुमत्याशयः। भूमिविलेखनं तु लक्ष्मीविनाशहेतुः॥

**निवेश्य वामं भुजमासनार्धे तत्संनिवेशादधिकोन्नतांसः।**
**कश्चिद्विवृत्तत्रिकभिन्नहारः सुहृत्समाभाषणतत्परोऽभूत्॥ १६॥**

**कश्चिद्** राजा **वामं भुजमासनार्धे** सिंहासनैकदेशे **निवेश्य** संस्थाप्य **तत्संनिवेशात्** तस्य वामभुजस्य संनिवेशात्संस्थापनाद् [ **अधिकोन्नतांसः** ] अधिकोन्नतः अंसो वामांस एव यस्य स तथोक्तः सन्। विवृत्ते परावृत्ते त्रिके त्रिकप्रदेशे भिन्नहारो लुण्ठितहारः [ **विवृत्तत्रिकभिन्नहारः** ] सन्। 'पृष्ठवंशाधरे त्रिकम्' इत्यमरः।

---

१ इच्छासूचकेयं चेष्टा। २ धीरसंचारिणी दृष्टिर्गतिर्गोवृषभाञ्चिता। स्मितपूर्वं य आलापो विलास इति कीर्तितः॥ इ. भरतः। ३ मुखस्य साचीकरणं प्रालम्बस्य ('वाससः' इ. दि.) यथाप्रदेशानयनं च शृङ्गारसूचकम्। चा० दि०। 'वदति हि संवृतिरेव कामिताम्' इ. चा० ४ अङ्गुलीनामग्राणि अग्राङ्गुलयः। राजदन्तादित्वात्परनिपातः। अग्राश्च ताः अङ्गुल्य इति वा। ५ 'रेषानिर्माणमुर्व्यां छदतृणलवनं पादयोश्चान्यपूजा दन्तानामप्यशौचं वसनमलिनता रूक्षता मूर्धजानाम्॥ संध्यायुग्मे च निद्रा विवसनशयनं ग्रासहास्यातिरेकः स्वाङ्गे वाद्यं च पुंसां निधनमुपनयत्केशवस्यापि लक्ष्मीम्'॥ हे०। 'अनेनेन्दुमतीदर्शने विभ्रमप्रकाशनं संभृतावपि विलासप्रकाशनं नागरता' इ. चा०। 'अनेनेन्दुमतीदर्शनविभ्रमप्रकाशनम्' इ. दि०।

**सुहृत्समाभाषणतत्परोऽभूत्** । वामपार्श्ववर्तिनैव मित्रेण संभाषितुं प्रवृत्त इत्यर्थः । अत एव विवृत्तत्रिकत्वं घटते । त्वया वामाङ्के निवेशितया सहैवं वार्तां करिष्य इति नृपाभिप्रायः । परं दृष्ट्वा पराङ्मुखोऽयं न कार्यकर्तेतीन्दुमत्यभिप्रायः ॥

**विलासिनीविभ्रमदन्तपत्रमापाण्डुरं केतकबर्हमन्यः ।**
**प्रियानितम्बोचितसंनिवेशैर्विपाटयामास युवा नखाग्रैः ॥ १७ ॥**

**अन्यः युवा** विलासिन्याः प्रियाया विभ्रमार्थं दन्तपत्रं दन्तपत्रभूतम् [ **विलासिनीविभ्रमदन्तपत्रम्** ] **आपाण्डुरं केतकबर्हं** केतकदलम् । ' दलेऽपि बर्हम् ' इत्यमरः । प्रियानितम्ब उचितसंनिवेशैरभ्यस्तनिक्षेपणैः [ **प्रियानितम्बोचितसंनिवेशैः** ] **नखाग्रैः विपाटयामास** विदारयामास । अहं तव नितम्ब एवं नखव्रणादीन्दास्यामीति नृपाशयः । तृणच्छेदकवत्पत्रपाटकोऽयमपलक्षणक इतीन्दुमत्याशयः ॥

**कुशेशयाताम्रतलेन कश्चित्करेण रेखाध्वजलाञ्छनेन ।**
**रत्नाङ्गुलीयप्रभयानुविद्धानुदीरयामास सलीलमक्षान् ॥ १८ ॥**

कश्चिद् राजा कुशेशयं शतपत्रमिवाताम्रं तलं यस्य तेन [ **कुशेशयाताम्रतलेन** ] । ' शतपत्रं कुशेशयम् ' इत्यमरः । रेखारूपो ध्वजो लाञ्छनं यस्य तेन [ **रेखाध्वजलाञ्छनेन** ] **करेण** । अङ्गुलीषु भवान्यङ्गुलीयान्यूर्मिकाः । ' अङ्गुलीयकमूर्मिका ' इत्यमरः । ' जिह्वामूलाङ्गुलेश्छः ' इति छप्रत्ययः । रत्नानामङ्गुलीयानि तेषां प्रभया [ **रत्नाङ्गुलीयप्रभया** ] **अनुविद्धान्** व्याप्तान् **अक्षान्** पाशान् । ' अक्षास्तु देवनाः पाशकाश्च ते ' इत्यमरः । **सलीलमुदीरयामास** उच्चिक्षेप । अहं त्वया सहैवं रंस्य इति नृपाभिप्रायः । अक्षचातुर्यं कापुरुषोऽयमितीन्दुमत्याभिप्रायः । ' अक्षैर्मा दीव्य ' इति श्रुतिनिषेधात ॥

**कश्चिद्यथाभागमवस्थितेऽपि स्वसंनिवेशाद्व्यतिलङ्घिनीव ।**
**वज्रांशुगर्भाङ्गुलिरन्ध्रमेकं व्यापारयामास करं किरीटे ॥ १९ ॥**

**कश्चिद्यथाभागं** यथास्थानम् **अवस्थितेऽपि स्वसंनिवेशाद्व्यतिलङ्घिनीव** स्वस्थानाच्चालित इव **किरीटे** वज्राणां किरीटगतानामंशवो गर्भे येषां तान्यङ्गुलिरन्ध्राणि यस्य तम् [ **वज्रांशुगर्भाङ्गुलिरन्ध्रं** ] **एकं करं व्यापारयामास** । किरीटवन्मम शिरसि स्थितामपि त्वां भारं न मन्य इति नृपाभिप्रायः । शिरसि न्यस्तहस्तोऽयमपलक्षण इतीन्दुमत्यभिप्रायः ॥

**ततो नृपाणां श्रुतवृत्तवंशा पुंवत्प्रगल्भा प्रतिहाररक्षी ।**
**प्राक्संनिकर्षं मगधेश्वरस्य नीत्वा कुमारीमवदत्सुनन्दा ॥ २० ॥**

१ ' अनेनेन्दुमत्यासक्तिं गोपितवान् ' इति भावः । इ. चा०. २ एतेनास्यान्यासक्ता स्वचातुरी सूचिता । हे०. एतेनात्मनः कामशास्त्रप्रावीण्यं सूचितम् । चा. दि०. ३ कुशे जले शेते तत्कुशेशयम् । ' अधिकरणे शेतेः ' इत्यच् । ' शयवास—' इत्यलुक् । ४ एतन्महाराजचिह्नम् । हे०. ५ स्थानं; ६ ०वंशाद्व्यति०; शाच्युतलं०, वज्रांशुभिन्ना–विद्ध,–ङ्गु० इ. चा. ७ चपलनामकोऽलङ्कारः । हे०. आत्मप्रकाशनपरा चेष्टा चपलतोच्यते इ. चा०.

ततः अनन्तरं **नृपाणां श्रुतवृत्तवंशा** । श्रुतनृपवृत्तवंशेत्यर्थः । सापेक्षत्वेऽपि गमकत्वात्समासः । **प्रगल्भा** वाग्मिनी **सुनन्दा** सुनन्दाख्या प्रतिहारं रक्षतीति **प्रतिहाररक्षी** द्वारपालिका । कर्मण्यण्प्रत्ययः । 'टिड्ढाणञ्–' इत्यादिना ङीप् । **प्राक्** प्रथमं **कुमारीम्** इन्दुमतीं **मगधेश्वरस्य संनिकर्षं** समीपं **नीत्वा पुंवत्** पुंसा तुल्यम् । 'तेन तुल्यं क्रिया चेद्वतिः' इति वतिप्रत्ययः । **अवदत्** ॥

**असौ शरण्यः शरणोन्मुखानामगाधसत्त्वो मगधप्रतिष्ठः ।**
**राजा प्रजारञ्जनलब्धवर्णः परंतपो नाम यथार्थनामा ॥ २१ ॥**

**असौ राजा** । असाविति पुरोवर्तिनो निर्देशः । एवमुत्तरत्रापि द्रष्टव्यम् । [ **शरणोन्मुखानां** शरणार्थिनां **शरण्यः** शरणे रक्षणे साधुः । 'तत्र साधुः' इति यत्प्रत्ययः । शरणं भवितुमर्हः शरण्य इति नाथनिरुक्तिर्निर्मूलैव । **अगाधसत्त्वो** गम्भीरस्वभावः । 'सत्त्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः।' इति विश्वः । मगधा जनपदाः । तेषु प्रतिष्ठा आस्पदं यस्य स **मगधप्रतिष्ठः** । 'प्रतिष्ठा कृत्यमास्पदम्' इत्यमरः । प्रजारञ्जने लब्धवर्णो विचक्षणः [ **प्रजारञ्जनलब्धवर्णः** ] । यद्वा प्रजारञ्जनेन लब्धोत्कर्षः । परान्छत्रूंस्तापयतीति **परंतपः** परंतपाख्यः । 'द्विषत्परयोस्तापेः' इति खच्प्रत्ययः । 'खचि ह्रस्वः' इति ह्रस्वः । 'अरुर्द्विषदजन्तस्य मुम्' इति मुमागमः । **नाम** इति प्रसिद्धौ । **यथार्थनामा** । शत्रुसन्तापनादिति भावः ॥

**कामं नृपाः सन्तु सहस्रशोऽन्ये राजन्वतीमाहुरनेन भूमिम् ।**
**नक्षत्रताराग्रहसंकुलापि ज्योतिष्मती चन्द्रमसैव रात्रिः ॥ २२ ॥**

**अन्ये नृपाः कामं सहस्रशः सन्तु । भूमिमनेन राजन्वतीं** शोभनराजवतीम् **आहुः** । नैतादृक्कश्चिदस्तीत्यर्थः । 'सुराज्ञि देशे राजन्वान्स्यात्ततोऽन्यत्र राजवान् ।' इत्यमरः । 'राजन्वान्सौराज्ये' इति निपातनात्साधुः । तथा हि । [ **नक्षत्रताराग्रहसंकुलापि** ] नक्षत्रैरश्विन्यादिभिस्ताराभिः साधारणैर्ज्योतिभिर्ग्रहैर्भौमादिभिश्च संकुलापि **रात्रिः चन्द्रमसैव** ज्योतिरस्या अस्तीति **ज्योतिष्मती** । नान्येन ज्योतिषेत्यर्थः ॥

**क्रियाप्रबन्धादयमध्वराणामजस्रमाहूतसहस्रनेत्रः ।**
**शच्याश्चिरं पाण्डुकपोललम्बान्मन्दारशून्यानलकांश्चकार ॥ २३ ॥**

**अयं** परंतपः **अध्वराणां** क्रतूनां **क्रियाप्रबन्धात्** अनुष्ठानसातत्यात् । अविच्छिन्नादनुष्ठानादित्यर्थः । **अजस्रं** नित्यम् **आहूतसहस्रनेत्रः** सन् **चिरं शच्याः अलकान्** पाण्डुकपोलयोर्लम्बान्स्रस्तान् [ **पाण्डुकपोललम्बान्** ] । पचाद्यच् ।

---

१ त्सुकानां. २ अत्रानुप्रासालङ्कारः स्फुट एव । ३ परंतपत्वेन क्रूरत्वं लोकरक्षणाय व्यग्रत्वं चेन्दुमत्या वैराग्यस्य सूचनम् । अजव्यतिरिक्तेषु स्तुतिनिन्दापरत्वात्सर्वत्र लेशालङ्कारोऽवगन्तव्यः । चा० दि०; उक्तं च दण्डिना 'लेशमेकं विदुर्निन्दां स्तुतिं वा देशतः कृताम्' इ० चा० ४ सन्ति. ५ सहस्रसंख्याः. ६ अत्र हि विज्ञानेश्वरः–नक्षत्राण्यश्वयुक्प्रभृतीनि । तारा अश्विन्यादिव्यतिरिक्तानि ज्योतींषि । भौमादयो ग्रहाः । तैः । यद्वा ताराग्रहा भौमादयः पञ्च । तथा मुहूर्तदर्पणे–प्रकाशकौ द्वौ प्रथमौ ग्रहाणां ताराग्रहाः पञ्च ततो परौ द्वौ । इत्या० हे० । ७ एतेन तस्य यज्ञकर्मन्त्ववर्णनेनेन्दुमत्या वैराग्यहेतुत्वं सूचितम् । चा० दि०.

मन्दारैः कल्पद्रुमकुसुमैः शून्यान् [ **मन्दारशून्यान्** ] **चकार** । प्रोषितभर्तृका हि केशसंस्कारं न कुर्वन्ति । 'प्रोषिते मलिना कृशा' इति । 'क्रीडां शरीरसंस्कारं समाजोत्सवदर्शनम् । हास्यं परगृहे यानं त्यजेत्प्रोषितभर्तृका ॥' इति च स्मरणात् ॥

**अनेन चेदिच्छसि गृह्यमाण पाणिं वरेण्येन कुरु प्रवेशे ।**
**प्रासादवातायनसंश्रितानां नेत्रोत्सवं पुष्पपुराङ्गनानाम् ॥ २४ ॥**

**वरेण्येन** वरणीयेन । वृणोतेरौणादिक एण्यप्रत्ययः । **अनेन** राज्ञा **गृह्यमाणं पाणिम् इच्छसि चेत्** । पाणिग्रहणमिच्छसि चेदित्यर्थः । **प्रवेशे** प्रवेशकाले **प्रासादवातायनसंश्रितानां** राजभवनगवाक्षस्थितानां **पुष्पपुराङ्गनानां** पाटलिपुराङ्गनानां **नेत्रोत्सवं कुरु** । सर्वोत्तमानां तासामपि दर्शनीया भविष्यसीति भावः ॥

**एवं तयोक्ते तमवेक्ष्य किंचिद्विस्रंसिदूर्वाङ्कमधूकमाला ।**
**ऋजुप्रणामक्रिययैव तन्वी प्रत्यादिदेशैनमभाषमाणा ॥ २५ ॥**

**एवं तया** सुनन्दया **उक्ते** सति **तं** परंतपम् **अवेक्ष्य** किंचिद्विस्रंसिनी दूर्वाङ्का दूर्वाचिह्ना मधूकमाला गुडपुष्पमाला यस्याः सा [ **किंचिद्विस्रंसिदूर्वाङ्कमधूकमाला** ]। 'मधूके तु गुडपुष्पमधुद्रुमौ' इत्यमरः । वरणे शिथिलप्रयत्नेति भावः । **तन्वी** इन्दुमती **एनं** नृपम् **अभाषमाणा** [ **ऋजुप्रणामक्रियया** ] ऋज्वा भावशून्यया प्रणामक्रियया **एव प्रत्यादिदेश** परिजहार ॥

**तां सैव वेत्रग्रहणे नियुक्ता राजान्तरं राजसुतां निनाय ।**
**समीरणोत्थेव तरङ्गलेखा पद्मान्तरं मानसराजहंसीम् ॥ २६ ॥**

**सैव** नान्या । चित्तज्ञत्वादिति भावः । **वेत्रग्रहणे नियुक्ता** दौवारिकी सुनन्दा **तां राजसुतां राजान्तरम्** अन्यराजानं **निनाय** । नयतिर्द्विकर्मकः । कथमिव । **समीरणोत्था** वातोत्पन्ना **तरङ्गलेखा** ऊर्मिपंक्तिर्मानसे सरसि या राजहंसी तां [ **मानसराजहंसीं** ] **पद्मान्तरमिव** ॥

**जगाद चैनामयमङ्गनाथः सुराङ्गनाप्रार्थितयौवनश्रीः ।**
**विनीतनागः किल सूत्रकारैरैन्द्रं पदं भूमिगतोऽपि भुङ्क्ते ॥ २७ ॥**

**एनाम्** इन्दुमतीं **जगाद च** । किमिति । **अयमङ्गनाथः** अङ्गदेशाधीश्वरः [ **सुराङ्गनाप्रार्थितयौवनश्रीः** ] सुराङ्गनाभिः प्रार्थिता काभिता यौवनश्रीर्यस्य स तथोक्तः । पुरा किलैनमिन्द्रसाहाय्यार्थमिन्द्रपुरगामिनमकामयन्ताप्सरस इति प्रसिद्धिः । किं च ।

---

१ एतेन भोगाभावो ध्वन्यते । तथा पराशरः—दूरस्थानामविद्यानां मोक्षधर्मानुयायिनाम् । शूराणां निर्धनानां च न देया कन्यका बुधैः ॥ इति. २ संस्थितानां. ३ अनेनात्मनोनङ्गीकारः सुनन्दया सूचितः । इ० चा०. ४ विवाहसमये कन्या मङ्गलार्थं दूर्वाङ्कमधूकमालां कण्ठे बिभर्ति । इ. मु०. ५ सुनन्दाया इन्दुमतीबुद्ध्यनुसरणं सूचयत्येवकारः । हे० चा०. ६ राजहंस्युपमया सारासारविवेकित्वं पद्मोपमया राज्ञः श्रीनिवासत्वं सूचितमिति हे० ।

**सूत्रकारैः** गजशास्त्रकृद्भिः पालकाप्यादिभिर्महर्षिभिः **विनीतनागः** शिक्षितगजः । **किल** इति ऐतिह्ये । अत एव **भूमिगतः अपि ऐन्द्रं पदम्** ऐश्वर्यं **भुङ्क्ते** । भूलोक एव स्वर्गसुखमनुभवतीत्यर्थः । गजाप्सरोदेवर्षिसेव्यत्वमैन्द्रपदशब्दार्थः । पुरा किल कुतश्चिच्छापकारणाद्भुवमवतीर्णं दिग्गजवर्गमालोक्य स्वयमशक्तैरिन्द्राभ्यनुज्ञया नीतैर्देवर्षिभिः प्रणीतेन शास्त्रेण गजान्वशीकृत्य भुवि संप्रदायं प्रावर्तयदिति कथा गीयते ॥

**अनेन पर्यासयताश्रुबिन्दून्मुक्ताफलस्थूलतमान्स्तनेषु ।**
**प्रत्यर्पिताः शत्रुविलासिनीनामुन्मुच्य सूत्रेण विनैव हाराः ॥ २८ ॥**

**शत्रुविलासिनीनां स्तनेषु मुक्ताफलस्थूलतमानश्रुबिन्दून्** । 'अस्रमश्रुणि शोणिते' इति विश्वः । **पर्यासयता** प्रस्तारयता । भर्तृवधादिति भावः । **अनेन** अङ्गनाथेन **उन्मुच्य** आक्षिप्य **सूत्रेण विना हारा एव प्रत्यर्पिताः** । अविच्छिन्नाश्रुबिन्दुप्रवर्तनादुत्सूत्रहारार्पणमेव कृतमिवेत्युत्प्रेक्षा गम्यते ॥

**निसर्गभिन्नास्पदमेकसंस्थमस्मिन्द्वयं श्रीश्च सरस्वती च ।**
**कान्त्या गिरा सूनृतया च योग्या त्वमेव कल्याणि तयोस्तृतीया ।२९।**

[ **निसर्गभिन्नास्पदम्** ] निसर्गतः स्वभावतो भिन्नास्पदं भिन्नाश्रयम् । सहावस्थानविरोधीत्यर्थः । **श्रीश्च सरस्वती च** इति **द्वयम् अस्मिन्** अङ्गनाथ एकत्र संस्था स्थितिर्यस्य तद् **एकसंस्थम्** । उभयमिह सङ्गतमित्यर्थः । हे **कल्याणि** । 'बह्वादिभ्यश्च' इति ङीप् । **कान्त्या सूनृतया** सत्यप्रियया **गिरा च योग्या** संसर्गार्हा **त्वमेव तयोः** श्रीसरस्वत्योः **तृतीया** । समानगुणयोर्युवयोर्दांपत्यं युज्यत एवेति भावः । दक्षिणनायकत्वं चास्य ध्वन्यते । तदुक्तम्—'तुल्योऽनेकत्र दक्षिणः' इति ॥

**अथाङ्गराजादवतार्य चक्षुर्याहीति जन्यामवदत्कुमारी ।**
**नासौ न काम्यो न च वेद सम्यग्द्रष्टुं न सा भिन्नरुचिर्हि लोकः॥३०॥**

**अथ कुमारी अङ्गराजात् चक्षुरवतार्य** । अपनीयेत्यर्थः । **जन्यां** मातृसखीम् । 'जन्या मातृसखीमुदोः' इति विश्वः । सुनन्दां **याहि** गच्छ **इत्यवदत्** । 'यातेति जन्यानवदत्' इति पाठे जनीं वधूं वहन्तीति जन्या वधूबन्धवः । तान्यात गच्छतेत्यवदत् । 'जन्यो वरवधूज्ञातिप्रियतुल्यहितेऽपि च ।' इति विश्वः । अथ वा जन्या

---

१ पालकाप्यगौतमादयस्तैः । चा० । अत्र हेमाद्रिः–राजपुत्रमृगचर्मादयो गजशास्त्रप्रवक्तारः । पालकाप्ये कथाप्यस्ति । अथैकदाङ्गराजः प्रथमं कुतोपि देशाद्दिवोवतीर्णमृषिणा पालकाप्येन पालितं दिग्गजानां कुलमवलोक्य विस्मितस्तद्ग्रहणोत्सुकः स्वयमशक्तः सन्निन्द्रमुपेत्य तदनुज्ञातैर्मृगचर्मादिभिर्महर्षिभिस्तद्गजकुलं ग्राहयित्वा शास्त्राणि कारयित्वा च शिक्षयामास । तदादिर्भूमौ गजसंतानः प्रवर्तते । अनेनर्षिसेव्यत्वमुक्तम् । भङ्ग्या स्वर्गप्रवृत्तोक्ता वा । २ मुक्ताफलसाम्यात्कज्जलाभाव उक्तः । 'अतिवीररसवर्णनं वैराग्यहेतुः' इ० चा० दि०. ३ प्रायेण हि धनिका मूर्खा विद्वांसश्चाकिंचना भवन्तीति भावः । ४ नाथात्. ५ यान्यानिति वल्लभादयः पठन्ति । यान्यानिति पाठे याने साधवो यान्याः इति दि० व्याचष्ट च । यानान्वाहानिति व० ।

वधूभृत्याः । 'भृत्याश्चापि नवोढायाः' इति केशवः । 'संज्ञायां जन्या' इति यत्प्रत्ययान्तो निपातः । यदत्राह वृत्तिकारः—'जनीं वधूं वहन्तीति जन्या जामातुर्वयस्याः' इति । यच्चामरः—'जन्याः स्निग्धा वरस्य ये' इति । तत्सर्वमुपलक्षणार्थमित्यविरोधः । न चायमङ्गराजनिषेधो दृश्यदोषान्नापि द्रष्टृदोषादित्याह—नेत्यादिना । **असौ** अङ्गराजः **काम्यः** कमनीयः **न** इति **न** । किं तु काम्य एवेत्यर्थः । **सा** कुमारी **च सम्यग्द्रष्टुं** विवेक्तुं **न वेद** इति **न** । वेदेत्यर्थः । किं तु **लोकः** जनो **भिन्नरुचिर्हि** । सुचिरमपि किंचित्कस्मैचिन्न रोचते । किं कुर्मो न हीच्छा नियन्तुं शक्यत इति भावः ॥

## ततः परं दुष्प्रसहं द्विषद्भिर्नृपं नियुक्ता प्रतिहारभूमौ ।
## निदर्शयामास विशेषदृश्यमिन्दुं नवोत्थानमिवेन्दुमत्यै ॥ ३१ ॥

**ततः** अनन्तरं **प्रतिहारभूमौ** द्वारदेशे **नियुक्ता** दौवारिकी । 'स्त्री द्वार्द्वारं प्रतीहारः' इत्यमरः । **द्विषद्भिः** शत्रुभिः **दुष्प्रसहं** दुःसहम् । शूरमित्यर्थः । [ **विशेषदृश्यम्** ] विशेषेण दृश्यं दर्शनीयम् । रूपवन्तमित्यर्थः । **परम्** अन्यं **नृपम्** । **नवोत्थानं** नवोदयं **इन्दुमिव** । **इन्दुमत्यै निदर्शयामास** ॥

## अवन्तिनाथोऽयमुदग्रबाहुर्विशालवक्षास्तनुवृत्तमध्यः ।
## आरोप्य चक्रभ्रममुष्णतेजास्त्वष्ट्रेव यत्नोल्लिखितो विभाति ॥ ३२ ॥

**उदग्रबाहुः** दीर्घबाहुः **विशालवक्षाः तनुवृत्तमध्यः** कृशवर्तुलमध्यः **अयं** राजा **अवन्तिनाथः** अवन्तिदेशाधीश्वरः । **त्वष्ट्रा** विश्वकर्मणा । भर्तुस्तेजोवेगमसहमानया दुहित्रा संज्ञादेव्या प्रार्थितेनेति शेषः । **चक्रभ्रमं** चक्राकारं शस्त्रोत्तेजनयन्त्रम् । 'भ्रमोऽम्बुनिर्गमे भ्रान्तौ कुण्डाख्ये शिल्पियन्त्रके ।' इति विश्वः । **आरोप्य** [ **यत्नोल्लिखितः** ] यत्नेनोल्लिखितः **उष्णतेजाः** सूर्यः **इव विभाति** । अत्र मार्कण्डेयः—'विश्वकर्मा त्वनुज्ञातः शाकद्वीपे विवस्वता । भ्रममारोप्य तत्तेजःशातनायोपचक्रमे ॥' इति ॥

## अस्य प्रयाणेषु समग्रशक्तेरग्रेसरैर्वाजिभिरुत्थितानि ।
## कुर्वन्ति सामन्तशिखामणीनां प्रभाप्ररोहास्तमयं रजांसि ॥ ३३ ॥

**समग्रशक्तेः** शक्तित्रयसंपन्नस्य **अस्य** अवन्तिनाथस्य **प्रयाणेषु** जैत्रयात्रासु **अग्रेसरैर्वाजिभिः** अश्वैः **उत्थितानि रजांसि** [ **सामन्तशिखामणीनां** ] सामन्तानां समन्ताद्भवानां राज्ञां ये शिखामणयश्चूडामणयस्तेषां **प्रभाप्ररोहास्तमयं** तेजोङ्कुरनाशं **कुर्वन्ति** । नासीरैरेवास्य शत्रवः पराजीयन्त इति भावः ॥

---

१ अनुरूपभावः किराते–विचित्ररूपाः खलु चित्तवृत्तयः । १–३७. २ परेषां इ. पा. ३ कान्तं इ. पा. ४ अवभाति इ. पा. ५ उपमा, उत्प्रेक्षा वालंकारः । ६ उद्धतानि. ७ शिरो॰. इ. पा. ८ प्रभावोत्साहमन्त्रजास्तिस्रः शक्तयः । तत्र कोषदण्डजं तेजः प्रभुशक्तिः । विक्रमादिनोन्नतिरुत्साहशक्तिः । सन्धिविग्रहादीनां मन्त्रेण यथावत्स्थापनं मन्त्रशक्तिः । ९ नासीरैः—अग्रयायिभिः ।

**असौ महाकालनिकेतनस्य वसन्नदूरे किल चन्द्रमौलेः ।**
**तमिस्रपक्षेऽपि सह प्रियाभिर्ज्योत्स्नावतो निर्विशति प्रदोषान् ॥ ३४ ॥**

**असौ** अवन्तिनाथः । महाकालं नाम स्थानविशेषः । तदेव निकेतनं स्थानं यस्य तस्य [**महाकालनिकेतनस्य**] **चन्द्रमौलेः** ईश्वरस्य **अदूरे** समीपे **वसन्** । अत एव हेतोः **तमिस्रपक्षे** कृष्णपक्षे **अपि प्रियाभिः सह ज्योत्स्नावतः प्रदोषान्** रात्रीः **निर्विशति** अनुभवति **किल** । नित्यज्योत्स्नाविहारत्वमेतस्यैव नान्यस्येति भावः ॥

**अनेन यूना सह पार्थिवेन रम्भोरु कच्चिन्मनसो रुचिस्ते ।**
**सिप्रातरङ्गानिलकम्पितासु विहर्तुमुद्यानपरम्परासु ॥ ३५ ॥**

रम्भे कदलीस्तम्भाविवोरू यस्याः सा रम्भोरूस्तस्याः संबुद्धिः । हे **रम्भोरु** । 'ऊरूत्तरपदादौपम्ये' इत्यूङ्प्रत्ययः । नदीत्वाद्ध्रस्वः । **यूना अनेन पार्थिवेन सह** । [**सिप्रातरङ्गानिलकम्पितासु**] सिप्रा नाम तत्रत्या नदी तस्यास्तरङ्गाणामनिलेन कम्पितासु [**उद्यानपरम्परासु**] उद्यानानां परम्परासु पंक्तिषु । **विहर्तुं ते** तव **मनसः रुचिः कच्चित्** । स्पृहास्ति किमित्यर्थः । 'अभिष्वङ्गे स्पृहायां च गभस्तौ च रुचिः स्त्रियाम्' इत्यमरः ॥

**तस्मिन्नभिद्योतितबन्धुपद्मे प्रतापसंशोषितशत्रुपङ्के ।**
**बबन्ध सा नोत्तमसौकुमार्या कुमुद्वती भानुमतीव भावम् ॥ ३६ ॥**

**उत्तमसौकुमार्या** उत्कृष्टाङ्गमार्दवा **सा** इन्दुमती । **अभिद्योतितबन्धुपद्मे** अभिद्योतितान्युल्लसितानि बन्धव एव पद्मानि येन तस्मिन् । [**प्रतापसंशोषितशत्रुपङ्के**] प्रतापेन तेजसा संशोषिताः शत्रव एव पङ्काः कर्दमा येन तस्मिन् । **तस्मिन्** अवन्तिनाथे **कुमुद्वती** । 'कुमुदनडवेतसेभ्यो ड्मतुप्' इति ड्मतुप्प्रत्ययः । **भानुमति** अंशुमति **इव** । **भावं** चित्तं **न बबन्ध** । न तत्रानुरागमकरोदित्यर्थः । बन्धूनां पद्मत्वेन शत्रूणां पङ्कत्वेन च निरूपणं राज्ञः सूर्यसाम्यार्थम् ॥

**तामग्रतस्तामरसान्तराभामनूपराजस्य गुणैरनूनाम् ।**
**विधाय सृष्टिं ललितां विधातुर्जगाद भूयः सुदतीं सुनन्दा ॥ ३७ ॥**

**सुनन्दा तामरसान्तराभां** पद्मोदरतुल्यकान्तिम् । कनकगौरीमित्यर्थः । **गुणैः अनूनाम्** । अधिकामित्यर्थः । [**सुदतीं**] शोभना दन्ता यस्याः सा सुदती । 'वयसि दन्तस्य दतृ' इति दत्रादेशः । 'उगितश्च' इति ङीप् । ताम् । **तां** प्रकृतां प्रसिद्धां वा **विधातुः ललितां सृष्टिम्** । मधुरनिर्माणां स्त्रियमित्यर्थः । अनुगता आपो येषु तेऽनूपा नाम देशाः । 'ऋक्पूरब्धूःपथामानक्षे' इत्यप्रत्ययः समासान्तः । 'ऊदनोर्देशे' इत्यूदादेशः । तेषां राज्ञः **अनूपराजस्य अग्रतः विधाय** व्यवस्थाप्य **भूयः** पुनः **जगाद** ॥

---

१ चन्द्रार्धमौलेर्निवसन्नदूरे इ. पा. २ उज्जयिन्यां महाकालाख्यं शिवस्य स्थानं प्रसिद्धम् । उक्तं च स्कान्दे—आकाशे तारकं लिङ्गं पाताले हाटकेश्वरम् । मर्त्यलोके महाकालं दृष्ट्वा काममवाप्नुयात् ॥ अस्य वर्णनं मेघदूते ( श्लो० ३५-३८ ) कविनैव कृतं द्रष्टव्यम् । ३ एतेन स्वर्गमप्यतिरुक्ता । हे०. ४ समुद्यो०. ५ अनेन कुमार्याः सौकुमार्यं राजश्रेष्ठत्वं ध्वनितम् । ६ निधाय.

**संग्रामनिर्विष्टसहस्रबाहुरष्टादशद्वीपनिखातयूपः ।**
**अनन्यसाधारणराजशब्दो बभूव योगी किल कार्तवीर्यः ॥ ३८ ॥**

[ **संग्रामनिर्विष्टसहस्रबाहुः** ] संग्रामेषु युद्धेषु निर्विष्टा अनुभूताः सहस्रं बाहवो यस्य स तथोक्तः । युद्धादन्यत्र द्विभुज एव दृश्यत इत्यर्थः । [ **अष्टादशद्वीपनिखातयूपः** ] अष्टादशसु द्वीपेषु निखाताः स्थापिता यूपा येन स तथोक्तः । सर्वक्रतुयाजी सार्वभौमश्चेति भावः । जरायुजादिसर्वभूतरञ्जनादनन्यसाधारणो राजशब्दो यस्य स तथोक्तः [ **अनन्यसाधारणराजशब्दः** ] । **योगी** ब्रह्मविद्वानित्यर्थः । स किल भगवतो दत्तात्रेयाल्लब्धयोग इति प्रसिद्धिः । कृतवीर्यस्यापत्यं पुमान् **कार्तवीर्यः** नाम राजा **बभूव किल** इति । अयं चास्य महिमा सर्वोऽपि दत्तात्रेयवरप्रसादलब्ध इति भारते दृश्यते ॥

**अकार्यचिन्तासमकालमेव प्रादुर्भवंश्चापधरः पुरस्तात् ।**
**अन्तःशरीरेष्वपि यः प्रजानां प्रत्यादिदेशाविनयं विनेता ॥ ३९ ॥**

**विनेता** शिक्षकः **यः** कार्तवीर्यः । [ **अकार्यचिन्तासमकालम्** ] अकार्यस्यासत्कार्यस्य चिन्तया अहं चौर्यादिकं करिष्यामीति बुद्ध्या समकालमेककालम् यथा तथा **एव पुरस्ताद्** अग्रे **चापधरः प्रादुर्भवन् प्रजानां** जनानाम् । ‘ प्रजा स्यात्संततौ जने ’ इत्यमरः । **अन्तःशरीरेषु** अन्तःकरणेषु । शरीरशब्देनेन्द्रियं लक्ष्यते । **अविनयमपि प्रत्यादिदेश** । मानसापराधमपि निवारयामासेत्यर्थः । अन्ये तु वाक्कायापराधमात्रप्रतिकर्तार इति भावः ॥

**ज्याबन्धनिष्पन्दभुजेन यस्य विनिःश्वसद्वक्त्रपरम्परेण ।**
**कारागृहे निर्जितवासवेन लङ्केश्वरेणोषितमा प्रसादात् ॥ ४० ॥**

[ **ज्याबन्धनिष्पन्दभुजेन** ] ज्याया मौर्व्या बन्धेन बन्धनेन निष्पन्दा निश्चेष्टा भुजा यस्य तेन । [ **विनिःश्वसद्वक्त्रपरम्परेण** ] विनिःश्वसती ज्याबन्धोपरोधाद्दीर्घं निःश्वसती वक्त्रपरम्परा दशमुखी यस्य तेन । **निर्जितवासवेन** इन्द्रविजयिना । अत्रेन्द्रादयोऽप्यनेन जितप्राया एवेति भावः । **लङ्केश्वरेण** दशास्येन **यस्य** कार्तवीर्यस्य **कारागृहे** बन्धनागारे । ‘ कारा स्याद्बन्धनालये ’ इत्यमरः । **आ प्रसादाद्** अनुग्रहपर्यन्तम् **उषितं** स्थितम् । ‘ नपुंसके भावे क्तः ’ । एतत्प्रसाद एव तस्य मोक्षोपायो न तु क्षात्रमिति भावः ॥

---

१ द्विगता द्वयोर्दिशोर्वा गता आपोऽत्रेति द्वीपः । अष्टादश द्वीपा विष्णुपुराणोक्ता यथा—‘जम्बुप्लक्षाह्वयौ द्वीपौ शाल्मलिश्चापरो द्विज । कुशः क्रौञ्चस्तथा शाकः पुष्करश्चैव सप्तमः । एते द्वीपाः समुद्रैस्तु सप्त सप्तभिरावृताः ॥ इन्द्रद्वीपः कशेरुमांस्ताम्रवर्णो गभस्तिमान् । नागद्वीपस्तथा सौम्यो गन्धर्वस्त्वथ वारुणः ॥ इलावृतं तथा सव चन्द्रादित्यसमप्रभम् । इलावृतस्य मध्ये यो मेरुः कनकपर्वतः । इत्थमष्टादश द्वीपाः समाख्याता महर्षिभिः ॥’ एतेषु मध्ये सप्तैव मुख्या द्वीपा इति केचित् । नव मुख्यद्वीपा नवोपद्वीपा इत्यन्ये चाहुः । २ ‘न नूनं कार्तवीर्यस्य गतिं यास्यन्ति पार्थिवाः । यज्ञैर्दानैस्तपोभिर्वा प्रश्रयेण श्रुतेन वा ॥’ इ. विष्णुपुराणम् । ३ धरतीति धरश्चापस्य धरश्चापधरः । ४ ज्याघातनिर्विष्ट. ५ दशाननेन. ६ पूर्वं हि जलकेलिलोलविलासिनीस्नानार्थार्जुनभुजपरिघरुद्धरेवावारिप्रवाहापहृतशिवलिङ्गार्चारुषितं रणरसागतं रावणमुद्धे रणे जित्वा कार्तवीर्योऽर्जुनो निजचापज्यावन्धेन बबन्धेत्यागमः इति हे. व. ।

**तस्यान्वये भूपतिरेष जातः प्रतीप इत्यागमवृद्धसेवी ।
येन श्रियः संश्रयदोषरूढं स्वभावलोलेत्ययशः प्रमृष्टम् ॥ ४१ ॥**

**आगमवृद्धसेवी** श्रुतवृद्धसेवी **प्रतीप इति** ख्यात इति शेषः । **एष भूपतिस्तस्य** कार्तवीर्यस्य **अन्वये** वंशे **जातः** । **येन** प्रतीपेन [ **संश्रयदोषरूढं** ] संश्रयस्याश्रयस्य पुंसो दौर्बल्यव्यसनादिभी रूढमुत्पन्नं **श्रियः** सम्बन्धि **स्वभावलोला** प्रकृतिचञ्चला **इति** एवंरूपम् **अयशः** दुष्कीर्तिः **प्रमृष्टं** निरस्तम् । दुष्टाश्रयत्यागशीलायाः श्रियः प्रकृतिचापलप्रवादो मूढजनपरिकल्पित इत्यर्थः । अयं तु दोषराहित्यान्न कदाचिदपि श्रिया त्यज्यत इति भावः॥

**आयोधने कृष्णगतिं सहायमवाप्य यः क्षत्रियकालरात्रिम् ।
धारां शितां रामपरश्वधस्य संभावयत्युत्पलपत्रसाराम् ॥ ४२ ॥**

यः प्रतीपः **आयोधने** युद्धे **कृष्णगतिं** कृष्णवर्त्मानमग्निं **सहायमवाप्य** [ **क्षत्रियकालरात्रिम्** ] क्षत्रियाणां कालरात्रिम् । संहाररात्रिमित्यर्थः । **रामपरश्वधस्य** जामदग्न्यपरशोः । 'द्वयोः कुठारः स्वधितिः परशुश्च परश्वधः' इत्यमरः । **शितां** तीक्ष्णां **धारां** मुखम् । 'खड्गादीनां च निशितमुखे धारा प्रकीर्तिता ।' इति विश्वः । [ **उत्पलपत्रसाराम्** ] उत्पलपत्रस्य सार इव सारो यस्यास्तां तथाभूतां **संभावयति** मन्यते । एतन्नगरजिगीषयागतान्रिपून्स्वयमेव धक्ष्यामीति भगवता वैश्वानरेण दत्तवरोऽयं राजा । दह्यन्ते च तथागताः शत्रव इति भारते कथानुसंधेया ॥

**अस्याङ्कलक्ष्मीर्भव दीर्घबाहो माहिष्मतीवप्रनितम्बकाञ्चीम् ।
प्रासादजालैर्जलवेणिरम्यां रेवां यदि प्रेक्षितुमस्ति कामः ॥ ४३ ॥**

**दीर्घबाहो**: **अस्य** प्रतीपस्य **अङ्कलक्ष्मीर्भव**। एनं वृणीष्वेत्यर्थः । अनेनायं विष्णुतुल्य इति ध्वन्यते । [ **माहिष्मतीवप्रनितम्बकाञ्चीं** ] माहिष्मती नामास्य नगरी । तस्या वप्रः प्राकार एव नितम्बः तस्य काञ्चीं रशनाभूताम् । [ **जलवेणिरम्यां** ] जलानां वेण्या प्रवाहेण रम्याम् । 'ओघः प्रवाहो वेणी च' इति हलायुधः । **रेवां** नर्मदां **प्रासादजालैः** गवाक्षैः । 'जालं समूह आनायो गवाक्षक्षारकावपि ।' इत्यमरः । **प्रेक्षितुं कामः** इच्छा **अस्ति यदि** ॥

**तस्याः प्रकामं प्रियदर्शनोऽपि न स क्षितीशो रुचये बभूव ।
शरत्प्रमृष्टाम्बुधरोपरोधः शशीव पर्याप्तकलो नलिन्याः ॥ ४४ ॥**

---

१ अत्र कथा महाभारते सभापर्वणि—अग्निर्हि नीलस्य राज्ञः सुदर्शनां तनयां चकमे । ब्राह्मणरूपेण तां तमयाचत च । विप्ररूपधारिणं तमग्निं ज्ञात्वा राजा सविनयं तां तस्मायदात् । 'प्रतिगृह्य च तां सुभ्रु नीलराज्ञः सुतां तदा । चक्रे प्रसादं भगवांस्तस्य राज्ञो विभावसुः ॥ वरेण च्छन्दयामास तं नृपं स्विष्टकृत्तमः । अभयं च स जग्राह स्वसैन्ये वै महीपतिः ॥ ततः प्रभृति ये केचिदज्ञानात्तां पुरीं नृपाः । जिगीषन्ति बलाद्राजंस्ते दह्यन्ते स्म वह्निना ॥' इति ।
२ अङ्कस्थायास्तवालिङ्गनमेव स्यादिति दीर्घबाहुत्वम् । हे०.

**प्रकामं** [ **प्रियदर्शनः** ] प्रियं प्रीतिकरं दर्शनं यस्य सः **अपि** । दर्शनीयोऽपीत्यर्थः । **स क्षितीशः** [ **शरत्प्रमृष्टाम्बुधरोपरोधः** ] शरदा प्रमृष्टाम्बुधरोपरोधो निरस्तमेघावरणः **पर्याप्तकलः** पूर्णकलः **शशी नलिन्या इव** । **तस्याः** इन्दुमत्याः **रुचये न बभूव** । रुचिं नाजीजनदित्यर्थः । लोको भिन्नरुचिरिति भावः ॥

**सा शूरसेनाधिपतिं सुषेणमुद्दिश्य लोकान्तरगीतकीर्तिम् ।**
**आचारशुद्धोभयवंशदीपं शुद्धान्तरक्ष्या जगदे कुमारी ॥ ४५ ॥**

[ **लोकान्तरगीतकीर्तिम्** ] लोकान्तरे स्वर्गादावपि गीतकीर्तिम् । [ **आचारशुद्धोभयवंशदीपम्** ] आचारेण शुद्धयोरुभयोर्वंशयोर्मातापितृकुलयोर्दीपं प्रकाशकम् । उभयवंशेत्यत्रोभयपक्षवन्निर्वाहः । [ **शूरसेनाधिपतिं** ] शूरसेनानां देशानामधिपतिं **सुषेणं** नाम नृपतिम् **उद्दिश्य** अभिसंधाय **शुद्धान्तरक्ष्या** अन्तःपुरपालिकया । 'कर्मण्यण्' । 'टिड्ढाणञ्–' इति ङीप् । **सा कुमारी जगदे** ॥

**नीपान्वयः पार्थिव एष यज्वा गुणैर्यमाश्रित्य परस्परेण ।**
**सिद्धाश्रमं शान्तमिवैत्य सत्त्वैर्नैसर्गिकोऽप्युत्ससृजे विरोधः ॥ ४६ ॥**

**यज्वा** विधिवदिष्टवान् । 'सुयजोर्ङ्वनिप्' इति ङ्वनिप्प्रत्ययः । **एष पार्थिवः** । नीपो नामान्वयोऽस्येति **नीपान्वयः** नीपवंशजः । **यं** सुषेणम् **आश्रित्य गुणैः** ज्ञानमौनादिभिः । **शान्तं** प्रसन्नं **सिद्धाश्रमम्** ऋष्याश्रमम **एत्य** प्राप्य **सत्त्वैः** गजसिंहादिभिः प्राणिभिः **इव** । **नैसर्गिकः** स्वाभाविकः **अपि परस्परेण विरोधः उत्ससृजे** त्यक्तः ॥

**यस्यात्मगेहे नयनाभिरामा कान्तिर्हिमांशोरिव संनिविष्टा ।**
**हर्म्याग्रसंरूढतृणाङ्कुरेषु तेजोऽविषह्यं रिपुमन्दिरेषु ॥ ४७ ॥**

**हिमांशोः** कान्तिश्चन्द्रकिरणाः **इव** [ **नयनाभिरामा** ] नयनयोरभिरामा **यस्य** सुषेणस्य **कान्तिः** शोभा **आत्मगेहे** स्वभवने **संनिविष्टा** संक्रान्ता । **अविषह्यं** विसोढुमशक्यं **तेजः** प्रतापस्तु । [ **हर्म्याग्रसंरूढतृणाङ्कुरेषु** ] हर्म्याग्रेषु धनिकमन्दिरप्रान्तेषु । 'हर्म्यादि धनिनां वासः' इत्यमरः । संरूढास्तृणाङ्कुरा येषां तेषु । शून्येष्वित्यर्थः । **रिपुमन्दिरेषु** शत्रुनगरेषु । 'मन्दिरं नगरे गृहे' इति विश्वः । संनिविष्टम् । स्वजनाह्लादको द्विषंतपश्चेति भावः ॥

**यस्यावरोधस्तनचन्दनानां प्रक्षालनाद्वारिविहारकाले ।**
**कलिन्दकन्या मथुरां गतापि गङ्गोर्मिसंसक्तजलेव भाति ॥ ४८ ॥**

---

१ नृपपक्षे चतुःषष्टिः कलाः । हे. चा०. २ नलिन्युपमानेन पद्मिनीजातित्वम् । हे०. ३ देशान्तर. ४ शय्यां जहत्युभयपक्षविनीतनिद्राः [ ५. ७२ ] इत्यस्य व्याख्यानं द्रष्टव्यम् । ५ मवाप्य, भिर्वाप्र०. ६ ०देहे. ७ एतेनातिक्रूरत्वं वैराग्यकारणम् । चा० दि० । ८ संरक्त.

**यस्य** सुषेणस्य **वारिविहारकाले** जलक्रीडासमये [ **अवरोधस्तनचन्दनानाम्** ] अवरोधानामन्तःपुराङ्गनानां स्तनेषु चन्दनानां मलयजानां **प्रक्षालनाद्** हेतोः **कलिन्दकन्या** कलिन्दो नाम शैलस्तत्कन्या यमुना । 'कालिन्दी सूर्यतनया यमुना शमनस्वसा ।' इत्यमरः । [ **मथुरां** ] मथुरा नामास्य संज्ञा नगरी । तां **गता अपि** । गङ्गाया विप्रकृष्टापीत्यर्थः । मथुरायां गङ्गाभावं सूचयत्यपिशब्दः । कालिन्दीतीरे मथुरा लवणासुरवधकाले शत्रुघ्नेन निर्मास्यत इति वक्ष्यति । तत्कथमधुना मथुरासंभव इति चिन्त्यम् । 'मथुरा मधुरापुरी' इति शब्दभेदः । यद्वा सान्येति । [ **गङ्गोर्मिसंसक्तजला** ] गङ्गाया भागीरथ्या ऊर्मिभिः संसक्तजला **इव भाति** । धवलचन्दनसंसर्गात्प्रयागादन्यत्राप्यत्र गङ्गासंगतेव भातीत्यर्थः । 'सितासिते हि गङ्गायमुने' इति घण्टापथः ॥

**त्रस्तेन[2] तार्क्ष्यात्किल कालियेन मणिं विसृष्टं यमुनौकसा यः ।**
**वक्षःस्थलव्यापिरुचं दधानः सकौस्तुभं ह्रेपयतीव कृष्णम्[3] ॥ ४९ ॥**

**तार्क्ष्याद्** गरुडात् **त्रस्तेन** [ **यमुनौकसा** ] यमुना ओकः स्थानं यस्य तेन । **कालियेन** नाम नागेन **विसृष्टं किल** अभयदाननिष्क्रयत्वेन दत्तम् । किल इत्यैतिह्ये । **वक्षःस्थलव्यापिरुचं मणिं दधानः यः** सुषेणः **सकौस्तुभं कृष्णं** विष्णुं **ह्रेपयतीव** व्रीडयतीव । 'अर्तिह्री–' इत्यादिना पुगागमः । कौस्तुभमणेरप्युत्कृष्टोऽस्य मणिरिति भावः ॥

**संभाव्य भर्तारममुं युवानं मृदुप्रवालोत्तरपुष्पशय्ये[4] ।**
**वृन्दावने चैत्ररथादनूने[5] निर्विश्यतां सुन्दरि यौवनश्रीः ॥ ५० ॥**

**युवानम् अमुं** सुषेणं **भर्तारं संभाव्य** मत्वा । पतित्वेनाङ्गीकृत्येत्यर्थः । [ **मृदुप्रवालोत्तरपुष्पशय्ये** ] मृदुप्रवालोत्तरा उपरिप्रस्तारितकोमलपल्लवा पुष्पशय्या यस्मिंस्तत्तस्मिन् । **चैत्ररथात्** कुबेरोद्यानाद् **अनूने वृन्दावने** वृन्दावननामक उद्याने हे **सुन्दरि यौवनश्रीः** यौवनफलं **निर्विश्यतां** भुज्यताम् ॥

**अध्यास्य चाम्भःपृषतोक्षितानि शैलेयगन्धीनि[6] शिलातलानि ।**
**कलापिनां प्रावृषि पश्य नृत्यं कान्तासु गोवर्धनकन्दरासु ॥ ५१ ॥**

किं च । **प्रावृषि** वर्षासु **कान्तासु गोवर्धनकन्दरासु** गोवर्धनस्याद्रेः कन्दरासु दरीषु । 'दरी तु कन्दरो वा स्त्री' इत्यमरः । [ **अम्भःपृषतोक्षितानि** ]

१ अनुरूपं श्लोकार्धं मेघदूते–'संसर्पन्त्याः सपदि भवतः स्रोतसि च्छाययासौ स्यादस्थानोपगतयमुनासङ्गमेवाभिरामा ॥' इति। २ त्रातेनेति दि०वल्लभौ पठतः । अयं पाठः सार्धीयानिव भाति । त्राणस्य निष्क्रयत्वेन मणिदानस्य युक्ततरत्वात्। ३ विष्णुम्. ४ कोमलकिसलयाधिककुसुमशयनीये । व० सु० । उत्तरशब्द आधिक्यं ब्रुवाणः संमिश्रत्वमाह । यथा– 'निनाय सात्यर्थहिमोत्तरानिलाः' इति हिममिश्रा इत्यर्थः । हे० व०. । ५ उक्तं च शम्भुरहस्ये 'अलकाया बहिश्चान्यद्वनं चैत्ररथं प्रिये । योजनायुतविस्तीर्णं सर्वं कल्पद्रुमाकुलम् ॥' हे. ६ नद्धानि, बद्धानि. कुमारसंभवेपि प्रायुङ्क्त कविः 'शैलेयनद्धेषु शिलतलेषु' इति ।

अम्भसः पृषतैर्बिन्दुभिरुक्षितानि सिक्तानि । शिलायां भवं शैलेयम् । 'शिलाजतु च शैलेयम्' इति यादवः । यद्वा शिलापुष्पाख्य ओषधिविशेषः । 'कालानुसार्यवृद्धाश्मपुष्पशीतशिवानि तु । शैलेयम्' इत्यमरः । 'शिलाया ढः' इत्यत्र शिलाया इति योगविभागादिवार्थे ढञ्प्रत्ययः । तद्गन्धवन्ति **शैलेयगन्धीनि शिलातलानि अध्यास्य** अधिष्ठाय **कलापिनां** बर्हिणां **नृत्यं पश्य** ॥

**नृपं तमावर्तमनोज्ञनाभिः सा व्यत्यगादन्यवधूर्भवित्री ।**
**महीधरं मार्गवशादुपेतं स्रोतोवहा सागरगामिनीव ॥ ५२ ॥**

'स्यादावर्तोऽम्भसां भ्रमः' इत्यमरः । आवर्तमनोज्ञा नाभिर्यस्याः सा [ **आवर्तमनोज्ञनाभिः** ] । इदं च नदीसाम्यार्थमुक्तम् । **अन्यवधूः** अन्यपत्नी **भवित्री** भाविनी **सा** कुमारी **तं नृपम्** । **सागरगामिनी** सागरं गन्त्री **स्रोतोवहा** नदी **मार्गवशादुपेतं** प्राप्तं **महीधरं** पर्वतम् **इव व्यत्यगाद्** अतीत्य गता ॥

**अथाङ्गदाश्लिष्टभुजं भुजिष्या हेमाङ्गदं नाम कलिङ्गनाथम् ।**
**आसेदुषीं सादितशत्रुपक्षं बालामबालेन्दुमुखीं बभाषे ॥ ५३ ॥**

**अथ भुजिष्या** किंकरी सुनन्दा । 'भुजिष्या किंकरी मता' इति हलायुधः । **अङ्गदाश्लिष्टभुजं** केयूरनद्धबाहुं **सादितशत्रुपक्षं** विनाशितशत्रुवर्गं **हेमाङ्गदं नाम कलिङ्गनाथम् आसेदुषीम्** आसन्नाम् । **अबालेन्दुमुखीं** पूर्णेन्दुमुखीं **बालाम्** इन्दुमतीं **बभाषे** ॥

**असौ महेन्द्राद्रिसमानसारः पतिर्महेन्द्रस्य महोदधेश्च ।**
**यस्य क्षरत्सैन्यगजच्छलेन यात्रासु यातीव पुरो महेन्द्रः ॥ ५४ ॥**

[ **महेन्द्राद्रिसमानसारः** ] महेन्द्राद्रेः समानसारस्तुल्यसत्त्वः **असौ** हेमाङ्गदः **महेन्द्रस्य** नाम कुलपर्वतस्य **महोदधेश्च पतिः** स्वामी । 'महेन्द्रमहोदधी एवास्य गिरिजलदुर्गे' इति भावः । **यस्य यात्रासु** [ **क्षरत्सैन्यगजच्छलेन** ] क्षरतां मदस्राविणां सैन्यगजानां छलेन **महेन्द्रः** महेन्द्राद्रिः **पुरः** अग्रे **यातीव** । अद्रिकल्पा अस्य गजा इत्यर्थः ॥

**ज्याघातरेखे सुभुजो भुजाभ्यां बिभर्ति यश्चापभृतां पुरोगः ।**
**रिपुश्रियां साञ्जनबाष्पसेके बन्दीकृतानामिव पद्धती द्वे ॥ ५५ ॥**

**सुभुजः चापभृतां पुरोगः** धनुर्धराग्रेसरः **यः** । **बन्दीकृतानां** प्रगृहीतानाम् ।

---

१ नद्धानीति पाठे नद्धं व्याममिति व्याख्येयम् । २ तत्र मयूरसंचारेण सर्पाभावात्संभोगे निःशंकता । कौतुकाभावश्च ध्वन्यते । हे. चा. ३ सागरोपमया भाविनः पत्युर्गाम्भीर्यं ध्वनितम् । ४ 'बाला षोडशवार्षिकी' इति रतिरहस्यम् । ५ महेन्द्रः इन्द्रः अद्रिः सूर्यस्तयोः समानबलः । इ. व० ६ यात्रासु विजयप्रयाणेषु कटकचलनेषु वा ।

प्रग्रहोपग्रहौ बन्द्याम्' इत्यमरः । **रिपुश्रियां [ साञ्जनबाष्पसेके ]** साञ्जनो बाष्पसेको ययोस्ते । कज्जलमिश्राश्रुसिक्ते इत्यर्थः । **पद्धती इव** । **द्वे [ ज्याघातरेखे ]** ज्याघातानां मौर्वीकिणानां रेखे राजी **भुजाभ्यां बिभर्ति** । द्विवचनात्सव्यसाचित्वं गम्यते । रिपुश्रियां भुजाभ्यामेवाहरणात्तद्गतरेखयोस्तत्पद्धतित्वेनोत्प्रेक्षा । तयोः श्यामत्वात्साञ्जनाश्रुसेकोक्तिः[१]॥

**यमात्मनः सद्मनि संनिकृष्टो मन्द्रध्वनित्याजितयामतूर्यः ।**
**प्रासादवातायनदृश्यवीचिः प्रबोधयत्यर्णव एव सुप्तम् ॥ ५६ ॥**

**आत्मनः सद्मनि सुप्तं यं** हेमाङ्गदं **संनिकृष्टः** समीपस्थोऽत एव **[ प्रासादवातायनदृश्यवीचिः ]** प्रासादवातायनैर्दृश्यवीचिः । **[ मन्द्रध्वनित्याजितयामतूर्यः ]** मन्द्रेण गम्भीरेण । 'मन्द्रस्तु गम्भीरे' इत्यमरः । ध्वनिना त्याजितं यामस्य तूर्यं प्रहरावसानसूचकं वाद्यं येन स तथोक्तः । 'द्वौ यामप्रहरौ समौ' इत्यमरः । **अर्णव एव प्रबोधयति** । अर्णवस्यैव तूर्यकार्यकारित्वात्तद्वैयर्थ्यमित्यर्थः । समुद्रस्यापि सेव्यत्वे किमन्येषामिति भावः ॥

**अनेन सार्धं विहराम्बुराशेस्तीरेषु तालीवनमर्मरेषु ।**
**द्वीपान्तरानीतलवङ्गपुष्पैरपाकृतस्वेदलवा मरुद्भिः ॥ ५७ ॥**

**अनेन** राज्ञा **सार्धं [ तालीवनमर्मरेषु ]** तालीवनैर्मर्मरेषु मर्मरेति ध्वनत्सु । 'अथ मर्मरः । स्वनिते वस्त्रपर्णानाम्' इत्यमरवचनाद्गुणपरस्यापि मर्मरशब्दस्य गुणिपरत्वं प्रयोगादवसेयम् । **अम्बुराशेः** समुद्रस्य **तीरेषु [ द्वीपान्तरानीतलवङ्गपुष्पैः ]** द्वीपान्तरेभ्य आनीतानि लवङ्गपुष्पाणि देवकुसुमानि यैस्तैः । 'लवङ्गं देवकुसुमम्' इत्यमरः । **मरुद्भिः** वातैः **[ अपाकृतस्वेदलवा ]** अपाकृताः प्रशमिताः स्वेदस्य लवा बिन्दवो यस्याः सा तथाभूता सती त्वं **विहर** क्रीड ॥

**प्रलोभिताप्याकृतिलोभनीया विदर्भराजावरजा तयैवम् ।**
**तस्मादपावर्तत दूरकृष्टा नीत्येव लक्ष्मीः प्रतिकूलदैवात् ॥ ५८ ॥**

**[ आकृतिलोभनीया ]** आकृत्या रूपेण लोभनीयाकर्षणीया । न तु वर्णनमात्रैः

---

१ अत्र रिपुभेदात्कालभेदाद्वा बहुवचनम् । वल्लभदिनकरौ तु रिपुश्रियः—याः—बन्दीकृताया इव' इति पठतः । किं तु मल्लिनाथसम्मतः पाठ एव साधीयानिति प्रतिभाति । अनेकत्वं विना पद्धतेरसंभवात् । २ अस्मात्परमातिरिक्तं श्लोकमेकं पठन्ति चा० दिनकरादयः । यथा—

रणेष्वमित्रीणतया प्रकाशः शरासनज्यानिकषौ भुजाभ्याम् ।
विस्पष्टलेखौ रिपुविक्रमस्य निर्वाणमार्गाविव यो बिभर्ति ॥

३ अयं श्लोकोऽन्यथा पठ्यते चा० दि०रादिभिः—यमात्मनः सद्मनि सौधजालैरालोक्य वेलातटपूगमालः ( ली ) । मन्द्रध्वनित्याजितयामतूर्यः प्रबोध० इ० । ४ अनेन वैतालिकाभाव उक्तः । इ० ५ अनेनोद्यानाभावश्चोक्तः । हे० ६ यादृशेन रूपेणेयं प्रलोभ्यते तादृशं रूपं तस्मिन्नृपे नासीत । दि० । चा० अप्येवम् । 'आकृतिलोभनीयात्' इति पाठकल्पनायां त्वर्थः सुविशदः स्यात् । अन्यथोपमाभूताया लक्ष्म्या आकर्षकं किंचिन्न स्यात् । इन्दुमत्यास्त्यागे दैवप्रातिकूल्यमन्तरेण कारणान्तरस्याविवक्षितत्वाच्च ।

णेत्यर्थः । **विदर्भराजावरजा** भोजानुजेन्दुमती **तया** सुनन्दया **एवं प्रलोभितापि** प्रचोदितापि । **नीत्या** पुरुषकारेण **दूरकृष्टा** दूरमानीता **लक्ष्मीः [ प्रतिकूलदैवात् ]** प्रतिकूलं दैवं यस्य तस्मात्पुंसः **इव तस्माद्** हेमाङ्गदाद् **अपावर्तत** प्रतिनिवृत्ता ॥

**अथोरगाख्यस्य पुरस्य नाथं दौवारिकी देवसरूपमेत्य ।**
**इतश्चकोराक्षि विलोकयेति पूर्वानुशिष्टां निजगाद भोज्याम् ॥ ५९ ॥**

**अथ** द्वारे नियुक्ता **दौवारिकी** सुनन्दा । 'तत्र नियुक्तः' इति ठक्प्रत्ययः । 'द्वारादीनां च' इत्यौ आगमः । आकारेण **देवसरूपं** देवतुल्यम् । **उरगाख्यस्य पुरस्य** पाण्ड्यदेशे कान्यकुब्जतीरवर्तिनागपुरस्य **नाथमेत्य** प्राप्य । हे **चकोराक्षि इतो विलोकयेति पूर्वानुशिष्टां** पूर्वमुक्तां भोजस्य राज्ञो गोत्रापत्यं स्त्रियं **भोज्याम्** इन्दुमतीम् । 'क्रौड्यादिभ्यश्च' इत्यत्र भोजात्क्षत्रियादित्युपसंख्यानात्ष्यङ्प्रत्ययः । 'यङश्चाप्' इति चाप् । **निजगाद** । इतो विलोकयेति पूर्वमुक्त्वा पश्चाद्वक्तव्यं निजगादेत्यर्थः ॥

**पाण्ड्योऽयमंसार्पितलम्बहारः क्लृप्ताङ्गरागो हरिचन्दनेन ।**
**आभाति बालातपरक्तसानुः सनिर्झरोद्गार इवाद्रिराजः ॥ ६० ॥**

**[ अंसार्पितलम्बहारः ]** अंसयोरर्पिताः । लम्बन्त इति लम्बाः । हाराः यस्य सः । **हरिचन्दनेन** गोशीर्षाख्येन चन्दनेन । 'तैलपर्णिकगोशीर्षे हरिचन्दनमस्त्रियाम् ।' इत्यमरः । **क्लृप्ताङ्गरागः** सिद्धानुलेपनः **अयं** पाण्डूनां जनपदानां राजा **पाण्ड्यः** । 'पाण्डोर्जनपदशब्दात्क्षत्रियाड्ड्यण्वक्तव्यः' इति ड्यण्प्रत्ययः । तस्य राजन्यपत्यवदिति वचनात् । **[ बालातपरक्तसानुः ]** बालातपेन रक्ता अरुणाः सानवो यस्य सः । **सनिर्झरोद्गारः** प्रवाहस्यन्दनसहितः । 'वारिप्रवाहो निर्झरो झरः' इत्यमरः । **अद्रिराजः इवाभाति** ॥

**विन्ध्यस्य संस्तम्भयिता महाद्रेर्निःशेषपीतोज्झितसिन्धुराजः ।**
**प्रीत्याश्वमेधावभृथार्द्रमूर्तेः सौस्नातिको यस्य भवत्यगस्त्यः ॥ ६१ ॥**

**विन्ध्यस्य** नाम्नः **महाद्रेः** । तपनमार्गनिरोधाय वर्धमानस्येति शेषः । **संस्तम्भयिता** निवारयिता **[ निःशेषपीतोज्झितसिन्धुराजः ]** निःशेषं पीत उज्झितः

---

१ अत्रायं क्षेपकः क्वचित्—**अथाधिगम्यो(त्यो)रगराजकल्पं पतिं पुरस्योरगपूर्वनाम्नः ।**
**आचारपूतो (-शुद्धो)भयवंशदीपं शुद्धान्तरक्ष्या जगदे कुमारी ॥**

२ अत्र प्रसिद्धस्य सर्परूपार्थस्य झटित्युपस्थित्या नागपुरेत्यस्य विलम्बेनोपस्थितेर्विनिहतार्थता दोषः । ३ '**सोऽस्य** राजा' इति ष्यञ् । 'पाण्डवादिभ्यो यत्' इ. भट्टोजिदीक्षिताः । ४ अत्र वाक्यार्थवृत्तिरुपमा । यदाह वामनः—तद्द्वैविध्यं पदवाक्यार्थवृत्तिभेदात् । ५ पुरा किल मेरुमत्सराद्वर्धमानेन विन्ध्याद्रिणा रविमार्गो निरुद्धः । तदा देवैरनुरुद्धो विन्ध्यगुरुर्भगवानगस्त्यः काशीं परित्यज्य दक्षिणदेशमागतः । आगतं तं दृष्ट्वा विन्ध्यो नीचैः प्रणनाम । प्रणतं च तं गुरुः 'यावदहं न प्रत्यागच्छामि तावदेतदवस्थ एव तिष्ठ' इत्यभिधायासंनिवृत्तये दक्षिणामाशामाश्रितवान् । स. ४. श्लो. ४४ द्रष्टव्यः । ६ हते वृत्रासुरे तदनुचरा दानवा निशि त्रैलोक्यं पीडयांचक्रुर्दिवा च सागरं प्रच्छन्ना बभूवुः । ततो भगवता विष्णुनाज्ञप्तेनेन्द्रेण प्रार्थितो भगवानगस्त्यः सागरं पपौ । पीते च तस्मिंस्तद्गर्भस्था दैत्या देवैर्हताः । इति कथात्रानुसन्धेया ।

पुनस्त्यक्तः सिन्धुराजः समुद्रो येन सः **अगस्त्यः** [ **अश्वमेधावभृथार्द्रमूर्तेः** ] अश्वमेधस्यावभृथे दीक्षान्ते कर्मणि । 'दीक्षान्तोऽवभृथो यज्ञः' इत्यमरः । आर्द्रमूर्तेः स्नातस्येत्यर्थः । **यस्य** पाण्ड्यस्य **प्रीत्या** स्नेहेन । न तु दाक्षिण्येन । सुस्नातं पृच्छतीति **सौस्नातिकः भवति** । 'पृच्छतौ सुस्नातादिभ्यः' इत्युपसंख्यानाट्ठक् ॥

**अस्त्रं हरादाप्तवता दुरापं येनेन्द्रलोकावजयाय दृप्तः ।**
**पुरा जनस्थानविमर्दशङ्की संधाय लङ्काधिपतिः प्रतस्थे ॥ ६२ ॥**

**पुरा** पूर्वं [ **जनस्थानविमर्दशङ्की** ] जनस्थानस्य खरालयस्य विमर्दशङ्की **दृप्तः** उद्धतः **लङ्काधिपतिः** रावणः । **दुरापं** दुर्लभम् **अस्त्रं** ब्रह्मशिरोनामकं **हरादाप्तवता येन** पाण्ड्येन **संधाय** । **इन्द्रलोकावजयाय** इन्द्रलोकं जेतुं **प्रतस्थे** । इन्द्रविजयिनो रावणस्यापि विजेतेत्यर्थः ॥

**अनेन पाणौ विधिवद् गृहीते महाकुलीनेन महीव गुर्वी ।**
**रत्नानुविद्धार्णवमेखलाया दिशः सपत्नी भव दक्षिणस्याः ॥ ६३ ॥**

**महाकुलीनेन** महाकुले जातेन । 'महाकुलादञ्खञौ' इति खञ्प्रत्ययः । **अनेन** पाण्ड्येन **पाणौ** त्वदीये **विधिवद्** यथाशास्त्रं **गृहीते** सति **गुर्वी** गुरुः । 'वोतो गुणवचनात्' इति ङीप् । **महीव** [ **रत्नानुविद्धार्णवमेखलायाः** ] रत्नैरनुविद्धो व्याप्तोऽर्णव एव मेखला यस्यास्तस्याः । इदं विशेषणं मह्यामिन्दुमत्यां च योज्यम् । **दक्षिणस्याः दिशः सपत्नी भव** । अनेन सपत्न्यन्तराभावो ध्वन्यते ॥

**ताम्बूलवल्लीपरिणद्धपूगास्वेलालतालिङ्गितचन्दनासु ।**
**तमालपत्रास्तरणासु रन्तुं प्रसीद शश्वन्मलयस्थलीषु ॥ ६४ ॥**

[ **ताम्बूलवल्लीपरिणद्धपूगासु** ] ताम्बूलवल्लीभिर्नागवल्लीभिः परिणद्धाः परिरब्धाः पूगाः क्रमुका यासु तासु । 'ताम्बूलवल्ली नागवल्ल्यपि' इति 'घोण्टा तु पूगः क्रमुकः' इति चामरः । [ **एलालतालिङ्गितचन्दनासु** ] एलालताभिरालिङ्गिताश्चन्दना मलयजा यासु तासु । 'गन्धसारो मलयजो भद्रश्रीश्चन्दनोऽस्त्रियाम् ।' इत्यमरः । [ **तमालपत्रास्तरणासु** ] तमालस्य तापिच्छस्य पत्राण्येवास्तरणानि यासु तासु । 'कालस्कन्धस्तमालः स्यात्तापिच्छोऽपि' इत्यमरः । **मलयस्थलीषु शश्वत्** मुहुः सदा वा **रन्तुं प्रसीद** अनुकूला भव ॥

**इन्दीवरश्यामतनुर्नृपोऽसौ त्वं रोचनागौरशरीरयष्टिः ।**
**अन्योन्यशोभापरिवृद्धये वां योगस्तडित्तोयदयोरिवास्तु ॥ ६५ ॥**

**असौ नृपः इन्दीवरश्यामतनुः । त्वं** [ **रोचनागौरशरीरयष्टिः** ]

---

१ अनेनास्य कोऽपि महिमातिशय उक्तः । २ शश्वच्छब्देन ताम्बूललतादीनामुद्दीपनविभावनानामाधिक्यं सूच्यते । चा०

रोचना गोरोचनेव गौरी शरीरयष्टिर्यस्याः सा । ततः **तडित्तोयदयोः** विद्युन्मेघयोः **इव वां** युवयोः **योगः** समागमः [ **अन्योन्यशोभापरिवृद्धये** ] अन्योन्यशोभायाः परिवृद्धये **अस्तु** ॥

**स्वसुर्विदर्भाधिपतेस्तदीयो लेभेऽन्तरं चेतसि नोपदेशः ।**
**दिवाकरादर्शनबद्धकोशे नक्षत्रनाथांशुरिवारविन्दे ॥ ६६ ॥**

**विदर्भाधिपतेः** भोजस्य **स्वसुः** इन्दुमत्याः **चेतसि तदीयः** सुनन्दासंबन्धी **उपदेशः** वाक्यम् । [ **दिवाकरादर्शनबद्धकोशे** ] दिवाकारस्यादर्शनेन बद्धकोशे मुकुलिते **अरविन्दे नक्षत्रनाथांशुः** चन्द्रकिरणः **इव** । **अन्तरम्** अवकाशं **न लेभे** ॥

**संचारिणी दीपशिखेव रात्रौ यं यं व्यतीयाय पतिंवरा सा ।**
**नरेन्द्रमार्गाट्ट इव प्रपेदे विवर्णभावं स स भूमिपालः ॥ ६७ ॥**

**पतिंवरा सा** इन्दुमती **रात्रौ संचारिणी दीपशिखा इव यं यं** भूमिपालं **व्यतीयाय** अतीत्य गता **स स भूमिपालः** । स सर्व इत्यर्थः । 'नित्यवीप्सयोः' इति वीप्सायां द्विर्वचनम् । [ **नरेन्द्रमार्गाट्टः** ] नरेन्द्रमार्गे राजपथेऽट्टाख्यो गृहभेदः **इव** । 'स्यादट्टः क्षौममस्त्रियाम्' इत्यमरः । **विवर्णभावं** विच्छायत्वम् । अट्टस्तु तमोवृतत्वम् । **प्रपेदे** ॥

**तस्यां रघोः सूनुरुपस्थितायां वृणीत मां नेति समाकुलोऽभूत् ।**
**वामेतरः संशयमस्य बाहुः केयूरबन्धोच्छ्वसितैर्नुनोद ॥ ६८ ॥**

**तस्याम्** इन्दुमत्यां **उपस्थितायाम्** आसन्नायां सत्यां **रघोः सूनुः** अजः **मां वृणीत न** वा इति **समाकुलः** संशयितः **अभूत्** । अथ **अस्य** अजस्य **वामेतरः** वामादितरो दक्षिणः **बाहुः** [ **केयूरबन्धोच्छ्वसितैः** ] केयूरं बध्यतेऽत्रेति केयूरबन्धोऽङ्गदस्थानम् । तस्योच्छ्वसितैः स्फुरणैः **संशय नुनोद** ॥

---

१ क्षागत्वादतिसुन्दरं शरीरमित्य० । 'यष्टिशब्दः श्रेष्ठार्थः ' इ. दिनकरः । २ मेघविद्युतोः क्षणिकयोगाद्वराग्योक्तिः । चा० दि०. ३ अनेन परस्परशोभा नान्येषामित्युक्तं दक्षिणत्वं वा । हे० ४ 'तारापतेरंशुः ' इ. चा० दि० पठन्ति । ५ अनेनाजस्य सूर्यसादृश्यं ध्वनितम्. ६ एतेन दिवसकरकमलयोरिवेन्दुमत्यभीष्टस्याजकुमारस्य मनसश्च स्नेहाधिक्यं सूच्यते । चा०. ७ आभासितस्तत्क्षणमंसकूटे वामेतरेण स्फुरता भुजेन । इति दि० चा० पठतः । हे०णाप्ययं पाठ उद्धृतः । ८ 'वामभागस्तु नारीणां श्रेष्ठः पुंसां तु दक्षिणः । दाने देवादिपूजायां स्पन्देऽलंकरणेऽपि च ॥' इति निमित्तनिदाने । तथा—' अंगविस्फुरणं नृणां दक्षिणं सर्वकामदम् । तदेव शस्यते मङ्गनारीणामप्रदक्षिणम् '॥ इ. हे०. पुंसां हि दक्षिणभुजस्फुरणं प्रियालिङ्गनं सूचयति । अत एवेन्दुमतीं लप्स्येऽहमित्यजस्य चित्तवृत्तिराशंसात् इ. दि० । इदं बाहुस्फुरणं तत्र तत्र वर्ण्यते कविभिः । ' शान्तमिदमाश्रमपदं स्फुरति च बाहुः कुतः फलमिहास्य 'इति शाकुन्तले । ' अयं मां स्पन्दितबाहुराश्वासयति दक्षिणः । ' इ. विक्रमोर्वशीये । अभिमतफलशंसी चारु पुस्फोर बाहुः ' इ. भट्टिश्च । ९ केयूरस्याङ्गदस्य बन्धो ग्रन्थिस्तस्य भुजस्फुरणवशादुच्छ्वसितान्युल्लसितानि तैः । इति दिनकरो व्याख्याति ।

**तं प्राप्य सर्वावयवानवद्यं व्यावर्ततान्योपगमात्कुमारी ।**
**न हि प्रफुल्लं सहकारमेत्य वृक्षान्तरं काङ्क्षति षट्पदाली ॥ ६९ ॥**

**कुमारी** । [ **सर्वावयवानवद्यं** ] सर्वेष्ववयवेष्वनवद्यमदोषं तम् अजं **प्राप्य** । **अन्योपगमाद्** राजान्तरोपगमाद् **व्यावर्तत** निवृत्ता । तथा **हि** । **षट्पदाली** भृङ्गावलिः । प्रफुल्लतीति **प्रफुल्लं** विकसितम् । पुष्पितमित्यर्थः । प्रपूर्वात्फुल्लतेः पचाद्यच् । फलतेस्तु प्रफुल्तमिति पठितव्यम् । ‘ अनुपसर्गात्– ’ इति निषेधात् । इत्युभयथापि न कदाचिदनुपपत्तिरित्युक्तं प्राक् । **सहकारं** चूतविशेषम् **एत्य** । ‘ आम्रश्चूतो रसालोऽसा सहकारोऽतिसौरभः ।’ इत्यमरः । **वृक्षान्तरं न काङ्क्षति** । न हि सर्वोत्कृष्टवस्तुलाभेऽपि वस्त्वन्तरस्याभिलाषः स्यादित्यर्थः ॥

**तस्मिन्समावेशितचित्तवृत्तिमिन्दुप्रभामिन्दुमतीमवेक्ष्य ।**
**प्रचक्रमे वक्तुमनुक्रमज्ञा सविस्तरं वाक्यमिदं सुनन्दा ॥ ७० ॥**

**तस्मिन्** अजे [ **समावेशितचित्तवृत्तिम्** ] समावेशिता संक्रामिता चित्तवृत्तिर्यया ताम् । [ **इन्दुप्रभां** ] इन्दोः प्रभेव प्रभा यस्यास्ताम् । आह्लादकत्वादिन्दुसाम्यम् । **इन्दुमतीम् अवेक्ष्य अनुक्रमज्ञा** वाक्यपौर्वापर्याभिज्ञा **सुनन्देदं** वक्ष्यमाणं **सविस्तरं** सप्रपञ्चम् । ‘ प्रथने वावशब्दे ’ इति घञो निषेधात् ‘ ऋदोरप् ’ इत्यप्प्रत्ययः । ‘ विस्तारो विग्रहो व्यासः स च शब्दस्य विस्तरः । ’ इत्यमरः । **वाक्यं वक्तुं प्रचक्रमे** ॥

**इक्ष्वाकुवंश्यः ककुदं नृपाणां ककुत्स्थ इत्याहितलक्षणोऽभूत् ।**
**काकुत्स्थशब्दं यत उन्नतेच्छाः श्लाघ्यं दधत्युत्तरकोसलेन्द्राः ॥ ७१ ॥**

[ **इक्ष्वाकुवंश्यः** ] इक्ष्वाकोर्मनुपुत्रस्य वंश्यो वंशे भवः । **नृपाणां ककुदं** श्रेष्ठः । ‘ ककुच्च ककुदं श्रेष्ठे वृषांसे राजलक्ष्मणि । ’ इति विश्वः । **आहितलक्षणः** प्रख्यातगुणः । ‘ गुणैः प्रतीते तु कृतलक्षणाहितलक्षणौ । ’ इत्यमरः । ककुदि वृषांसे तिष्ठतीति **ककुत्स्थः इति** प्रसिद्धः कश्चिद्राजा **अभूत्** । **यतः** ककुत्स्थादारभ्य **उन्नतेच्छाः** महाशयाः । ‘ महेच्छस्तु महाशयः ’ इत्यमरः । **उत्तरकोसलेन्द्राः** राजानो दिलीपादयः **श्लाघ्यं** प्रशस्तम् [ **काकुत्स्थशब्दं** ] ककुत्स्थस्यापत्यं पुमान्काकुत्स्थ इति शब्दं संज्ञां **दधति** बिभ्रति । तन्नामसंस्पर्शोऽपि वंशस्य कीर्तिकर इति भावः । पुरा किल पुरंजयो नाम साक्षाद्भगवतो विष्णोरंशावतारः कश्चिदैक्ष्वाको राजा देवैः सह समयबन्धेन देवासुरयुद्धे

१ ‘विरामार्थानां यतो विरतिः’ इत्यपादानत्वम् । २ ‘ प्रथने वावशब्दे ’ इति सूत्रेण विपूर्वात्स्तृणातेर्घञ् स्यादशब्दाविषये प्रथने । अत्र शब्दस्य [ वाक्यस्य ] प्रथनान्न घञ् । किं तु ‘ऋदोरप्’ इति अप्प्रत्ययः । ३ अयं शशादापरनामधेयस्य विकुक्षेर्नामेक्ष्वाकुपुत्रस्य पुत्रः। अत्र भागवतम्–पुरंजयस्तस्य सुत इन्द्रवाह इतीरितः । ककुत्स्थ इति चाप्युक्तः शृणु नामानि तस्य वै ॥ कृतान्त आसीत्समरो देवानां सह दानवैः । पार्ष्णिग्राहो वृतो वीरो देवैर्दैत्यपराजितैः ॥ वचनाद्देवदेवस्य विष्णोर्विश्वात्मनः प्रभोः । वाहनत्वे वृतस्तस्य बभूवेन्द्रो महावृषः ॥ स सन्नद्धो धनुर्दिव्यमादाय विशिखान्सितान् । स्तूयमानः समारुह्य युयुत्सुः ककुदि स्थितः ॥ तेजसाप्यायितो विष्णोः पुरुषस्य परात्मनः । प्रतीच्यां दिशि दैत्यानामरुणत्त्रिदशैः पुरम् ॥ ❋ ❋ ❋ जित्वा पुरं धनं सर्वं सश्रीकं वज्रपाणये । प्रत्ययच्छत्स राजर्षिरिति नामभिराहृतः ॥

महोक्षरूपधारिणो महेन्द्रस्य ककुदि स्थित्वा पिनाकिलीलया निखिलमसुरकुलं निहत्य ककुत्स्थसंज्ञां लेभ इति पौराणिकी कथानुसंधेया। वक्ष्यते चायमेवार्थ उत्तरश्लोके ॥

**महेन्द्रमास्थाय महोक्षरूपं यः संयति प्राप्तपिनाकिलीलः।**
**चकार बाणैरसुराङ्गनानां गण्डस्थलीः प्रोषितपत्त्रलेखाः ॥ ७२ ॥**

यः ककुत्स्थः **संयति** युद्धे। [ **महोक्षरूपं** ] महांश्चासावुक्षा महोक्षः। 'अचतुर—' इत्यादिना निपातः। तस्य रूपमिव रूपं यस्य तं **महेन्द्रमास्थाय** आरुह्य। अत एव [ **प्राप्तपिनाकिलीलः** ] प्राप्ता पिनाकिन ईश्वरस्य लीला येन स तथोक्तः सन् **बाणैरसुराङ्गनानां गण्डस्थलीः प्रोषितपत्त्रलेखाः** निवृत्तपत्त्ररचनाः **चकार**। तद्भर्तृनसुरानवधीदित्यर्थः। न हि विधवाः प्रसाध्यन्त इति भावः ॥

**ऐरावतास्फालनविश्लथं यः संघट्टयन्नङ्गदमङ्गदेन।**
**उपेयुषः स्वामपि मूर्तिमग्र्यामर्धासनं गोत्रभिदोऽधितष्ठौ ॥ ७३ ॥**

यः ककुत्स्थः [ **ऐरावतास्फालनविश्लथं** ] ऐरावतस्य स्वर्गजस्यास्फालनेन ताडनेन विश्लथं शिथिलम् **अङ्गदम्** ऐन्द्रम् **अङ्गदेन** स्वकीयेन **संघट्टयन्** संघर्षयन् **स्वामग्र्यां** श्रेष्ठां **मूर्तिमुपेयुषःअपि** प्राप्तस्यापि **गोत्रभिदः** इन्द्रस्य। अर्धमासनस्य **अर्धासनम्**। 'अर्धं नपुंसकम्' इति समासः। **अधितष्ठौ** अधिष्ठितवान्। 'स्थादिष्वभ्यासेन चाभ्यासस्य' इत्यभ्यासेन व्यवायेऽपि षत्वम्। न केवलं महोक्षरूपधारिण एव तस्य ककुदमारुक्षत्। किं तु निजरूपधारिणोऽपीन्द्रस्यार्धासनमित्यपिशब्दार्थः। अथ वा अर्धासनमपीत्यपेरन्वयः ॥

**जातः कुले तस्य किलोरुकीर्तिः कुलप्रदीपो नृपतिर्दिलीपः।**
**अतिष्ठदेकोनशतक्रतुत्वे शक्राभ्यसूयाविनिवृत्तये यः ॥ ७४ ॥**

**उरुकीर्तिः** महायशाः **कुलप्रदीपः** वंशप्रदीपकः **दिलीपः नृपतिः तस्य** ककुत्स्थस्य **कुले जातः किल**। **यः** दिलीपः **शक्राभ्यसूयाविनिवृत्तये**। न त्वशक्त्येति भावः। [ **एकोनशतक्रतुत्वे** ] एकेनोनाः शतं क्रतवो यस्य स एकोनशतक्रतुः तस्य भावे तत्त्वे **अतिष्ठत्**। इन्द्रप्रीतये शततमं क्रतुमवशेषितवानित्यर्थः ॥

**यस्मिन्महीं शासति वाणिनीनां निद्रां विहारार्धपथे गतानाम्।**
**वातोऽपि नास्रंसयदंशुकानि को लम्बयेदाहरणाय हस्तम् ॥ ७५ ॥**

**यस्मिन्** दिलीपे **महीं शासति** सति। [ **विहारार्धपथे** ] विहरत्यत्रेति

---

१ पत्त्राकारा लेखाः पत्त्रलेखाः। शाकपार्थिवादिः। कस्तूरादिना लिखिता रेखा रचनाविशेषाः। प्रोषिताः पत्त्रलेखा याभ्यः। २ उपेयाय इति उपेयिवान् तस्य उपेयुषः। 'उपेयिवाननाश्वाननूचानश्च' इति क्वसुप्रत्ययान्तो निपातः। 'नात्रोपसर्गस्तन्त्रम्' इति काशिकाकारः। यथा किराते-'गुणानुरागादिव सख्यमीयिवान्न बाधतेऽस्य त्रिगुणः परस्परम्' इति। ३ यद्वा विहारस्य राजमार्गस्य उपवनस्य वा पन्थाः। वाणिनीनां दूतीनाम्। हे०। वाणिनीनाम्-कामिनीनाम्। आहरणाय-आभरणाय-इति पा०।

विहारः क्रीडास्थानम् । तस्यार्धपथे **निद्रां गतानां वाणिनीनां** मत्ताङ्गनानाम् । 'वाणिनी नर्तकीमत्ताविदग्धवनितासु च ।' इति विश्वः । 'वाणिन्यौ नर्तकीमत्ते' इत्यमरश्च । **अंशुकानि** वस्त्राणि **वातोऽपि नास्रंसयत्** नाकम्पयत् । **आहरणाय** अपहर्तुं **को हस्तं लम्बयेत्** । तस्याज्ञासिद्धत्वादकुतोभयसंचाराः प्रजा इत्यर्थः । अर्धश्चासौ पन्थाश्चेति विग्रहः । समप्रविभागे प्रमाणाभावान्नैकदेशिसमासः ॥

**पुत्रो रघुस्तस्य पदं प्रशास्ति महाक्रतोर्विश्वजितः प्रयोक्ता ।**
**चतुर्दिगावर्जितसंभृतां यो मृत्पात्रशेषामकरोद्विभूतिम् ॥ ७६ ॥**

**विश्वजितः** नाम **महाक्रतोः प्रयोक्ता** अनुष्ठाता **तस्य** दिलीपस्य **पुत्रः रघुः पदं** पैत्र्यमेव **प्रशास्ति** पालयति । **यः** रघुश्चतसृभ्यो दिग्भ्य आवर्जिताहृता संभृता सम्यग्वर्धिता च या तां **चतुर्दिगावर्जितसंभृतां विभूतिं** संपदं [ **मृत्पात्रशेषां** ] मृत्पात्रमेव शेषो यस्यास्ताम् **अकरोत्** । विश्वजिद्यागस्य सर्वस्वदक्षिणाकत्वादित्यर्थः ॥

**आरूढमद्रीनुदधीन्वितीर्णं भुजङ्गमानां वसतिं प्रविष्टम् ।**
**ऊर्ध्वं गतं यस्य न चानुबन्धि यशः परिच्छेत्तुमियत्तयालम् ॥ ७७ ॥**

किं च । **अद्रीन् आरूढम्** । **उदधीन् वितीर्णं** अवगाढम् । सकलभूगोलव्यापकमित्यर्थः । **भुजङ्गमानां वसतिं** पातालं **प्रविष्टम्** । **ऊर्ध्वं** स्वर्गादिकं **गतं** व्याप्तम् । इत्थं सर्वदिग्व्यापीत्यर्थः । अनुबध्नातीति **अनुबन्धि च** अविच्छेदि । कालत्रयव्यापकं चेत्यर्थः । अत एवंभूतं **यस्य यशः इयत्तया** देशतः कालतो वा केनचिन्मानेन **परिच्छेत्तुं** परिमातुं **नालं** न शक्यम् ॥

**असौ कुमारस्तमजोऽनुजातस्त्रिविष्टपस्येव पतिं जयन्तः ।**
**गुर्वीं धुरं यो भुवनस्य पित्रा धुर्येण दम्यः सदृशं बिभर्ति ॥ ७८ ॥**

**असौ अजः** अजाख्यः **कुमारः** । **त्रिविष्टपस्य** स्वर्गस्य **पतिम्** इन्द्रं **जयन्तः** इव । 'जयन्तः पाकशासनिः' इत्यमरः । **तं** रघुम् **अनुजातः** तस्माज्जात इत्यर्थः । तज्जातोऽपि तदनुजातो भवति जन्यजनकयोरानन्तर्यात् । 'गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च' इति क्तः । सोपसृष्टत्वात्सकर्मकत्वम् । आह चात्रैव सूत्रे वृत्तिकारः— 'श्लिषादयः सोपसृष्टाः सकर्मका भवन्ति' इति । **दम्यः** शिक्षणीयावस्थः । **यः** अजः **गुर्वीं भुवनस्य धुरं धुर्येण** धुरंधरेण चिरनिरूढेन **पित्रा सदृशं** तुल्यं यथा तथ **बिभर्ति** । यथा कश्चिद्वत्सतरोऽपि धुर्येण महोक्षेण समं वहतीत्युपमालङ्कारो ध्वन्यते 'दम्यवत्सतरौ समौ' इत्यमरः ॥

१ भगवता वायुनाप्यनुल्लङ्घिताज्ञस्य तस्य शासनमुल्लङ्घयितुं का शक्तिस्तस्करादीनामिति भावः २ स्थानं राज्यमिति यावत् । 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु ।' इत्यमरः । अत्र तस्येति पदमुभयत्र काकाक्षिगोलकन्यायेन योज्यम् । ३ दिनकरस्तु 'चतुर्दिगावर्जनसंभृताम्' इति पठित्वा 'चतसृणां दिशामावर्जनं विजयस्तेन संभृतां संचिताम्' इति व्याचष्टे । ४ 'प्रतीर्णम्' इ. प० ५ 'अद्यापि प्रसरणशीलम्' इ. चा० व० सु० । ६ 'यशसः सकर्मविवक्षायां कश्चिदिति कर्तृपदाध्याहारो वा' हे०. ७ अनेनाजस्य महाप्राणतोक्ता ।

**कुलेन कान्त्या वयसा नवेन गुणैश्च तैस्तैर्विनयप्रधानैः ।**
**त्वमात्मनस्तुल्यममुं वृणीष्व रत्नं समागच्छतु काञ्चनेन ॥ ७९ ॥**

**कुलेन कान्त्या** लावण्येन **नवेन वयसा** यौवनेन [ **विनयप्रधानैः** ] विनयः प्रधानं येषां तैः **तैस्तैर्गुणैः** श्रुतशीलादिभिः **च आत्मनस्तुल्यं** स्वानुरूपम् **अमुम्** अजं **त्वं वृणीष्व** । किं बहुना । **रत्नं काञ्चनेन समागच्छतु** संगच्छताम् । प्रार्थनायां लोट् । रत्नकाञ्चनयोरिवात्यन्तानुरूपत्वाद्युवयोः समागमः प्रार्थ्यत इत्यर्थः ॥

**ततः सुनन्दावचनावसाने लज्जां तनूकृत्य नरेन्द्रकन्या ।**
**दृष्ट्या प्रसादामलया कुमारं प्रत्यग्रहीत्संवरणस्रजेव ॥ ८० ॥**

ततः [ **सुनन्दावचनावसाने** ] सुनन्दावचनस्यावसानेऽन्ते **नरेन्द्रकन्या** इन्दुमती **लज्जां तनूकृत्य** संकोच्य [ **प्रसादामलया** ] प्रसादेन मनःप्रसादेनामलया प्रसन्नया **दृष्ट्या** [ **संवरणस्रजा** ] संवरणस्य स्रजा स्वयंवरणार्थं स्रजा **इव कुमारम्** अजं **प्रत्यग्रहीत्** स्वीचकार । सम्यक्सानुरागमपश्यदित्यर्थः ॥

**सा यूनि तस्मिन्नभिलाषबन्धं शशाक शालीनतया न वक्तुम् ।**
**रोमाञ्चलक्ष्येण स गात्रयष्टिं भित्त्वा निराक्रामदरालकेश्याः ॥ ८१ ॥**

**सा** कुमारी **यूनि तस्मिन्** अजे **अभिलाषबन्धम्** अनुरागग्रन्थिं **शालीनतया** अधृष्टतया । ' स्यादधृष्टस्तु शालीनः ' इत्यमरः । ' शालीनकौपीने अधृष्टाकार्ययोः ' इति निपातः । **वक्तुं न शशाक** । तथापि **अरालकेश्याः सः** अभिलाषबन्धः **रोमाञ्चलक्ष्येण** पुलकव्याजेन । ' व्याजोऽपदेशो लक्ष्यं च ' इत्यमरः । **गात्रयष्टिं भित्त्वा निराक्रामत्** । सात्त्विकाविर्भावलिङ्गेन प्रकाशित इत्यर्थः ॥

**तथागतायां परिहासपूर्वं सख्यां सखी वेत्रभृदाबभाषे ।**
**आर्ये व्रजामोऽन्यत इत्यथैनां वधूरसूयाकुटिलं ददर्श ॥ ८२ ॥**

**सख्याम्** इन्दुमत्यां **तथागतायां** तथाभूतायाम् । दृष्टानुरागायां सत्यामित्यर्थः । **सखी** सहचरी । ' सख्यशिश्वीति भाषायाम् ' इति निपातनान्ङीष् । **वेत्रभृत्** सुनन्दा हे **आर्ये** पूज्ये । **अन्यतः** अन्यं प्रति **व्रजामः इति परिहासपूर्वम् आबभाषे** । **अथ वधूः** इन्दुमती **एनां** सुनन्दाम् असूयया रोषेण कुटिलं [ **असूयाकुटिलं** ] **ददर्श** । अन्यागमनस्यासह्यत्वादित्यर्थः ॥

**सा चूर्णगौरं रघुनन्दनस्य धात्रीकराभ्यां करभोपमोरुः ।**
**आसञ्जयामास यथाप्रदेशं कण्ठे गुणं मूर्तमिवानुरागम् ॥ ८३ ॥**

करभः करप्रदेशविशेषः । ' मणिबन्धादाकनिष्ठं करस्य करभो बहिः । ' इत्यमरः । करभ

---

१ आङ्व्यवधानात्समोगर्मेति न तङ् । ययोरेव समं वित्तं ययोरेव समं कुलं ( श्रुतम् ) । तयोर्विवाहो मैत्री च नोत्तमाधमयोः क्वचित् ॥ इति ' वस्तु किंचिदुपन्यस्य न्यसनं तत्सधर्मिणः । साम्यप्रतीतिरस्तीति प्रतिवस्तूपमा यथा ' ॥ इति काव्यादर्शे । इति च हे०. २ ' मृदूकृत्य ' इ.पा. ३ अनेन दृष्टिपातानां सातत्यं ध्वनितम् । ४ रोमाञ्चः सात्त्विकभावविशेषः । १५६ पृष्ठं द्रष्टव्यम्. ५ भृत्ये सखीशब्दव्यवहारो दृश्यते । तथा कुमारसंभवे 'सर्वं सखे त्वय्युपपन्नमेतत् ' इति । तथा च किराते-'स किंसखा साधु न शास्ति योऽधिपम्'इ. हे०.

उपमा ययोस्तावूरू यस्याः सा **करभोपमोरुः** । 'ऊरूत्तरपदादौपम्ये' इत्यूङ्प्रत्ययः । **सा** कुमारी [ **चूर्णगौरं** ] चूर्णेन मङ्गलचूर्णेन गौरं लोहितं **गुणं** स्रजम् । **मूर्तं** मूर्तिमन्तम् **अनुरागमिव** । **धात्रीकराभ्यां** धात्र्या उपमातुः (सुनन्दायाः) कराभ्यां **रघुनन्दनस्य** अजस्य **कण्ठे यथाप्रदेशं** यथास्थानं **आसञ्जयामास** आसक्तं कारयामास । न तु स्वयमाससञ्ज । अनौचित्यात् ॥

**तया स्रजा मङ्गलपुष्पमय्या विशालवक्षःस्थललम्बया सः ।**
**अमंस्त कण्ठार्पितबाहुपाशां विदर्भराजावरजां वरेण्यः ॥ ८४ ॥**

**वरेण्यः** वरणीय उत्कृष्टः । वृञ एण्यः । **सः** अजः **मङ्गलपुष्पमय्या** मधूकादिकुसुममय्या [ **विशालवक्षःस्थललम्बया** ] विशालवक्षःस्थले लम्बया लम्बमानया **तया** प्रकृतया **स्रजा विदर्भराजावरजाम्** इन्दुमतीं [ **कण्ठार्पितबाहुपाशां** ] कण्ठार्पितौ बाहू एव पाशौ यया ताम् **अमंस्त** । मन्यतेर्लुङ् । बाहुपाशकल्पसुखमन्वभूदित्यर्थः ॥

**शशिनमुपगतेयं कौमुदी मेघमुक्तं**
**जलनिधिमनुरूपं जह्नुकन्यावतीर्णा ।**
**इति समगुणयोगप्रीतयस्तत्र पौराः**
**श्रवणकटु नृपाणामेकवाक्यं विवव्रुः ॥ ८५ ॥**

**तत्र** स्वयंवरे समगुणयोरिन्दुमतीरघुनन्दनयोर्योगेन प्रीतिर्येषां ते **समगुणयोगप्रीतयः पौराः** पुरे भवा जनाः **इयम्** अजसंगतेन्दुमती **मेघमुक्तं** मेघैर्मुक्तं **शशिनं** शरच्चन्द्रं **उपगता कौमुदी** । **अनुरूपं** सदृशं **जलनिधिम् अवतीर्णा** प्रविष्टा **जह्नुकन्या** भागीरथी । तत्सदृशीत्यर्थः । **इति** एवं **नृपाणां** [ **श्रवणकटु** ] श्रवणयोः कटु परुषमेकमविसंवादि वाक्यम् **एकवाक्यं विवव्रुः** । मालिनीवृत्तम् ॥

**प्रमुदितवरपक्षमेकतस्तत्क्षितिपतिमण्डलमन्यतो वितानम् ।**
**उषसि सर इव प्रफुल्लपद्मं कुमुदवनप्रतिपन्ननिद्रमासीत् ॥ ८६ ॥**

**एकतः** एकत्र [ **प्रमुदितवरपक्षं** ] प्रमुदितो हृष्टो वरस्य जामातुः पक्षो वर्गो यस्य तत्तथोक्तम् । **अन्यतः** अन्यत्र **वितानं** शून्यम् । भग्नाशत्वादप्रहृष्टमित्यर्थः । **तत्क्षितिपतिमण्डलम् उषसि** प्रभाते **प्रफुल्लपद्मं** [ **कुमुदवनप्रतिपन्ननिद्रम्** ] कुमुदवनेन प्रतिपन्ननिद्रं प्राप्तनिमीलनं **सर इव** सरस्तुल्यम् । **आसीत्** । पुष्पिताग्रावृत्तमेतत् ॥

इति महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया संजीविनी-
समाख्यया व्याख्यया समेतो महाकविश्रीकालिदासकृतौ
रघुवंशे महाकाव्ये स्वयंवरवर्णनो
नाम षष्ठः सर्गः ।

---

१ एतच्चिन्त्यमु-त्तरपदत्वाभावात् । २ कुङ्कुमादिक्षोदारुणं हरिद्राचूर्णपीतं वा । इ. हे० । 'गौरः पीतेऽरुणे श्वेते' इति मेदिनी । ३ गुणशब्दस्तन्तुवाचकस्तेनात्र स्रग् लक्ष्यते । अनुरागस्य गुणत्वेनात्र कविना स्रक्शब्दं विहाय तदुपमार्थे गुणशब्दः प्रयुक्तोऽर्थः सुविशदः स्यादिति । ४ अत्र स्थलशब्दः प्रशस्तार्थः । ५ उपमानोपमेययोरभेदोक्तिः । हे०

## सप्तमः सर्गः ।

भजेमहि निपीयैकं मुहुरन्यं पयोधरम् ।
मार्गन्तं बालमालोक्याश्वासयन्तौ हि दंपती ॥

**अथोपयन्त्रा सदृशेन युक्तां स्कन्देन साक्षादिव देवसेनाम् ।**
**स्वसारमादाय विदर्भनाथः पुरप्रवेशाभिमुखो बभूव ॥ १ ॥**

अथ **विदर्भनाथः** भोजः **सदृशेन उपयन्त्रा** वरेण **युक्ताम्** । अत एव **साक्षात्** प्रत्यक्षम् । 'साक्षात्प्रत्यक्षतुल्ययोः' इत्यमरः । **स्कन्देन** युक्तां **देवसेनामिव** । देवसेना नाम देवपुत्री स्कन्दपत्नी । तामिव स्थितां **स्वसारं** भगिनीमिन्दुमतीं **आदाय** गृहीत्वा **पुरप्रवेशाभिमुखो बभूव** । उपजातिवृत्तं सर्गेऽस्मिन् ॥

**सेनानिवेशान्पृथिवीक्षितोऽपि जग्मुर्विभातग्रहमन्दभासः ।**
**भोज्यां प्रति व्यर्थमनोरथत्वाद्रूपेषु वेषेषु च साभ्यसूयाः ॥ २ ॥**

भोजस्य राज्ञो गोत्रापत्यं स्त्री भोज्या ताम् [ **भोज्याम्** ] इन्दुमतीं **प्रति व्यर्थमनोरथत्वाद् रूपेषु** आकृतिषु **वेषेषु** नेपथ्येषु **च साभ्यसूयाः** वृथेति निन्दन्तः । किंच । विभाते प्रातःकाले ये ग्रहाश्चन्द्रादयस्त इव मन्दभासाः क्षीणकान्तयः [ **विभातग्रहमन्दभासः** ] **पृथिवीक्षितः** नृपाः **अपि सेनानिवेशान्** शिबिराणि **जग्मुः** ॥

ननु क्रुद्धाश्चेद्युध्यन्तां तत्राह—

**सांनिध्ययोगात्किल तत्र शच्याः स्वयंवरक्षोभकृतामभावः ।**
**काकुत्स्थमुद्दिश्य समत्सरोऽपि शशाम तेन क्षितिपाललोकः ॥ ३ ॥**

**तत्र** स्वयंवरक्षेत्रे **शच्याः** इन्द्राण्याः । संनिधिरेव सांनिध्यम् । तस्य योगात्सद्भावात् [ **सांनिध्ययोगात्** ] हेतोः स्वयंवरस्य क्षोभकृतां विघ्नकारिणां [ **स्वयंवरक्षोभकृताम्** ] **अभावः किल** । किलेति स्वयंवरविघातकाः शच्या विनाश्यन्त इत्यागमसूचनार्थम् । **तेन**

---

१ एकं पयोधरं स्तनं निपीय मुहुरन्यं तस्याभावान्मार्गन्तमन्विष्यन्तं बालं स्कन्दं गजाननं वालोक्याश्वासयन्तौ सान्त्वयन्तौ दंपती एकशरीरस्थितिभाजौ पार्वतीपरमेश्वरौ भजेमहि । २ शक्रपुत्रीमिव । चा० सु० । पूर्वं हि ब्रह्मणा निर्मिते देवसेनादैत्यसेने इन्द्रकन्ये अभूताम् । तयोः पूर्वस्याः पतित्वे स्कन्दोऽभिषिक्त इत्यागमः । 'देवसेनेन्द्रकन्यायां सेनायां च दिवौकसाम्' इति विश्वः । हे० व० । अत्रेदं विचार्यते–देवसेनायाः स्कन्दपत्नीत्वे कथं कुमारस्य ब्रह्मचारित्वेन प्रसिद्धिरिति । उच्यते–ब्रह्म वेदः । उपचारात्तदर्थं व्रतमपि ब्रह्म । ब्रह्म चरितुं शीलमस्य तच्चरतीति वा ब्रह्मचारी । 'व्रते' इति 'सुपि' इति वा णिनिः । ३ शचीसांनिध्ये ये विघ्नमुपजनयन्ति ते त्वचिरात्प्रलीयन्त इत्यागमः । हे० । विवाहे शचीपूजनमुक्तं नारदीयसंहितायाम्–'संपूज्य प्रार्थयित्वा तां शचीदेवीं गुणाश्रयाम्' इति । उक्तं च प्रयोगरत्नाकरे नारायणभट्टैः–ततो दाता पात्रस्थसिततण्डुलपुञ्जे शचीमावाह्य षोडशोपचारैः पूजयेत् तां च कन्यैवं प्रार्थयेत्–देवेन्द्राणि नमस्तुभ्यं देवेन्द्रप्रियभामिनि । विवाहं भाग्यमारोग्यं पुत्रलाभं च देहि मे ॥ इति । इन्द्राण्याः सदैवाविधवात्वात्सुपुत्रत्वाच्च युक्तैवेयं प्रार्थना । तदुक्तं तैत्तिरीयब्राह्मणे–इन्द्राणीवाविधवा अदितिरिव सुपुत्रा । इति ।

हेतुना **काकुत्स्थम्** अजम् **उद्दिश्य समत्सरोऽपि** सवैरोऽपि **क्षितिपाललोकः शशाम** नाक्षुभ्यत् ॥

**तावत्प्रकीर्णाभिनवोपचारमिन्द्रायुधद्योतिततोरणाङ्कम् ।**
**वरः स वध्वा सह राजमार्गं प्राप ध्वजच्छायनिवारितोष्णम् ॥ ४ ॥**

'यावत्तावच्च साकल्ये' इत्यमरः । [ **तावत्प्रकीर्णाभिनवोपचारं** ] तावत्प्रकीर्णाः साकल्येन प्रसारिता अभिनवा नूतना उपचाराः पुष्पप्रकरादयो यस्य तं तथोक्तम् । इन्द्रायुधानीव द्योतितानि प्रकाशितानि तोरणान्यङ्काश्चिह्नानि यस्य तम् [ **इन्द्रायुधद्योतिततोरणाङ्कम्** ]। ध्वजानां छाया ध्वजच्छायम् । 'छाया बाहुल्ये' इति नपुंसकत्वम् । तेन निवारितमुष्णमातपो यत्र तं तथा [ **ध्वजच्छायनिवारितोष्णम्** ] । **राजमार्गं स वरः** वोढा **वध्वा सह प्राप** विवेश ॥

**ततस्तदालोकनतत्पराणां सौधेषु चामीकरजालवत्सु ।**
**बभूवुरित्थं पुरसुन्दरीणां त्यक्तान्यकार्याणि विचेष्टितानि ॥ ५ ॥**

**ततः** तदनन्तरं **चामीकरजालवत्सु** सौवर्णगवाक्षयुक्तेषु **सौधेषु** तस्याजस्यालोकने तत्पराणामासक्तानां [ **तदालोकनतत्पराणां** ] **पुरसुन्दरीणामित्थं** वक्ष्यमाणप्रकाराणि त्यक्तान्यन्यकार्याणि केशबन्धनादीनि येषु तानि [ **त्यक्तान्यकार्याणि** ] **विचेष्टितानि** व्यापाराः । 'नपुंसके भावे क्तः' । **बभूवुः** ॥

तान्येवाह पञ्चभिः श्लोकैः—

**आलोकमार्गं सहसा व्रजन्त्या कयाचिदुद्वेष्टनवान्तमाल्यः ।**
**बन्द्धुं न संभावित एव तावत्करेण रुद्धोऽपि च केशपाशः ॥ ६ ॥**

**सहसा आलोकमार्गं** गवाक्षपथं **व्रजन्त्या कयाचित्** कामिन्या **उद्वेष्टनवान्तमाल्यः** । उद्वेष्टनो द्रुतगतिवशादुन्मुक्तबन्धनः । अत एव वान्तमाल्यो बन्धविश्लेषेणोद्गीर्णमाल्यः । **करेण रुद्धः** गृहीतः **अपि च केशपाशः** केशकलापः । 'पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे ।' इत्यमरः । **तावत्** आलोकमार्गप्राप्तिपर्यन्तं **बन्द्धुं** बन्धनार्थं **न संभावितः** न चिन्तितः **एव** ॥

---

१ यावन्ते राजानो गतास्तावदेव स वरः—इ० चा० मु० व०. २ आदिशब्देन पूर्णकुम्भचन्दनसेकादीनां ग्रहः । ३ नानारत्नदीप्तिभारिति शेषः । ४ इन्द्रायुधैर्हीरकमणिभिर्विभासमानं तोरणमेवाङ्को यस्य । इ. दि० । ५ चर्माकरे आकरे भवं चामीकरम् । 'चामीकरं जातरूपम्' इत्यमरः । शिशुपालवधेप्येवं वर्णनम्—अवलोकनाय सुरविद्विषां द्विषः पटहप्रणादविहितोपहूतयः । अवधीरितान्यकरणीयसत्वराः प्रतिरथ्यमीयुरथ पौरयोषितः ॥ इ० । ६ 'वीत' इ. पा० ७ टुवम उद्गिरणे । अनुनासिकस्य क्वीति दीर्घः । उद्गिरणं भुक्तस्योर्ध्वगतिः । मुख्यार्थं परित्यज्य गौणार्थेप्येवं वर्तमानो वान्तशब्दो न ग्राम्यः । तथा काव्यादर्शे—निष्ठ्यूतोद्गीर्णवान्तादि गौणवृत्तिव्यपाश्रयात् । अतिसुन्दरमन्यत्र ग्राम्यकक्षां विगाहते ॥ इति । तावदेवशब्दाभ्यां बन्धस्य दूरावस्थोच्यते । यत्र करेण रोधमात्रमपि नास्ति तत्र बन्धस्तावद्दूरापास्त इत्यर्थः । इति च हे० । ६–११ श्लोकाः कुमारसम्भवे सप्तमसर्गेप्युपलभ्यन्ते ।

**प्रसाधिकालम्बितमग्रपादमाक्षिप्य काचिद् द्रवरागमेव ।**
**उत्सृष्टलीलागतिरा गवाक्षादलक्तकाङ्कां पदवीं ततान ॥ ७ ॥**

**काचित्** । प्रसाधिकयालंकर्त्र्यालम्बितं रञ्जनार्थं धृतं [ **प्रसाधिकालम्बितम्** ] **द्रवरागमेव** आर्द्रालक्तकमेव । [ **अग्रपादम्** ] अग्रश्चासौ पादश्चेत्यग्रेपाद[1] इति कर्मधारयसमासः । 'हस्ताग्राग्रहस्तादयो गुणगुणिनोर्भेदाभेदाभ्याम्' इति वामनः । तम् **आक्षिप्य** आकृष्य **उत्सृष्टलीलागतिः** त्यक्तमन्दगमना सती । **आ गवाक्षाद्** गवाक्षपर्यन्तं **पदवीं** पन्थानम् । **अलक्तकाङ्कां** लाक्षारागचिह्नां **ततान** विस्तारयामास ॥

**विलोचनं दक्षिणमञ्जनेन संभाव्य तद्वञ्चितवामनेत्रा ।**
**तथैव वातायनसंनिकर्षं ययौ शलाकामपरा वहन्ती ॥ ८ ॥**

**अपरा** स्त्री **दक्षिणं विलोचनमञ्जनेन संभाव्य** अलंकृत्य । संभ्रमादिति भावः । तद्वञ्चितं तेनाञ्जनेन वर्जितं वामनेत्रं[2] यस्याः सा [ **तद्वञ्चितवामनेत्रा** ] सती **तथैव शलाकाम्** अञ्जनतूलिकां **वहन्ती** सती **वातायनसंनिकर्षं** गवाक्षसमीपं **ययौ** । दक्षिणग्रहणं संभ्रमाद्व्युत्क्रमकरणद्योतनार्थम् । 'सव्यं हि पूर्वं मनुष्या अञ्जते' इति श्रुतेः ॥

**जालान्तरप्रेषितदृष्टिरन्या[3] प्रस्थानभिन्नां न बबन्ध नीवीम् ।**
**नाभिप्रविष्टाभरणप्रभेण हस्तेन तस्थाववलम्ब्य वासः ॥ ९ ॥**

**अन्या** स्त्री **जालान्तरप्रेषितदृष्टिः** गवाक्षमध्यप्रेरितदृष्टिः सती प्रस्थानेन भिन्नां त्रुटितां [ **प्रस्थानभिन्नां** ] **नीवीं** वसनग्रन्थिम् । 'नीवी परिपणे ग्रन्थौ स्त्रीणां जघनवाससि' इति विश्वः । **न बबन्ध** । किं तु नाभिप्रविष्टा आभरणानां कङ्कणादीनां प्रभा यस्य तेन [ **नाभिप्रविष्टाभरणप्रभेण** ] । प्रभैव नाभेराभरणमभूदिति भावः । **हस्तेन वासः अवलम्ब्य** गृहीत्वा **तस्थौ**[4] ॥

**अर्धाचिता[5] सत्वरमुत्थितायाः पदे पदे दुर्निमिते गलन्ती ।**
**कस्याश्चिदासीद्रशना तदानीमङ्गुष्ठमूलार्पितसूत्रशेषा ॥ १० ॥**

**सत्वरमुत्थितायाः कस्याश्चिदर्धाचिता** मणिभिरर्धगुम्फिता । **दुर्निमिते** संभ्रमाद् दुरुत्क्षिप्ते । 'डुमिञ्प्रक्षेपणे' इति धातोः कर्मणि क्तः । **पदे पदे** प्रतिपदम् । वीप्सायां द्विर्भावः । **गलन्ती** गलद्रत्ना सती **रशना** मेखला **तदानीं** गमनसमयेऽङ्गुष्ठमूलेऽर्पितं सूत्रमेव शेषो यस्याः सा [ **अङ्गुष्ठमूलार्पितसूत्रशेषा** ] **आसीत्** ॥

---

१ पादस्याग्रमग्रपादः । वाहिताग्न्यादिषु इति साधुः इति केचित् । तद्दीक्षितानामसंमतम् । अनुरूपः श्लोकः शिशुपालवधे–व्यतनोदपास्य चरणं प्रसाधिकाकरपल्लवाद्रसवशेन काचन । द्रुतयावकैकपदचित्रितावनिं पदवीं गतेव गिरिजा हरार्धताम् ॥ इति । २ नारीणां वामभागस्य श्रेष्ठत्वात् । तथा च निमित्तनिदाने–वामभागस्तु नारीणां श्रेष्ठः पुंसां तु दक्षिणः । दाने देवादिपूजायां शृंगारकरणेऽपि च ॥ इति । ३ 'प्रेक्षित' इति पा० ४ अनुरूपः श्लोकः शिशुपालवधे–वलयार्पितासितमहोपलप्रभाबहुलीकृतप्रतनुरोमराजिना । हरिवीक्षणाक्षणिकचक्षुषान्यया करपल्लवेन गलदम्बरं दधे ॥ १३–४४. ५ 'अर्धाञ्चिता' 'दुर्नमिते' इ. पा.

**तासां मुखैरासवगन्धगर्भैर्व्याप्तान्तराः सान्द्रकुतूहलानाम् ।**
**विलोलनेत्रभ्रमरैर्गवाक्षाः सहस्रपत्राभरणा इवासन् ॥ ११ ॥**

तदानीं **सान्द्रकुतूहलानां तासां** स्त्रीणामासवगन्धो गर्भे येषां तैः [ **आसवगन्धगर्भैः** ] । विलोलानि नेत्राण्येव भ्रमरा येषां तैः [ **विलोलनेत्रभ्रमरैः** ] । **मुखैः व्याप्तान्तराः** छन्नावकाशाः **गवाक्षाः सहस्रपत्राभरणा इव** कमलालंकृता इव । ' सहस्रपत्रं कमलम् ' इत्यमरः । **आसन्** ॥

**ता राघवं दृष्टिभिरापिबन्त्यो नार्यो न जग्मुर्विषयान्तराणि ।**
**तथा हि शेषेन्द्रियवृत्तिरासां सर्वात्मना चक्षुरिव प्रविष्टा ॥ १२ ॥**

**ता नार्यः** रघोरपत्यं **राघवम्** अजम् । ' तस्यापत्यम् ' इत्यण्प्रत्ययः । **दृष्टिभिः आपिबन्त्यः** अतितृष्णया पश्यन्त्यः **विषयान्तराणि** अन्यान्विषयान् **न जग्मुः** । न विविदुरित्यर्थः । **तथा हि । आसां** नारीणां **शेषेन्द्रियवृत्तिः** चक्षुर्व्यतिरिक्तश्रोत्रादीन्द्रियव्यापारः **सर्वात्मना** स्वरूपकात्स्न्र्येन **चक्षुः प्रविष्टेव** श्रोत्रादीनीन्द्रियाणि स्वातन्त्र्येण ग्रहणाशक्तेश्चक्षुरेव प्रविश्य कौतुकात्स्वयमप्येनमुपलभन्ते किमु । अन्यथा स्वस्वविषयाधिगमः किं न स्यादिति भावः ॥

' शृण्वन्कथाः श्रोत्रसुखाः कुमारः ' ( ७।१६ ) इति वक्ष्यति । ताः कथयति ' स्थाने ' इत्यादिभिस्त्रिभिः—

**स्थाने वृता भूपतिभिः परोक्षैः स्वयंवरं साधुममंस्त भोज्या ।**
**पद्मेव नारायणमन्यथासौ लभेत कान्तं कथमात्मतुल्यम् ॥ १३ ॥**

**भोज्या** इन्दुमती **परोक्षैः** अदृष्टैः **भूपतिभिः वृता** ममैवेयमिति प्रार्थितापि **स्वयंवरम्** एव **साधुं** हितम् **अमंस्त** मेने । न तु परोक्षमेव कंचित्प्रार्थकं वव्रे । **स्थाने** युक्तमेतत् । ' युक्ते द्वे सांप्रतं स्थाने ' इत्यमरः । कुतः । **अन्यथा** स्वयंवराभावे **असौ** इन्दुमती । पद्ममस्या अस्तीति **पद्मा** लक्ष्मीः । ' अर्शआदिभ्योऽच् ' इत्यच्प्रत्ययः ।

---

१०–११ श्लोकयोर्मध्ये क्षेपकोयं दृश्यते–

स्तनं धयन्तं तनयं विहाय विलोकनाय त्वरया व्रजन्ती ।
संप्रस्नुताभ्यां पदवीं स्तनाभ्यां सिषेच काचित्पयसा गवाक्षम् ॥

१ ' प्रफुल्लपद्माभरणा ' इ॰ पा॰ २ ' रम्यवस्तुसमालोके लोलता स्यात्कुतूहलम् ' इति दर्पणकारः । सान्द्रमधिकं कुतूहलं यासां तासाम् । इ॰ दि॰ । ३ अत्र मुखानां पद्मत्वं ध्वनितम् । ४ गवामक्षिणी इव गवाक्षाः । ' अक्ष्णोऽदर्शनात् ' इत्यच् । ' अवङ् स्फोटायनस्य ' इति व्यवस्थितविभाषया नित्यमवङ् । यद्वा गावो जलानि किरणा वाक्षन्ति व्याप्नुवन्त्येतमनेन वा । अक्षू व्याप्तौ । अकर्तर्यर्थे घञ् । ५ समानार्थः श्लोकांशः–' कुवलयितगवाक्षां लोचनैरङ्गनानाम् ' इति [ ११. ९३ ] । ६ शेषाणि च तानीन्द्रियाणि श्रवणादीनि तेषां वृत्तिर्व्यापार आकर्णनादिरूपः । ' सर्वेन्द्रियवृत्तिः ' इ॰ पा॰ ७ अक्षिभ्यां परे इति परोक्षास्तैस्तथोक्तैः । ' परोक्षे लिट् ' इति निपातनाद् अक्षिशब्दस्याकारस्य उत्वम् । ' प्रतिपरःसमनुभ्योऽक्ष्णः ' इत्यच् । ' परोक्षे ' इ॰ पा॰

नारायणमिव । आत्मतुल्यं स्वानुरूपं **कान्तं** पतिं **कथं लभेत** । न लभेतैव । सदसद्विवेकासौकर्यादिति भावः ॥

**परस्परेण स्पृहणीयशोभं न चेदिदं द्वन्द्वमयोजयिष्यत् ।**
**अस्मिन्द्वये रूपविधानयत्नः पत्युः प्रजानां वितथोऽभविष्यत् ॥ १४ ॥**

**स्पृहणीयशोभं** सर्वाशास्यसौन्दर्यम् । **इदं द्वन्द्वं** मिथुनम् । 'द्वन्द्वं रहस्य–' इत्यादिना निपातः । **परस्परेण नायोजयिष्यच्चेत्** न योजयेद्यदि । तर्हि **प्रजानां पत्युः** विधातुः **अस्मिन् द्वये** द्वन्द्वे **रूपविधानयत्नः** सौन्दर्यनिर्माणप्रयासः **वितथः** विफलः **अभविष्यत्** । एतादृशानुरूपस्त्रीपुंसान्तराभावादिति भावः । 'लिङ्निमित्ते लृङ् क्रियातिपत्तौ' इति लृङ् । 'कुतश्चित्कारणवैगुण्यात्क्रियाया अनभिनिष्पत्तिः क्रियातिपत्तिः' इति वृत्तिकारः ॥

**रतिस्मरौ नूनमिमावभूतां राज्ञां सहस्रेषु तथा हि बाला ।**
**गतेयमात्मप्रतिरूपमेव मनो हि जन्मान्तरसंगतिज्ञम् ॥ १५ ॥**

**रतिस्मरौ** यौ । नित्यसहचरावित्यभिप्रायः । **नूनं** तावेवेयं चायं च **इमौ** दंपती **अभूताम्** । एतद्रूपेणोत्पन्नौ । कुतः । **तथा हि** । **इयं बाला राज्ञां सहस्रेषु** राजसहस्रमध्ये । सत्यपि व्यत्यासकारण इति भावः । **आत्मप्रतिरूपं** स्वतुल्यम् **एव** । 'तुल्यसंकाशनीकाशप्रकाशप्रतिरूपकाः ।' इति दण्डी । **गता** प्राप्ता । तदपि कथं जानमत आह—**हि** यस्मात् **मनो जन्मान्तरसंगतिज्ञं** भवति । तदेवेदमिति प्रत्यभिज्ञाभावेऽपि वासनाविशेषवशादनुभूतार्थेषु मनःप्रवृत्तिरस्तीत्युक्तम् । जन्मान्तरसाहचर्यमेवात्र प्रवर्तकमिति भावः ॥

**इत्युद्गताः पौरवधूमुखेभ्यः शृण्वन्कथाः श्रोत्रसुखाः कुमारः ।**
**उद्भासितं मङ्गलसंविधाभिः संबन्धिनः सद्म समाससाद ॥ १६ ॥**

**इति** 'स्थाने वृता' ( ७।१३ ) इत्याद्युक्तप्रकारेण **पौरवधूमुखेभ्यः उद्गताः** उत्पन्नाः श्रोत्रयोः सुखा मधुराः [ **श्रोत्रसुखाः** ] । सुखशब्दो विशेष्यनिघ्नः । 'पापपुण्यसुखादि

१ यद्वा 'परस्परेण' इति शब्दः 'स्पृहणीयशोभम्' इत्यनेन सहान्वयी । इन्दुमत्याः शोभाऽजेन स्पृहणीयाजस्य शोभा चेन्दुमत्या इत्यर्थः । शोभयतीति शोभा । 'अत्र वामनः—शोभेति निपातनादिति शुभशुम्भशोभार्थाविति शुभेर्भिदादिराकृतिगणत्वादङ् सिद्ध एव । गुणप्रतिषेधाभावस्तु निपात्यते' । इ. हे० । अयं श्लोकः कुमारसंभवेऽपि दृश्यते ।

२ 'जातिस्मरौ' इति पठन्ति चा० दि० गादयः । दिनकरो व्याचष्ट च—स्मरत इति स्मरौ । पचाद्यच् । जातेर्जन्मनः स्मरौ जातिस्मरौ । महीधरवत्समासः । इति । किं त्वयं पाठो न साधुः । तयोर्जातिस्मरत्वे 'मनो हि जन्मान्तरसङ्गतिज्ञम्' इत्यस्य पौनरुक्त्यापातात् ।

३ नूनम्–निश्चये उत्प्रेक्षायां वा । 'नूनं तर्केऽर्थनिश्चये' इत्यमरः । इमावभूताम्–इमावभवताम्–इवावभूताम्; गता–याताः इ. पा० ४ मङ्गलसंविधाः पूर्णकुम्भमालादयो गीतवादित्रनर्तनादयश्च । अत्रानुरूपं वर्णनं भागवते–संसिक्तरथ्यापणमार्गचत्वरां प्रकीर्णमाल्याङ्कुरलाजतण्डुलाम् । आपूर्णकुम्भैर्दधिचन्दनोक्षितैः प्रसूनदीपावलिभिः सपल्लवैः । सवृन्तरम्भाक्रमुकैः सकेतुभिः स्वलंकृतद्वारगृहां सपट्टिकैः । तां ( मथुरां ) संप्रविष्टौ वसुदेवनन्दनौ ॥ इ० स्कं. १०. अ. ४१.

च ' इत्यमरः । **कथाः** गिरः **शृण्वन्कुमारः** अजः **मङ्गलसंविधाभिः** मङ्गलरचनाभिः **उद्भासितं** शोभितं **संबन्धिनः** कन्यादायिनः **सद्म** गृहं **समाससाद** प्राप ॥

**ततोऽवतीर्याशु करेणुकायाः स कामरूपेश्वरदत्तहस्तः ।**
**वैदर्भनिर्दिष्टमथो विवेश नारीमनांसीव चतुष्कमन्तः ॥ १७ ॥**

**ततः** अनन्तरं **करेणुकायाः** हस्तिन्याः सकाशात् **आशु** शीघ्रम् **अवतीर्य** । कामरूपेश्वरे दत्तो हस्तो येन स [ **कामरूपेश्वरदत्तहस्तः** ] **सः** अजः । **अथो** अनन्तरं वैदर्भेण निर्दिष्टं प्रदर्शितम् [ **वैदर्भनिर्दिष्टम्** ] **अन्तश्चतुष्कं** चत्वरम् । नारीणां मनांसि [ **नारीमनांसि** ] **इव विवेश** ॥

**महार्हसिंहासनसंस्थितोऽसौ सरत्नमर्घ्यं मधुपर्कमिश्रम् ।**
**भोजोपनीतं च दुकूलयुग्मं जग्राह सार्धं वनिताकटाक्षैः ॥ १८ ॥**

महार्हसिंहासने संस्थितः [ **महार्हसिंहासनसंस्थितः** ] **असौ** अजः । भोजेनोपनीतं [ **भोजोपनीतम्** ] । रत्नैः सहितं **सरत्नम्** । **मधुपर्कमिश्रम्** । **अर्घ्यं** पूजासाधनद्रव्यं दुकूलयोः क्षौमयोर्युग्मं [ **दुकूलयुग्मं** ] **च** । **वनिताकटाक्षैः** अन्यस्त्रीणामपाङ्गदर्शनैः **सार्धम्** । **जग्राह** गृहीतवान् ॥

**दुकूलवासाः स वधूसमीपं निन्ये विनीतैरवरोधरक्षैः ।**
**वेलासकाशं स्फुटफेनराजिर्नवैरुदन्वानिव चन्द्रपादैः ॥ १९ ॥**

**दुकूलवासाः सः** अजः । **विनीतैः** नम्रैः **अवरोधरक्षैः** अन्तःपुराधिकृतैः **वधूसमीपं निन्ये** । तत्र दृष्टान्तः—**स्फुटफेनराजिः उदन्वान्** समुद्रः **नवैः** नूतनैः **चन्द्रपादैः** चन्द्रकिरणैः वेलायाः सकाशं समीपं [ **वेलासकाशम्** ] **इव** । पूर्णदृष्टान्तोऽयम् ॥

**तत्रार्चितो भोजपतेः पुरोधा हुत्वाग्निमाज्यादिभिरग्निकल्पः ।**
**तमेव चाधाय विवाहसाक्ष्ये वधूवरौ संगमयांचकार ॥ २० ॥**

**तत्र** सद्मनि **अर्चितः** पूजितः **अग्निकल्पः** अग्नितुल्यः **भोजपतेः** भोजदेशाधीश्वरस्य **पुरोधाः** पुरोहितः । 'पुरोधास्तु पुरोहितः' इत्यमरः । **आज्यादिभिः** द्रव्यैः **अग्निं हुत्वा**

---

१ कामरूपेश्वरेण दत्तो हस्तो यस्य इति वा ।

२ इवशब्दार्थोऽत्र सहार्थे व्याख्यायते कश्चित् । चतुष्कमध्यं प्राविशन्नारीमनांस्यपि प्राविशदित्यर्थः । अनेन सर्वप्रियत्वमुक्तम् । आशु-अथ:अथो-अजः: वैदर्भनिर्दिष्टपथः इ. पा.

३ मधुना पृच्यते, मधुनः पर्को योगो यस्मिन्निति वा मधुपर्को दध्यादिद्रव्यपञ्चकम् । तदुक्तम्-दधि सर्पिर्जलं क्षौद्रं सिता चैतैश्च पञ्चभिः । प्रोच्यते मधुपर्कः—इति । अत्राश्वलायनः—अलंकृतः सितच्छत्रो सदारो ज्ञातिबान्धवैः । वृतो वधूगृहं गत्वा मधुपर्केण पूजितः ॥ इति ।

४ ' वनिता जनितात्यर्थानुरागायां च योषिति ' इत्यमरः । ०संस्थितः–अलंकृतः, मधुपर्कमिश्रं-मधुमच्च गव्यम्, अर्घ्य–अर्घम् । इ. पा. ५ अजस्य समुद्रोपमानमिन्दुमत्या वेलोपमानमवरोधरक्षाणां चन्द्रोपमानम् । मु० । अतः पूर्णोपमेयम् । ६ ' आज्यशमीपत्रलाजैः ' इति दि०

तमेव च अग्निं **विवाहसाक्ष्ये आधाय** । साक्षिणं च कृत्वेत्यर्थः । **वधूवरौ संगमयांचकार** योजयामास ॥

**हस्तेन हस्तं परिगृह्य वध्वाः स राजसूनुः सुतरां चकासे ।**
**अनन्तराशोकलताप्रवालं प्राप्येव चूतः प्रतिपल्लवेन ॥ २१ ॥**

**स राजसूनुः हस्तेन** स्वकीयेन **वध्वाः हस्तं परिगृह्य** । अनन्तरायाः संनिहितायाः अशोकलतायाः प्रवालं पल्लवम् [ **अनन्तराशोकलताप्रवालं** ] **प्रतिपल्लवेन** स्वकीयेन **प्राप्य चूतः** आम्रः **इव** । **सुतरां चकासे** ॥

**आसीद्वरः कण्टकितप्रकोष्ठः स्विन्नाङ्गुलिः संववृते कुमारी ।**
**वृत्तिस्तयोः पाणिसमागमेन समं विभक्तेव मनोभवस्य ॥२२ ॥**

**वरः** कण्टकितः पुलकितः प्रकोष्ठो यस्य सः [ **कण्टकितप्रकोष्ठः** ] **आसीत्** । 'सूच्यग्रे क्षुद्रशत्रौ च रोमहर्षे च कण्टकः ।' इत्यमरः । **कुमारी स्विन्नाङ्गुलिः संववृते** बभूव । अत्रोत्प्रेक्षते–**पाणिसमागमेन** पाण्योः संस्पर्शेन । कर्त्रा । **तयोः** वधूवरयोः **मनोभवस्य वृत्तिः** स्थितिः **समं विभक्ता इव** । समीकृतेवेत्यर्थः ॥ प्राक्सिद्धस्याप्यनुरागसाम्यस्य संप्रति तत्कार्यदर्शनात्पाणिस्पर्शकृतत्वमुत्प्रेक्ष्यते । अत्र वात्स्यायनः—' कन्या तु प्रथमसमागमे स्विन्नाङ्गुलिः स्विन्नमुखी च भवति । पुरुषस्तु रोमाञ्चितो भवति । एभिरनयोर्भावं परीक्षेत ' इति । स्त्रीपुरुषयोः स्वेदरोमाञ्चाभिधानं सात्त्विकमात्रोपलक्षणम् । न तु प्रतिनियमो विवक्षितः । एभिरिति बहुवचनसामर्थ्यात् । एवं सति कुमारसंभवे–' रोमोद्गमः प्रादुरभूदुमायाः स्विन्नाङ्गुलिः पुङ्गवकेतुरासीत् ।' ( ७ । ७७ ) इति व्युत्क्रमवचनं न दोषायेति । ' तस्मिन्द्वये तत्क्षणमात्मवृत्तिः समं विभक्तेव मनोभवेन ' इत्यपरार्धस्य पाठान्तरे व्याख्यानान्तरम्—तस्मिन्द्वये मिथुने तत्क्षणमात्मवृत्तिः सात्त्विकोदयरूपा वृत्तिः मनोभवेन कामेन समं विभक्तेव पृथक्कृतेव ॥

**तयोरपाङ्गप्रतिसारितानि क्रियासमापत्तिनिवर्तितानि ।**
**ह्रीयन्त्रणामानशिरे मनोज्ञामन्योन्यलोलानि विलोचनानि ॥ २३ ॥**

अपाङ्गेषु नेत्रप्रान्तेषु प्रतिसारितानि प्रवर्तितानि [ **अपाङ्गप्रतिसारितानि** ] । क्रिययोर्निरीक्षणलक्षणयोः समापत्त्या यदृच्छासङ्गत्या निवर्तितानि प्रत्याकृष्टानि

१ ' सततं कामितं तत्स्थः शिरसा सन्निधाय च ' इत्याश्वलायनकारिकायाम् । इ. हे० सङ्गमयाञ्चकार–सङ्गमयाम्बभूव । इ. पा. २ राजपुत्रः, चकासे–बभासे । इ. पा. ३ अयं चा० दि० व० आदिसंमतः पाठः ४ सात्त्विकभावा दशरूपकोक्ताः–स्तम्भः प्रलयरोमाञ्चौ स्वेदो वैवर्ण्यवेपथू । अश्रु वैस्वर्यमित्यष्टौ स्तम्भोऽस्मिन्निष्क्रियाङ्गता । प्रलयो नष्टसंज्ञत्वं शेषाः सुव्यक्तलक्षणाः ॥ ५ अनेन रत्या भाव उक्तः । तथा हि–परस्परस्योपरि दृष्टिपातं रतिप्रकर्षास्पदालङ्कमाहुः । इ. हे० । अस्यानुरूपः श्लोकः कुमारसंभवे–तयोः समापत्तिषु कातराणि किंचिद्व्यवस्थापितसंहृतानि । ह्रीयन्त्रणां तत्क्षणमन्वभूवन्नन्योन्यलोलानि विलोचनानि ॥ इति ॥ अपाङ्ग०–उपाङ्ग०, अपाङ्गप्रतिचालितानि, ० प्रतिवारितानि: क्रिया...विवर्तितानि, क्रियासमापत्तिषु कातराणि । इ. पा०

[ **क्रियासमापत्तिनिवर्तितानि** ] अन्योन्यस्मिँल्लोलानि सतृष्णानि [ **अन्योन्यलोलानि** ]। ' लोलश्चलसतृष्णयोः ' इत्यमरः । **तयोः** दंपत्योः **विलोचनानि** दृष्टयः **मनोज्ञां** रम्यां [ **ह्रीयन्त्रणाम्** ] ह्रिया निमित्तेन यन्त्रणां संकोचं **आनशिरे** प्रापुः ॥

**प्रदक्षिणप्रक्रमणात्कृशानोरुदर्चिषस्तन्मिथुनं चकासे ।**
**मेरोरुपान्तेष्विव वर्तमानमन्योन्यसंसक्तमहस्त्रियामम् ॥ २४ ॥**

**तन्मिथुनम् उदर्चिषः** उन्नतज्वालस्य **कृशानोः** वह्नेः **प्रदक्षिणप्रक्रमणात्** प्रदक्षिणीकरणात् । **मेरोः उपान्तेषु** समीपेषु **वर्तमानम्** आवर्तमानम् । मेरुं प्रदक्षिणीकुर्वदित्यर्थः । **अन्योन्यसंसक्तं** परस्परसंगतम् । मिथुनस्याप्येतद्विशेषणम् । अहश्च त्रियामा च **अहस्त्रियामं** रात्रिंदिवम् **इव** । समाहारे द्वन्द्वैकवद्भावः । **चकासे** दिदीपे ॥

**नितम्बगुर्वी गुरुणा प्रयुक्ता वधूर्विधातृप्रतिमेन तेन ।**
**चकार सा मत्तचकोरनेत्रा लज्जावती लाजविसर्गमग्नौ ॥ २५ ॥**

नितम्बेन गुर्व्यलध्वी [ **नितम्बगुर्वी** ] । ' दुर्वरालघुनोर्गुर्वी ' इति शाश्वतः । **विधातृप्रतिमेन** ब्रह्मतुल्येन **तेन गुरुणा** याजकेन **प्रयुक्ता** जुहुधीति नियुक्ता । मत्तचकोरस्येव नेत्रे यस्याः सा [ **मत्तचकोरनेत्रा** ] **लज्जावती सा वधूः अग्नौ लाजविसर्गं चकार** ॥

**हविःशमीपल्लवलाजगन्धी पुण्यः कृशानोरुदियाय धूमः ।**
**कपोलसंसर्पिशिखः स तस्या मुहूर्तकर्णोत्पलतां प्रपेदे ॥ २६ ॥**

हविष आज्यादेः शमीपल्लवानां लाजानां च गन्धोऽस्यास्तीति **हविःशमीपल्लवलाजगन्धी** । ' शमीपलाशमिश्राँल्लाजानञ्जलिना वपति ' इति कात्यायनः । **पुण्यः धूमः कृशानोः** पावकाद् **उदियाय** उद्भूतः । [ **कपोलसंसर्पिशिखः** ] कपोलयोः संसर्पिणी प्रसरणशीला शिखा यस्य स तथोक्तः **स** धूमः **तस्याः** वध्वा मुहूर्तं कर्णोत्पलतां कर्णाभरणतां [ **मुहूर्तकर्णोत्पलतां** ] **प्रपेदे** ॥

**तदञ्जनक्लेदसमाकुलाक्षं प्रम्लानबीजाङ्कुरकर्णपूरम् ।**
**वधूमुखं पाटलगण्डलेखमाचारधूमग्रहणाद्बभूव ॥ २७ ॥**

**तत् वधूमुखम्** आचारेण प्राप्ताद्धूमग्रहणात् [ **आचारधूमग्रहणात्** ] । अञ्जनस्य

१ हुतहुतवहादुत्थितेन धूमेन जनितलौहित्यात्कामोन्मत्तचकोरनेत्रसाम्यम् । इ. दि० । स च 'लाजविमोक्षम्' इति पठति विसर्गेत्यसमीचीनः पाठ इति व्याचष्टे च । विसर्गपदस्य मलपरित्यागपरत्वादश्लीलत्व्यञ्जकतयाऽसमीचीनत्वं बोध्यम् । कुमारसंभवेऽपि ' लाजमोक्षम् ' इत्येव पाठ उपलभ्यते । २ लाजमोक्षफलमाह हिरण्यके० सूत्रकृत्–'इमान् लाजानावपामि समृद्धिकरणान्मम तुभ्यं ( अग्नये ) च '। ' संवननं तदग्निरनुमन्यतामयम् ।' इत्यभिधार्येयं नार्युपब्रूतेऽग्नौ लाजान् वपन्ती । दीर्घायुरस्तु मे पतिरेधन्तां ज्ञातयो मम । स्वाहा । इति । ३ लाजहोमं कृत्वा धूममाजिघ्रेदिति गृह्यविदः । अन्ये तु वृद्धाचाराद्धूमग्रहणमित्याहुः । इति, बीजान्निर्गताः अङ्कुरा बीजाङ्कुराः।इति च दि०. बीजाङ्कुरधारणमद्यापि महाराष्ट्रेषु प्रचलितमस्ति । क्लेद–क्षोभ, गण्ड–गल्ल । इ. पा०

क्लेदोऽञ्जनक्लेदः । अञ्जनमिश्रबाष्पोदकमित्यर्थः । तेन समाकुलाक्षं [ **अञ्जनक्लेदसमाकुलाक्षम्** ] प्रम्लानो बीजाङ्कुरो यवाङ्कुर एव कर्णपूरोऽवतंसो यस्य तत् [ **प्रम्लानबीजाङ्कुरकर्णपूरं** ] **पाटलगण्डलेखम्** अरुणगण्डस्थलं च **बभूव** ॥

**तौ स्नातकैर्बन्धुमता च राज्ञा पुरंध्रिभिश्च क्रमशः प्रयुक्तम् ।**
**कन्याकुमारौ कनकासनस्थावार्द्राक्षतारोपणमन्वभूताम् ॥ २८ ॥**

**कनकासनस्थौ तौ कन्याकुमारौ स्नातकैः** गृहस्थविशेषैः । 'स्नातकस्त्वाप्लुतो व्रती' इत्यमरः । **बन्धुमता** । बन्धुपुरःसरेणेत्यर्थः । **राज्ञा च पुरंध्रिभिः** पतिपुत्रवतीभिर्नारीभिः **च क्रमशः प्रयुक्तं** स्नातकादीनां पूर्ववैशिष्ट्यात्क्रमेण कृतमार्द्राक्षतानामारोपणम् [ **आर्द्राक्षतारोपणम्** ] **अन्वभूताम्** अनुभूतवन्तौ ॥

**इति स्वसुर्भोजकुलप्रदीपः संपाद्य पाणिग्रहणं स राजा ।**
**महीपतीनां पृथगर्हणार्थं समादिदेशाधिकृतानधिश्रीः ॥ २९ ॥**

**अधिश्रीः** अधिकसंपन्नः **भोजकुलप्रदीपः स राजा इति स्वसुः** इन्दुमत्याः **पाणिग्रहणं** विवाहं **संपाद्य** कारयित्वा **महीपतीनां** राज्ञां **पृथक्** एकैकशः **अर्हणार्थं** पूजार्थम् **अधिकृतान्** अधिकारिणः **समादिदेश** आज्ञापयामास ॥

**लिङ्गैर्मुदः संवृतविक्रियास्ते ह्रदाः प्रसन्ना इव गूढनक्राः ।**
**वैदर्भमामन्त्र्य ययुस्तदीयां प्रत्यर्प्य पूजामुपदाछलेन ॥ ३० ॥**

**मुदः** संतोषस्य **लिङ्गैः** चिह्नैः कपटहासादिभिः **संवृतविक्रियाः** निगूहितमत्सराः । अत एव **प्रसन्नाः** बहिर्निर्मलाः **गूढनक्राः** अन्तर्लीनग्राहाः **ह्रदा इव** स्थिता **ते** नृपाः **वैदर्भं** भोजम् **आमन्त्र्य** आपृच्छ्य **तदीयां** वैदर्भीयां **पूजामुपदाछलेन** उपायनमिषेण **प्रत्यर्प्य ययुः** गतवन्तः ॥

**स राजलोकः कृतपूर्वसंविदारम्भसिद्धौ समयोपलभ्यम् ।**
**आदास्यमानः प्रमदामिषं तदावृत्य पन्थानमजस्य तस्थौ ॥ ३१ ॥**

**आरम्भसिद्धौ** कार्यसिद्धौ विषये । [ **कृतपूर्वसंविद्** ] पूर्वं कृता कृतपूर्वा । सुप्सुपेति समासः । कृतपूर्वा संवित्संकेतो मार्गावरोधरूप उपायो येन स तथोक्तः । 'संविद्युद्धे प्रतिज्ञायां संकेताचारनामसु ।' इति केशवः । **स राजलोकः समयोपलभ्यम्** अजप्रस्थानकाले लभ्यम् । तदा तस्यैकाकित्वादिति भावः । 'समरोपलभ्यम्' इति पाठे युद्धसाध्यमित्यर्थः । **तत्** प्रमदैवामिषं भोग्यवस्तु [ **प्रमदामिषम्** ] । 'आमिषं त्वस्त्रियां मांसे तथा स्याद्भोग्यवस्तुनि ।' इति केशवः । **आदास्यमानः** ग्रहीष्यमाणः सन् **अजस्य पन्थानमावृत्य** अवरुध्य **तस्थौ** ॥

---

१ कृतसमावर्तनैः । त्रिविधा हि स्नातकाः । विद्यास्नातको व्रतस्नातको विद्याव्रतस्नातकश्चेति । तथा हि याज्ञवल्क्यः—गुरवे तु वरं दत्त्वा स्नायीत तदनुज्ञया । वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा ॥ इ. हे० चा० दि० । २ पुरं गृहं धारयति धरतीति वा पुरंध्रिः । पृषोदरादिः । ३ एष हि लोकाचारः । इ. व. आर्द्राक्षतारोपणं हि वृद्धाचारः । इ. चा. ४ इति-इत्थम् । इ. पा. ५ अधिका श्रीर्यस्य । ६ कृतपूर्वसंधिः संरम्भसिद्धौ, आरम्भसिद्ध्यै, समयोपलभ्यम्-समरोपलभ्यं, समरेण लभ्यम् । इ. पा.

भर्तापि तावत्क्रथकैशिकानामनुष्ठितानन्तरजाविवाहः ।
सत्त्वानुरूपाहरणीकृतश्रीः प्रास्थापयद्राघवमन्वगाच्च ॥ ३२ ॥

[ **अनुष्ठितानन्तरजाविवाहः** ] अनुष्ठितः संपादितोऽनन्तरजाया अनुजाया विवाहो येन स तथोक्तः । **क्रथकैशिकानां** देशानां **भर्ता** स्वामी भोजः **अपि तावत्** तदा [ **सत्त्वानुरूपाहरणीकृतश्रीः** ] सत्त्वानुरूपमुत्साहानुरूपं यथा तथा । आ समन्तात् । अनेनानियतवस्तुदानमित्यर्थः । हरणं कन्यार्थे देयं धनम् । ' यौतुकादि तु यद्देयं सुदायो हरणं च तत् । ' इत्यमरः । आहरणीकृता श्रीर्येन तथोक्तः सन् **राघवम्** अजं **प्रास्थापयत्** प्रस्थापितवान् स्वयम् **अन्वगात्** अनुजगाम **च** ॥

तिस्रस्त्रिलोकप्रथितेन सार्धमजेन मार्गे वसतीरुषित्वा ।
तस्मादपावर्तत कुण्डिनेशः पर्वात्यये सोम इवोष्णरश्मेः ॥ ३३ ॥

कुण्डिनं विदर्भनगरं तस्येशः [ **कुण्डिनेशः** ] भोजस्त्रिषु लोकेषु प्रथितेन [ **त्रिलोकप्रथितेन** ] **अजेन सार्धं मार्गे** पथि **तिस्रः वसतीः** रात्रीः **उषित्वा** स्थित्वा । ' वसती ' रात्रिवेश्मनोः इत्यमरः । ' कालाध्वनोरत्यन्तसंयोगे ' इति द्वितीया । **पर्वात्यये** दर्शान्ते **उष्णरश्मेः** सूर्यात् **सोमः** चन्द्रः **इव तस्माद्** अजाद् **अपावर्तत** । तं विसृज्य निवृत्त इत्यर्थः ॥

प्रमन्यवः प्रागपि कोसलेन्द्रे प्रत्येकमात्तस्वतया बभूवुः ।
अतो नृपाश्चक्षमिरे समेताः स्त्रीरत्नलाभं न तदात्मजस्य ॥ ३४ ॥

**नृपाः** राजानः **प्रागपि प्रत्येकमात्तस्वतया** दिग्विजये गृहीतधनत्वेन **कोसलेन्द्रे** रघौ **प्रमन्यवः** रूढवैराः **बभूवुः** । **अतः** हेतोः **समेताः** संगताः सन्तः **तदात्मजस्य** रघुसूनोः **स्त्रीरत्नलाभं न चक्षमिरे** न सेहिरे ॥

तमुद्वहन्तं पथि भोजकन्यां रुरोध राजन्यगणः स दृप्तः ।
बलिप्रदिष्टां श्रियमाददानं त्रैविक्रमं पादमिवेन्द्रशत्रुः ॥ ३५ ॥

**दृप्तः** उद्धतः **स राजन्यगणः** राजसंघातः **भोजकन्याम् उद्वहन्तं** नयन्तं **तम्** अजं बलिना वैरोचनिना प्रदिष्टां दत्तां [ **बलिप्रदिष्टां** ] **श्रियमाददानं** स्वीकुर्वाणम् । त्रिविक्रमस्येमं **त्रैविक्रमम् पादम् इन्द्रशत्रुः** प्रह्लादः **इव** । **पथि रुरोध** । तथा च वामनपुराणे—' वैरोचनविरुद्धोऽपि प्रह्लादः प्राक्तनं स्मरन् । विष्णोस्तु क्रममाणस्य पादाम्भोजं रुरोध ह ॥ ' इति ॥

१ अत्र कात्यायनः—ऊढया कन्यया वापि पत्युः पितृगृहेऽपि वा । भ्रातुः सकाशात्पित्रोर्वा लब्धं सौदायिकं स्मृतम् ॥ ०भरणीकृतश्रीः' इ. दि० वल्लभौ पठतः । आभरणीकृतालंकारेण दत्ता श्रीर्येन स इ. व० व्याचष्टे च । 'आभरणीकृता स्त्रीधनीकृता' इ. दि० । शक्त्यानुरूपा-ह-भरणीकृतश्रीः इ. च पाठः । २ ' त्रिलोकी ' इ. पा. ३ अनेनाजस्य सूर्यत्वं ध्वनितम् । ४ इन्द्रः शत्रुर्यस्य । एषा कथा भाग० सप्त० स्कं० सप्तमाध्याये द्रष्टव्या । इन्द्रशत्रुर्वृत्रासुरो वा । इ. हे. नमुचिः । इ. मु० व०.

तस्याः स रक्षार्थमनल्पयोधमादिश्य पित्र्यं सचिवं कुमारः ।
प्रत्यग्रहीत्पार्थिववाहिनीं तां भागीरथीं शोण इवोत्तरङ्गः ॥ ३६ ॥

**स कुमारः** अजः **तस्याः** इन्दुमत्याः **रक्षार्थम् अनल्पयोधं** बहुसुभटम् । पितुरागतं **पित्र्यम्** । आप्तमित्यर्थः । **सचिवमादिश्य** आज्ञाप्य **तां पार्थिववाहिनीं** राजसेनाम् । 'ध्वजिनी वाहिनी सेना' इत्यमरः । **भागीरथीम् उत्तरङ्गः शोणः** शोणाख्यो नदः **इव** । **प्रत्यग्रहीद्** अभियुक्तवान् ॥

पत्तिः पदातिं रथिनं रथेशस्तुरङ्गसादी तुरगाधिरूढम् ।
यन्ता गजस्याभ्यपतद्गजस्थं तुल्यप्रतिद्वन्द्वि बभूव युद्धम् ॥ ३७ ॥

**पत्तिः** पादचारो योद्धा **पदातिं** पादचारम् **अभ्यपतत्** । पादाभ्यामततीति पदातिः । पादस्य पदित्यादिना पदादेशः । 'पदातिपत्तिपदगपादातिकपदाजयः ।' इत्यमरः । **रथेशः** रथिकः **रथिनं** रथारोहमभ्यपतत् । **तुरङ्गसादी** अश्वारोहः **तुरगाधिरूढम्** अश्वारोहमभ्यपतत् । 'रथिनः स्यन्दनारोहा अश्वारोहास्तु सादिनः ।' इत्यमरः । **गजस्य यन्ता** हस्त्यारोहः **गजस्थं** पुरुषमभ्यपतत् । इत्थमनेन प्रकारेण **तुल्यप्रतिद्वन्द्वि** एकजातीयप्रतिभटं **युद्धं बभूव** । अन्योन्यं द्वन्द्वं कलहोऽस्त्येषामिति प्रतिद्वन्द्विनो योधाः । 'द्वन्द्वं कलहयुग्मयोः' इत्यमरः ॥

नदत्सु तूर्येष्वविभाव्यवाचो नोदीरयन्ति स्म कुलोपदेशान् ।
बाणाक्षरैरेव परस्परस्य नामोर्जितं चापभृतः शशंसुः ॥ ३८ ॥

**तूर्येषु नदत्सु** सत्सु **अविभाव्यवाचः** अनवधार्यगिरः **चापभृतः** धानुष्काः कुलमुपदिश्यते प्रख्याप्यते यैस्ते कुलोपदेशास्तान् [ **कुलोपदेशान्** ] कुलनामानि **नोदीरयन्ति स्म** नोच्चारयामासुः । श्रोतुमशक्यत्वाद्वाचो नाब्रुवन्नित्यर्थः । किं तु **बाणाक्षरैः** बाणेषु लिखिताक्षरैः **एव परस्परस्य** अन्योन्यस्य **ऊर्जितं** प्रख्यातं **नाम शशंसुः** ऊचुः ॥

उत्थापितः संयति रेणुरश्वैः सान्द्रीकृतः स्यन्दनवंशचक्रैः ।
विस्तारितः कुञ्जरकर्णतालैर्नेत्रक्रमेणोपरुरोध सूर्यम् ॥ ३९ ॥

**संयति** संग्रामे **अश्वैः उत्थापितः** स्यन्दनवंशानां रथसमूहानां चक्रै रथाङ्गैः [ **स्यन्दनवंशचक्रैः** ] **सान्द्रीकृतः** घनीकृतः । 'वंशः पृष्ठास्थि गेहोर्ध्वकाष्ठे वेणौ गणे कुले ।' इति केशवः । कुञ्जरकर्णानां तालैस्ताडनैः [ **कुञ्जरकर्णतालैः** ] **विस्तारितः** प्रसारितः **रेणुः नेत्रक्रमेण** अंशुकपरिपाट्या । अंशुकमिवेत्यर्थः । 'स्याज्जटांशुकयोर्नेत्रम्' इति, 'क्रमोऽङ्घ्रौ परिपाट्यां च' इति च केशवः । **सूर्यम् उपरुरोध** आच्छादयामास ॥

---

१ 'ज्योतीरथा (या) म्' इति हे० चा०दि० वल्लभाः पठन्ति । ज्योतीरथां रेवाम् । यस्मात्तस्याः पुनर्निर्गमनाभावः । इ. हे० २ 'पादस्य पदाज्यातिगोपहतेषु' इति पादस्य पद इत्यदन्त आदेशः । तेन पदाजिः,पदातिः,पदगः, पदोपहतः,इति रूपचतुष्टयं सिद्धम् । ३ तालशब्दस्य करतलताडनं मुख्योर्थः । अत्र गजकर्णरेणुपटयोरेकत्र संघटनात्स एव । ४ 'चक्षुर्निरोधप्रकारेण' इ. चा० 'वंश'–'वृन्द, पुञ्ज' इ० पा०; नेत्रक्रमेण–'अनुक्रमेण' इ० वल्लभादयः पठन्ति ।

मत्स्यध्वजा वायुवशाद्विदीर्णैर्मुखैः प्रवृद्धध्वजिनीरजांसि ।
बभुः पिबन्तः परमार्थमत्स्याः पर्याविलानीव नवोदकानि ॥ ४० ॥

वायुवशाद् **विदीर्णैः** विवृत्तैः **मुखैः** प्रवृद्धानि ध्वजिनीरजांसि सैन्यरेणून् [ **प्रवृद्धध्वजिनीरजांसि** ] **पिबन्तः** गृह्णन्तः **मत्स्यध्वजाः** मत्स्याकारा ध्वजाः । **पर्याविलानि** परितः कलुषाणि **नवोदकानि पिबन्तः परमार्थमत्स्याः** सत्यमत्स्याः **इव** । **बभुः** भान्ति स्म ॥

रथो रथाङ्गध्वनिना विजज्ञे विलोलघण्टाक्वणितेन नागः ।
स्वभर्तृनामग्रहणाद्बभूव सान्द्रे रजस्यात्मपरावबोधः ॥ ४१ ॥

**सान्द्रे** प्रवृद्धे **रजसि रथः रथाङ्गध्वनिना** चक्रस्वनेन **विजज्ञे** ज्ञातः । **नागः** हस्ती विलोलानां घण्टानां क्वणितेन नादेन [ **विलोलघण्टाक्वणितेन** ] विजज्ञे । **आत्मपरावबोधः** स्वपरविवेकः । योधानामिति शेषः । स्वभर्तृणां स्वस्वामिनां नामग्रहणान्नामोच्चारणाद् [ **स्वभर्तृनामग्रहणात्** ] **बभूव** । रजोन्धतया सर्वे स्वं परं च शब्दादेवानुमाय प्रजह्रुरित्यर्थः ॥

आवृण्वतो लोचनमार्गमाजौ रजोन्धकारस्य विजृम्भितस्य ।
शस्त्रक्षताश्वद्विपवीरजन्मा बालारुणोऽभूद्रुधिरप्रवाहः ॥ ४२ ॥

**लोचनमार्गमावृण्वतः** दृष्टिपथमुपरुन्धतः । **आजौ** युद्धे **विजृम्भितस्य** व्याप्तस्य । रज एवान्धकारः तस्य [ **रजोन्धकारस्य** ] । [ **शस्त्रक्षताश्वद्विपवीरजन्मा** ] शस्त्रक्षतेभ्योऽश्वद्विपवीरेभ्यो जन्म यस्य स तथोक्तः । **रुधिरप्रवाहः बालारुणः** बालार्कः **अभूत्** । 'अरुणो भास्करेऽपि स्यात्' इत्यमरः । बालविशेषणं रुधिरसावर्ण्यार्थम् ॥

स च्छिन्नमूलः क्षतजेन रेणुस्तस्योपरिष्टात्पवनावधूतः ।
अङ्गारशेषस्य हुताशनस्य पूर्वोत्थितो धूम इवाबभासे ॥ ४३ ॥

**क्षतजेन** रुधिरेण **छिन्नमूलः** । त्याजितभूतलसम्बन्ध इत्यर्थः । **तस्य** क्षतजस्य **उपरिष्टात्पवनावधूतः** वाताहतः **स रेणुः** । **अङ्गारशेषस्य हुताशनस्य** अग्नेः **पूर्वोत्थितो धूम इव** । **आबभासे** दिदीपे ॥

प्रहारमूर्छापगमे रथस्था यन्तॄनुपालभ्य निवर्तिताश्वाः ।
यैः सादिता लक्षितपूर्वकेतूंस्तानेव सामर्षतया निजघ्नुः ॥ ४४ ॥

मूर्छितानामन्यत्र नीत्वा संरक्षणं सारथिधर्म इति **रथस्थाः** रथ एव स्थिताः ।

---

१ 'नवोदकत्वं रजःसाम्यार्थम्' इ० चा० । २ कृत्रिमवस्त्रमत्स्यं दृष्ट्वेत्युत्प्रेक्षा क्रियते। किमेते नवोदकानि पिबन्तीति भावः । इ० सु० ३ अनुरूपं समरसंरम्भवर्णनं शि० वधे 'मिश्रीभूते तत्र सैन्यद्वयेपि प्रायेणायं व्यक्तमासीद्विशेषः । आत्मीयास्ते ये पराञ्चः पुरस्तादभ्यावर्ती सम्मुखो यः परोसौ इति ॥' ४ यथा बालार्केणान्धकारो निरस्यते तथा क्षतजप्रवाहेण संग्रामरेणुरपध्वस्त इति भावः ।

संरक्षिता इत्यर्थः । रथिन इति शेषः [ **प्रहारमूर्छापगमे** ] प्रहारेण या मूर्छा तस्या अपगमे सति । **यन्तॄन्** सारथीन् **उपालभ्य** असाधु कृतमित्यधिक्षिप्य । **निवर्तिताश्वाः** पुनः रणस्थलाभिमुखं चलिताश्वाः सन्तः पूर्वं यैः स्वयं **सादिताः** हताः **लक्षितपूर्वकेतून्** पूर्वदृष्टैः केतुभिः प्रत्यभिज्ञातानित्यर्थः । **तानेव सामर्षतया निजघ्नुः** प्रजह्रुः॥

**अप्यर्धमार्गे परबाणलूना धनुर्भृतां हस्तवतां पृषत्काः ।**
**संप्रापुरेवात्मजवानुवृत्त्या पूर्वार्धभागैः फलिभिः शरव्यम् ॥ ४५ ॥**

अर्धश्चासौ मार्गश्च तस्मिन् **अर्धमार्गे** परेषां बाणैर्लूनाश्छिन्नाः [ **परबाणलूनाः** ] **अपि हस्तवतां** कृतहस्तानां **धनुर्भृतां पृषत्काः** शराः **आत्मजवानुवृत्त्या** स्ववेगानुबन्धेन हेतुना **फलिभिः** लोहाग्रवद्भिः । ‘ शस्त्रबाणाग्रयोः फलम् ’ इति विश्वः । **पूर्वार्धभागैः** । शृणातीति शरुः । तस्मै हितं **शरव्यं** लक्ष्यम् । ‘ उगवादिभ्यो यत् ’ इति यत्प्रत्ययः । ‘ लक्षं लक्ष्यं शरव्यं च ’ इत्यमरः । **संप्रापुः एव** । न तु मध्ये पतिता इत्यर्थः ॥

**आधोरणानां गजसंनिपाते शिरांसि चक्रैर्निशितैः क्षुराग्रैः ।**
**हृतान्यपि श्येननखाग्रकोटिव्यासक्तकेशानि चिरेण पेतुः ॥ ४६ ॥**

**गजसंनिपाते** गजयुद्धे **निशितैः** अत एव **क्षुराग्रैः** क्षुरस्याग्रमिवाग्रं येषां तैः **चक्रैः** आयुधविशेषैः **हृतानि** छिन्नानि **अपि** । श्येनानां पक्षिविशेषाणाम् । ‘ पक्षी श्येनः ’ इत्यमरः । नखाग्रकोटिषु व्यासक्ताः केशा येषां तानि [ **श्येननखाग्रकोटिव्यासक्तकेशानि** ] **आधोरणानां** हस्त्यारोहाणाम् । ‘ आधोरणा हस्तिपका हस्त्यारोहा निषादिनः । ’ इत्यमरः । **शिरांसि चिरेण पेतुः** पतितानि । शिरःपातात्प्रागेवारुह्य पश्चादुत्पततां पक्षिणां नखेषु केशसङ्गश्चिरपातहेतुरिति भावः ॥

**पूर्वं प्रहर्ता न जघान भूयः प्रतिप्रहाराक्षममश्वसादी ।**
**तुरङ्गमस्कन्धनिषण्णदेहं प्रत्याश्वसन्तं रिपुमाचकाङ्क्ष ॥ ४७ ॥**

**पूर्वं** प्रथमं **प्रहर्ता अश्वसादी** तौरङ्गिकः प्रतिप्रहारेऽक्षममशक्तं [ **प्रतिप्रहाराक्षमं** ] तुरङ्गमस्कन्धे निषण्णदेहं [ **तुरङ्गमस्कन्धनिषण्णदेहं** ] मूर्छितमित्यर्थः । **रिपुं भूयः न**

---

१ ‘ निवर्तिताश्वान्’ इति वल्लभसम्मतः पाठः । तस्य व्याख्या यथा–‘रथस्था रथिनः प्रहारेण या मूर्च्छा तस्या अपगमे सति । मूर्छितानामन्यत्र नीत्वा संरक्षणं सारथिधर्म इति कृत्वा निवर्तिताश्वान् यतॄन्सारथीनुपालभ्यासाधु कृतमित्यधिक्षिप्य पूर्वं यैः स्वयं सादिता हताः लक्षितपूर्वकेतून् पूर्वदृष्टैः केतुभिः प्रत्यभिज्ञातानित्यर्थः । तानेव सामर्षतया सकोपत्वेन हेतुना निजघ्नुः प्रजह्रुः, २ पूर्वं प्रहारसमये लक्षिता लक्षितपूर्वाः केतवो येषां तान्. ३ अनुरूपः श्लोकः शिशुपालवधे- ‘ कश्चिच्छस्त्रापातमूढोऽपवोढुर्लब्ध्वा भूयश्चेतनामाहवाय । व्यावर्तिष्ट क्रोशतः सख्युरुच्चैस्त्यक्तश्चात्मा का च लोकानुवृत्तिः ’॥ इति । ४ मुक्तैः, क्षुराग्रः–क्षुरप्रैः इ. क्वचित्पाठः । ५ ‘ कृत्तानि मस्तकानि यावद्भूमौ निपतन्ति तावत्प्रथमत एव श्येनैर्गृहीतानीत्यर्थः । ’ इ. चा० । अनुरूपवर्णनं शिशुपालवधे–‘लूनग्रीवात् सायकेनापरस्य द्यामत्युच्चैराननादुत्पतिष्णोः । त्रेसुर्मुग्धाः सैंहिकेयानुकारात्रौद्राकारादप्सरोवक्त्रचन्द्राः ॥ ’ इति ॥

**जघान** पुनर्न प्रजहार । किं तु **प्रत्याश्वसन्तं** पुनरुज्जीवन्तम् **आचकाङ्क्ष** । 'नायुधव्यसनप्राप्तं नार्तं नातिपरिक्षतम् ।' इति निषेधादिति भावः ॥

**तनुत्यजां वर्मभृतां विकोशैर्बृहत्सु दन्तेष्वसिभिः पतद्भिः ।**
**उद्यन्तमग्निं शमयांबभूवुर्गजा विविग्नाः करशीकरेण ॥ ४८ ॥**

**तनुत्यजां** तनुषु निस्पृहाणामित्यर्थः । **वर्मभृतां** कवचिनां संबन्धिभिः **बृहत्सु दन्तेषु पतद्भिः** अत एव **विकोशैः** पिधानादुद्धृतैः । 'कोशोऽस्त्री कुड्मले खड्गपिधाने' इत्यमरः । **असिभिः** खड्गैः **उद्यन्तम्** उत्थितम् **अग्निं विविग्नाः** भीताः **गजाः करशीकरेण** । **शमयांबभूवुः** शान्तं चक्रुः ॥

**शिलीमुखोत्कृत्तशिरःफलाढ्या च्युतैः शिरस्त्रैश्चषकोत्तरेव ।**
**रणक्षितिः शोणितमद्यकुल्या रराज मृत्योरिव पानभूमिः ॥ ४९ ॥**

शिलीमुखैर्बाणैरुत्कृत्तानि शिरांस्येव फलानि तैराढ्या संपन्ना [ **शिलीमुखोत्कृत्तशिरःफलाढ्या** ] । **च्युतैः** भ्रष्टैः [ **शिरस्त्रैः** ] शिरांसि त्रायन्त इति शिरस्त्राणि शीर्षण्यानि । 'शीर्षण्यं च शिरस्त्रे च' इत्यमरः । तैः । चषकः पानपात्रमुत्तरं यस्यां सा [ **चषकोत्तरा** ] इव । 'चषकोऽस्त्री पानपात्रम्' इत्यमरः । शोणितान्येव मद्यं तस्य कुल्याः प्रवाहाः यस्यां सा **शोणितमद्यकुल्या** । 'कुल्याल्पा कृत्रिमा सरित्' इत्यमरः । **रणक्षितिः** युद्धभूमिः **मृत्योः पानभूमिः इव रराज** ॥

**उपान्तयोर्निष्कुषितं विहङ्गैराक्षिप्य तेभ्यः पिशितप्रियापि ।**
**केयूरकोटिक्षततालुदेशा शिवा भुजच्छेदमपाचकार ॥ ५० ॥**

**उपान्तयोः** प्रान्तयोः **विहङ्गैः** पक्षिभिः **निष्कुषितं** खण्डितम् । 'इण्निष्ठायाम्' इतीडागमः । **भुजच्छेदं** भुजखण्डं **तेभ्यः** विहङ्गेभ्यः **आक्षिप्य** आच्छिद्य **पिशितप्रिया** मांसप्रिया **अपि शिवा** क्रोष्ट्री । 'शिवः कीलः शिवा कोष्ट्री' इति विश्वः । केयूरकोट्याङ्गदाग्रेण क्षतस्तालुदेशो यस्याः सा [ **केयूरकोटिक्षततालुदेशा** ] सती । **अपाचकार** अपसारयामास । किरतेः करोतेर्वा लिट् ॥

**कश्चिद्द्विषत्खड्गहृतोत्तमाङ्गः सद्यो विमानप्रभुतामुपेत्य ।**
**वामाङ्गसंसक्तसुराङ्गनः स्वं नृत्यत्कबन्धं समरे ददर्श ॥ ५१ ॥**

द्विषतः खड्गेन हृतोत्तमाङ्गश्छिन्नशिराः [ **द्विषत्खड्गहृतोत्तमाङ्गः** ] **कश्चिद्** वीरः **सद्यः विमानप्रभुतां** विमानाधिपत्यम् । देवत्वमित्यर्थः । **उपेत्य** प्राप्य । [ **वामाङ्गसंसक्तसुराङ्गनः** ] वामाङ्गसंसक्ता सव्योत्सङ्गसङ्गिनी सुराङ्गना यस्य स तथोक्तः

---

१ न भीतं न परावृत्तं सतां धर्ममनुस्मरम् ॥ इति उत्तरार्धम् । म. स्मृ. अ० ७ श्लो० ९३. २ 'वर्मवताम्' इ. पा०. गजैः सह योद्धृणामिति शेषः. ३ शुण्डादण्डजलकणैः. ४ उत्प्रेक्षालङ्कारः । ५ निःसारीकृतम् । इ. हे० चा०दि०. ६ प्रियं पिशितं यस्याः सा । पूर्वनिपातः । ७ पुरुषस्य वामभागे स्त्रीणां स्थितिरिति वृद्धाचारः । यस्मिन्युद्धे भटानां सहस्रं हन्यते तत्रैव कबन्धानां नृत्यतात्यागमः । एतेनात्र तादृशं युद्धं जातमिति द्योत्यते । इ. चा० दि० ।

सन्। **समरे नृत्यत् स्वं** निजं **कबन्धं** विशिरस्कं कलेवरं **ददर्श**। 'कबन्धोऽस्त्री क्रियायुक्तमपमूर्धकलेवरम्।' इत्यमरः॥

**अन्योन्यसूतोन्मथनादभूतां तावेव सूतौ रथिनौ च कौचित्।**
**व्यश्वौ गदाव्यायतसंप्रहारौ भग्नायुधौ बाहुविमर्दनिष्ठौ॥ ५२॥**

**कौचिद्** वीरावन्योन्यस्य सूतयोः सारथ्योरुन्मथनान्निधनात् [ **अन्योन्यसूतोन्मथनात्** ] **तौ एव सूतौ रथिनौ** योद्धारौ **च अभूताम्**। तावेव **व्यश्वौ** नष्टाश्वौ सन्तौ गदाभ्यां व्यायतो दीर्घः संप्रहारो युद्धं ययोस्तौ [ **गदाव्यायतसंप्रहारौ** ] अभूताम्। ततः **भग्नायुधौ** भग्नगदौ सन्तौ ( बाहुविमर्दे निष्ठा नाशो ययोस्तौ ) **बाहुविमर्दनिष्ठौ** बाहुयुद्धसक्तावभूताम्। 'निष्ठा निष्पत्तिनाशान्ताः' इत्यमरः॥

**परस्परेण क्षतयोः प्रहर्त्रोरुत्क्रान्तवाय्वोः समकालमेव।**
**अमर्त्यभावेऽपि कयोश्चिदासीदेकाप्सरःप्रार्थितयोर्विवादः॥ ५३॥**

**परस्परेण** अन्योन्यं **क्षतयोः** क्षततन्वोः **समकालम्** एककालं यथा तथा **एव उत्क्रान्तवाय्वोः** युगपदुद्गतप्राणयोः। एकैवाप्सराः प्रार्थिता याभ्यां तयोः **एकाप्सरःप्रार्थितयोः**। प्रार्थितैकाप्सरसोरित्यर्थः। 'वाहिताग्न्यादिषु' इति परनिपातः। अथ वा। एकस्यामप्सरसि प्रार्थितं प्रार्थना ययोरिति विग्रहः। 'स्त्रियां बहुष्वप्सरसः' इति बहुत्वाभिधानं प्रायिकम्। **कयोश्चित्प्रहर्त्रोः** योधयोः **अमर्त्यभावेऽपि** देवत्वेऽपि **विवादः** कलहः **आसीत्**। एकामिषाभिलाषो हि महद्वैरबीजमिति भावः॥

**व्यूहावुभौ तावितरेतरस्माद्भङ्गं जयं चापतुरव्यवस्थम्।**
**पश्चात्पुरोमारुतयोः प्रवृद्धौ पर्यायवृत्त्येव महार्णवोर्मी॥ ५४॥**

**तौ उभौ व्यूहौ** सेनासंघातौ। 'व्यूहस्तु बलविन्यासः' इत्यमरः। पश्चात्पुरश्च यौ मारुतौ तयोः [ **पश्चात्पुरोमारुतयोः** ] **पर्यायवृत्त्या** क्रमवृत्त्या **प्रवृद्धौ महार्णवोर्मी इव**

---

१ नष्टौ इ. पा. २ अत्राखिलयुद्धवेदित्वमुक्तम्। व०. ३ एकस्यामपि बहुवचनमस्तीति ज्ञापयितुं बहुष्वित्युक्तम्। न नियमार्थमप्सरा इत्येकवचनान्तस्यापि प्रयोगदर्शनात्। इति सुबोधिनीकारः। 'एकवचनान्तोऽप्यस्ति इति' क्षीरस्वामी। 'स्त्रियां बहुष्वप्सरसः स्यादेकत्वेऽप्सरा अपि' इति शब्दार्णवः। 'अनचि च' इति सूत्रे 'अप्सराः' इति भाष्यप्रयोगाच्च। ४ यस्तु संग्रामे [ 'रणे' इ. दि० ] हन्येत स्वर्गगामिनं देवत्वमुपगतं तमनुग्रहीतुमप्सरसः समायान्तीत्यागमः। इ. चा० दि०। इह तु समकालं मरणमुपगतयोरेकस्यामेव समायातायां देवाङ्गनायां कामुकयोरनयोर्दिवि रणमभूदित्यर्थः। चा०। युगपत्परासुतामुपगतयोरेकस्याम-वागतायां दिव्याङ्गनायां कामुकयोः स्वर्गेऽपि युद्धमासीदिति भावः। इ. दि०। 'वराप्सरःसहस्राणि शूरमायोधने हतं। त्वरितान्यभिधावन्ति मम भर्ता ममेति च॥' इति वह्निपुराणम्। ५ द्वन्द्वान्ते श्रूयमाणः शब्दः प्रत्येकमभिसंबध्यत इति न्यायान्मारुतशब्दस्योभयत्र प्रवृत्तिः। इ. चा०.

**इतरेतरस्माद्** अन्योन्यस्माद् **अव्यवस्थं** व्यवस्थारहितमनियतं **जयं भङ्गं** पराजयं **च आपतुः** प्राप्तवन्तौ ॥

**परेण भग्नेऽपि बले महौजा ययावजः प्रत्यरिसैन्यमेव ।**
**धूमो निवर्त्येत समीरणेन यतस्तु कक्षस्तत एव वह्निः ॥ ५५ ॥**

**बले** स्वसैन्ये **परेण** परबलेन **भग्नेऽपि महौजाः** महाबलः **अजः अरिसैन्यं प्रत्येव ययौ** । तथा हि । **समीरणेन** वायुना **धूमो निवर्त्येत** कक्षादपसार्येत । वर्तते-र्ण्यन्तात्कर्मणि संभावनायां लिङ् । **वह्निः तु यतः** यत्र **कक्षः** तृणम् । 'कक्षौ तु तृणवीरुधौ' इत्यमरः । **तत एव** तत्रैव । प्रवर्तत इति शेषः । सार्वविभक्तिकस्तसिः ॥

**रथी निषङ्गी कवची धनुष्मान्दृप्तः स राजन्यकमेकवीरः ।**
**निवारयामास महावराहः कल्पक्षयोद्वृत्तमिवार्णवाम्भः ॥ ५६ ॥**

**रथी** रथारूढः **निषङ्गी** तूणीरवान् । 'तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः ।' इत्यमरः । **कवची** वर्मधरः **धनुष्मान्** धनुर्धरः **दृप्तः** रणदृप्तः **एकवीरः** असहायशूरः **सः** अजः **राजन्यकं** राजसमूहम् । 'गोत्रोक्ष–' इत्यादिना वुञ्प्रत्ययः । **महावराहः** वराहावतारो विष्णुः कल्पक्षये कल्पान्तकाल उद्वृत्तमुद्वेलं [ **कल्पक्षयोद्वृत्तम्** ] **अर्णवाम्भः इव निवारयामास** ॥

**स दक्षिणं तूणमुखेन वामं व्यापारयन्हस्तमलक्ष्यताजौ ।**
**आकर्णकृष्टा सकृदस्य योद्धुर्मौर्वीव बाणान्सुषुवे रिपुघ्नान् ॥ ५७ ॥**

**सः अजः आजौ** संग्रामे **दक्षिणं हस्तं तूणमुखेन वामम्** अतिसुन्दरम् । 'वामं सव्ये प्रतीपे च द्रविणे चातिसुन्दरे ।' इति विश्वः । **व्यापारयन् अलक्ष्यत** । शरसंधानादयस्तु दुर्लक्ष्या इत्यर्थः । **सकृदाकर्णकृष्टा योद्धुः अस्य** अजस्य **मौर्वी** ज्या । रिपून्घ्नन्तीति रिपुघ्नाः तान् [ **रिपुघ्नान्** ] । 'अमनुष्यकर्तृके च' इति टक्प्रत्ययः । **बाणान्सुषुवे इव** सुषुवे किमु । इत्युत्प्रेक्षा ॥

---

१ यदा प्रतीच्यो वायुर्वर्धते तदा वीचिकल्लोलाः प्रेर्यन्ते यदा च पौरस्त्यो वायुर्वर्धते तदा प्रतीच्या भङ्गं प्राप्नुवन्तीति भावः । सु० २ तृणकाष्ठादिसमूहः । चा० ३ सैन्यस्य तृणसाम्येनाजस्य महाशक्तिश्चोक्ता । हे० । यथाग्नेः कक्षज्वालने निरालस्यता तथा कुमारस्य वैरिसेनायामित्यर्थः चा० । वह्निसदृशोऽजः शत्रुकक्षं त्यक्त्वा न क्वापि यातीति भावः । सु० । अत्रायमभिप्रायः–वायुर्हि धूमराशिमेवेतस्ततश्चालयितुं समर्थो वह्निस्तु यत्र स्थितस्तत्रैव तृणकाष्ठादिदाहक्षमो न हि प्रबलोपि वायुस्तं चालयितुं प्रभवति । एवं परसैन्येन चालितोपि स्वसैन्ये अजोऽविचलितपद एव तस्थौ । अनेनाजस्यापि सेना परिच्छदमात्रं न तु कार्यसहकारिणीति ध्वनितम् । ४ 'आ-वि-लोडयामास' इ. दि० व०दयः पठन्ति । ५ सोऽज आजौ रणे दक्षिणं वामं च हस्तं तूणमुखे निषङ्गवक्त्रे व्यापारयन्नालक्ष्यत । चा० दि० वल्लभादयोपि प्राय एवम् । एतद्व्याख्यानमसंशयं समीचीनतरम् । एवं व्याख्याने चास्य सव्यसाचित्वमपि सूच्यते । अनुरूपवर्णनं किरातेऽ–दिवः पृथिव्याः ककुभां नु मण्डलात्पतन्ति बिम्बादुत तिग्मतेजसः । सकृद्विकृष्टादथ कार्मुकान्मुनेः शराः शरीरादिति तेऽभिमेनिरे ॥। [ १४. ५३ ] इति । धनुः प्रबन्धध्वनितं रुषेव सकृद्विकृष्टा विततेव मौर्वी । संधानमुत्कर्षमिव व्युदस्य मुष्टेरसंभेद इवापवर्गे ॥ (१६.२०)॥ इति च ।

**स रोपदष्टाधिकलोहितोष्ठैर्व्यक्तोर्ध्वरेखा भ्रुकुटीर्वहद्भिः ।**
**तस्तार गां भल्लनिकृत्तकण्ठैर्हुङ्कारगर्भैर्द्विषतां शिरोभिः ॥ ५८ ॥**

**सः** अजः । रोषेण दष्टा अत एवाधिकलोहिता ओष्ठा येषां तानि तैः [ **रोषदष्टाधिकलोहितोष्ठैः** ] । व्यक्ता ऊर्ध्वा रेखा यासां ताः [ **व्यक्तोर्ध्वरेखाः** ] **भ्रुकुटीः** भ्रूभङ्गान् **वहद्भिः** । भल्लनिकृत्ता बाणविशेषच्छिन्नाः कण्ठा येषां तैः [ **भल्लनिकृत्तकण्ठैः** ] । **हुङ्कारगर्भैः** सहुङ्कारैः । हुङ्कुर्वद्भिरित्यर्थः । **द्विषतां शिरोभिः गां** भूमिं **तस्तार** छादयामास ॥

**सर्वैर्बलाङ्गैर्द्विरदप्रधानैः सर्वायुधैः कङ्कटभेदिभिश्च ।**
**सर्वप्रयत्नेन च भूमिपालास्तस्मिन्प्रजह्रुर्युधि सर्व एव ॥ ५९ ॥**

**द्विरदप्रधानैः** गजमुख्यैः **सर्वैः बलाङ्गैः** सेनाङ्गैः । ' हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टयम् । ' इत्यमरः । **कङ्कटभेदिभिः** कवचभेदिभिः । ' उरश्छदः कङ्कटको जगरः कवचोऽस्त्रियाम् । ' इत्यमरः । **सर्वायुधैः च** । बाह्यं बलमुक्त्वाऽऽन्तरमाह—**सर्वप्रयत्नेन च सर्वे एव भूमिपालाः युधि तस्मिन्** अजे **प्रजह्रुः** । तं प्रजह्रुरित्यर्थः । सर्वत्र सर्वकारकशक्तिसंभवात्कर्मणोऽप्यधिकरणविवक्षायां सप्तमी । तदुक्तम्—' अनेकशक्तियुक्तस्य विश्वस्यानेककर्मणः । सर्वदा सर्वथाभावात्किंचित्किंचिद्विवक्ष्यते ॥ ' इति ॥

**सोऽस्त्रव्रजैश्छन्नरथः परेषां ध्वजाग्रमात्रेण बभूव लक्ष्यः ।**
**नीहारमग्नो दिनपूर्वभागः किंचित्प्रकाशेन विवस्वतेव ॥ ६० ॥**

**परेषां** द्विषाम् **अस्त्रव्रजैः छन्नरथः सः** अजः । नीहारैर्हिमैर्मग्नः [ **नीहारमग्नः** ] **दिनपूर्वभागः** प्रातःकालः **किंचित्प्रकाशेन** ईषल्लक्ष्येण **विवस्वता इव** । **ध्वजाग्रमात्रेण लक्ष्यः बभूव** । ध्वजाग्रादन्यन्न किंचिल्लक्ष्यते स्मेत्यर्थः ॥

**प्रियंवदात्प्राप्तमसौ कुमारः प्रायुङ्क्त राजस्वधिराजसूनुः ।**
**गान्धर्वमस्त्रं कुसुमास्त्रकान्तः प्रस्वापनं स्वप्ननिवृत्तलौल्यः ॥ ६१ ॥**

**अधिराजसूनुः** महाराजपुत्रः **कुसुमास्त्रकान्तः** मदनसुन्दरः **स्वप्ननिवृत्तलौल्यः** स्वप्नावितृष्णः । जागरूक इत्यर्थः । **असौ कुमारः** अजः **प्रियंवदात्** पूर्वोक्ताद्गन्धर्वात् **प्राप्तं गान्धर्वं** गन्धर्वदेवताकम् । ' सास्य देवता ' इत्यण् । प्रस्वापयतीति **प्रस्वापनं** निद्राजनकम् **अस्त्रं राजसु प्रायुङ्क्त** प्रयुक्तवान् ॥

**ततो धनुष्कर्षणमूढहस्तमेकांसपर्यस्तशिरस्त्रजालम् ।**
**तस्थौ ध्वजस्तम्भनिषण्णदेहं निद्राविधेयं नरदेवसैन्यम् ॥ ६२ ॥**

**ततः** धनुष्कर्षणे चापकर्षणे मूढहस्तमव्यापृतहस्तम् [ **धनुष्कर्षणमूढहस्तम्** ] । एकस्मिन्नंसे पर्यस्तं स्रस्तं शिरस्त्राणां शीर्षण्यानां जालं समूहो यस्य तत् [ **एकांस-**

१ दष्टाधर, धरलोहिताक्षैः इ. पा. २ अनेन छिन्नशिरसो रेखात्रयं जायत इत्युक्तम् । दि० ३ अथो, अथ प्रियार्हैः. ४ जातम्.

पर्यस्तशिरस्त्रजालम् ]। ध्वजस्तम्भेषु निषण्णा अवष्टब्धा देहा यस्य तत् [ ध्वजस्तम्भनिषण्णदेहम् ]। नरदेवानां राज्ञां सेनैव सैन्यम् [ नरदेवसैन्यम् ]। चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ्प्रत्ययः। निद्राविधेयं निद्रापरतन्त्रं तस्थौ ॥

ततः प्रियोपात्तरसेऽधरोष्ठे निवेश्य दध्मौ जलजं कुमारः।
तेन स्वहस्तार्जितमेकवीरः पिबन्यशो मूर्तमिवाबभासे ॥ ६३ ॥

ततः कुमारः अजः [ प्रियोपात्तरसे ] प्रिययेन्दुमत्योपात्तरस आस्वादितमाधुर्ये। अतिश्लाघ्य इति भावः। अधरोष्ठे जलजं शङ्खं निवेश्य। ' जलजं शङ्खपद्मयोः ' इति विश्वः। दध्मौ मुखमारुतेन पूरयामास। तेन ओष्ठनिविष्टेन शङ्खेन एकवीरः स स्वहस्तार्जितं मूर्तं मूर्तिमद् यशः पिबन्निव आबभासे। यशसः शुभ्रत्वादिति भावः ॥

शङ्खस्वनाभिज्ञतया निवृत्तास्तं सन्नशत्रुं ददृशुः स्वयोधाः।
निमीलितानामिव पङ्कजानां मध्ये स्फुरन्तं प्रतिमाशशाङ्कम् ॥ ६४ ॥

[ शङ्खस्वनाभिज्ञतया ] शङ्खस्वनस्याजशङ्खध्वनेरभिज्ञतया प्रत्यभिज्ञातत्वाद् निवृत्ताः प्राक्पलाय्य संप्रति प्रत्यागताः स्वयोधाः सन्नशत्रुं निद्राणशत्रुं तम् अजम्। निमीलितानां मुकुलितानां पङ्कजानां मध्ये स्फुरन्तं प्रतिमा चासौ शशाङ्कश्च तं प्रतिमाशशाङ्कं प्रतिबिम्बचन्द्रम् इव। ददृशुः ॥

सशोणितैस्तेन शिलीमुखाग्रैर्निक्षेपिताः केतुषु पार्थिवानाम्।
यशो हृतं संप्रति राघवेण न जीवितं वः कृपयेति वर्णाः ॥ ६५ ॥

संप्रति राघवेण रघुपुत्रेण। पूर्वं रघुणेति भावः। हे राजानः। वः युष्माकं यशः हृतम्। जीवितं तु कृपया न हृतम्। न त्वशक्त्येति भावः। इति एवंरूपाः वर्णाः। एतदर्थप्रतिपादकं वाक्यमित्यर्थः। सशोणितैः शोणितदिग्धैः शिलीमुखाग्रैः बाणाग्रैः साधनैः तेन अजेन प्रयोजककर्त्रा। पार्थिवानां राज्ञां केतुषु ध्वजस्तम्भेषु निक्षेपिताः प्रयोज्यैरन्यैर्निवेशिताः। लेखिता इत्यर्थः। क्षिपतेर्ण्यन्तात्कर्मणि क्तः ॥

---

१ इति शृङ्गारिकत्वोक्तिः। 'ऊर्ध्वं त्रिरात्रमथ वा द्वादशाहं भवेद् व्रती इति' ब्रह्मचर्यविधानाद्विशेषतोऽप्रगल्भया नवोढया कुतोधरपानम्। अत्राभूतमप्यधरपानं भूतत्वेन विवक्षितम्। यथा ' वृष्टश्चेद्देवः संपन्नाः शालयः ' इति। यद्वा अन्या भूतपूर्वत्वात्प्रिया ज्ञेया। हे०। एतेनानुरागातिशयः सूचितः। ' विवाहानन्तरं द्वादशरात्रमन्ततः ' इति वचनम्। त्रिरात्रानन्तरमपि रतसंभवात्प्रियोपात्तरसेति युक्तायते। ननु नूतनपरिणीतायाः कथं स्वयमधरदानं संभवेत्। उच्यते। चिरकालाभिकांक्षितकान्तनवसंमोहनरसनिमग्नतया विगतलज्जत्वात्स्वयंवरेण प्राप्तप्रौढित्वाच्च ...नवपरिणीताया अपि युक्तम्। चा.। वल्लभदिनकरावप्येवम्। २ शङ्खधमने श्वेतत्वाद्यशःपानोत्प्रेक्षा युक्ता। चा. ३ 'निवृत्तः स सन्नशत्रुर्ददृशे स्वयोधैः ' इति पाठकल्पने स्वयोधा इत्यत्र स्वपदस्यान्वयः सम्यक्संगच्छेत।.४ ' संयति ' इ. पा.।

**स चापकोटीनिहितैकबाहुः शिरस्त्रनिष्कर्षणभिन्नमौलिः ।**
**ललाटबद्धश्रमवारिबिन्दुर्भीतां प्रियामेत्य वचो बभाषे ॥ ६६ ॥**

चापकोट्यां निहित एकबाहुर्येन स [ **चापकोटीनिहितैकबाहुः** ]। शिरस्त्रस्य निष्कर्षणेनापनयनेन भिन्नमौलिः श्लथकेशबन्धः [ **शिरस्त्रनिष्कर्षणभिन्नमौलिः** ] । 'चूडा किरीटं केशाश्च संयता मौलयस्त्रयः ।' इत्यमरः । ललाटे बद्धाः श्रमवारिबिन्दवो यस्य स [ **ललाटबद्धश्रमवारिबिन्दुः** ] । **सः** अजः **भीतां प्रियां** इन्दुमतीं **एत्य** आसाद्य **वचः बभाषे** ॥

**इतः परानर्भकहार्यशस्त्रान्वैदर्भि पश्यानुमता मयासि ।**
**एवंविधेनाहवचेष्टितेन त्वं प्रार्थ्यसे हस्तगता ममैभिः ॥ ६७ ॥**

हे **वैदर्भि** इन्दुमति **इतः** इदानीम् **अर्भकहार्यशस्त्रान्** बालकापहार्यायुधान् **परान्** शत्रून् **पश्य** । **मयानुमतासि** । द्रष्टुमिति शेषः । **एभिः** नृपैः **एवंविधेन** निद्रारूपेण **आहवचेष्टितेन** रणकर्मणा **मम हस्तगता** । हस्तगतवद्दुर्ग्रहेत्यर्थः । **त्वं प्रार्थ्यसे** । अपजिहीर्ष्यस इत्यर्थः । एवंविधेनेत्यत्र स्वहस्तनिर्देशेन सोपहासमुवाचेति द्रष्टव्यम् ॥

**तस्याः प्रतिद्वन्द्विभवाद्विषादात्सद्यो विमुक्तं मुखमाबभासे ।**
**निःश्वासबाष्पापगमात्प्रपन्नः प्रसादमात्मीयमिवात्मदर्शः ॥ ६८ ॥**

**प्रतिद्वन्द्विभवाद्** रिपूत्थाद् **विषादाद्** दैन्यात् **सद्यो विमुक्तं तस्याः मुखम्** । [ **निःश्वासबाष्पापगमात्** ] निःश्वासस्य यो बाष्प ऊष्मा । 'बाष्पो नेत्रजलोष्मणोः' इति विश्वः । तस्यापगमाद्धेतोः । **आत्मीयं प्रसादं** नैर्मल्यं **प्रपन्नः** प्राप्तः । आत्मा स्वरूपं दृश्यतेऽनेनेति **आत्मदर्शः** दर्पणः **इव आबभासे** ॥

**हृष्टापि सा ह्रीविजिता न साक्षाद्वाग्भिः सखीनां प्रियमभ्यनन्दत् ।**
**स्थली नवाम्भःपृषताभिवृष्टा मयूरकेकाभिरिवाभ्रवृन्दम् ॥ ६९ ॥**

**सा** इन्दुमती **हृष्टापि** पत्युः पौरुषेण प्रमुदितापि ह्रिया विजिता [ **ह्रीविजिता** ] यतोऽतः **प्रियम्** अजं **साक्षात्** स्वयं **न अभ्यनन्दत्** न प्रशशंस । किं तु नवैरम्भःपृषतैः पयोबिन्दुभिरभिवृष्टाभिषिक्ता [ **नवाम्भःपृषताभिवृष्टा** ] **स्थली** अकृत्रिमा भूमिः । 'जानपदकुण्डगोणस्थल-' इत्यादिनाकृत्रिमार्थे ङीप् । **अभ्रवृन्दं** मेघसमूहं **मयूरकेकाभिः इव** । **सखीनां वाग्भिः अभ्यनन्दत्** ॥

---

१ यतान् इ. पा. २ परपुरुषान्कथं पश्यामीत्यत आह–मयानुमतासि मदनुज्ञया पश्येत्यर्थः । दि० ३ ०गमं. ४ स्वरूपं इ. पा.

इति शिरसि स वामं पादमाधाय राज्ञा-
मुदवहदनवद्यां तामवद्यादपेतः ।
रथतुरगरजोभिस्तस्य रूक्षालकाग्रा[1]
समरविजयलक्ष्मीः सैव मूर्ता बभूव ॥ ७० ॥

नोद्यते नोच्यत इत्यवद्यं गर्ह्यम् । ' अवद्यपण्य—' इत्यादिना निपातः । ' कुपूयकुत्सितावद्यखेटगर्ह्याणकाः समाः । ' इत्यमरः । तस्माद् [**अवद्याद्** ] **अपेतः** निर्दोष इत्यर्थः । **सः** अजः **इति राज्ञां शिरसि वामं पादमाधाय अनवद्याम्** अदोषां **ताम्** इन्दुमतीं **उदवहत्** उपानयत् । आत्मसाच्चकारेत्यर्थः । अयमर्थः 'तमुद्वहन्तं पथि भोजकन्याम्' ( ७ । ३५ ) इत्यत्र न श्लिष्टः । **तस्य** अजस्य रथतुरगाणां रजोभिः [ **रथतुरगरजोभिः** ] रूक्षाणि परुषाण्यलकाग्राणि यस्याः सा [ **रूक्षालकाग्रा** ] **सा** इन्दुमती **एव मूर्ता** मूर्तिमती **समरविजयलक्ष्मीः बभूव** । एतल्लाभादन्यः को विजयलक्ष्मीलाभ इत्यर्थः ॥

प्रथमपरिगतार्थस्तं रघुः संनिवृत्तं
विजयिनमभिनन्द्य श्लाघ्यजायासमेतम् ।
तदुपहितकुटुम्बः शान्तिमार्गोत्सुकोऽभू-
न्न हि सति कुलधुर्ये सूर्यवंश्या गृहाय ॥ ७१ ॥

प्रथममजागमनात्प्रागेव परिगतो ज्ञातोऽर्थो विवाहविजयरूपो येन स **प्रथमपरिगतार्थः रघुः विजयिनं** विजययुक्तं **श्लाघ्यजायासमेतं संनिवृत्तं** प्रत्यागतं **तम्** अजम् **अभिनन्द्य** । तस्मिन्नज उपहितकुटुम्बः [ **तदुपहितकुटुम्बः** ] सन् । 'सुतविन्यस्तपत्नीकः' इति याज्ञवल्क्यस्मरणादिति भावः । शान्तिमार्गे मोक्षमार्ग उत्सुकः [ **शान्तिमार्गोत्सुकः** ] **अभूत्** । तथा **हि** । **कुलधुर्ये** कुलधुरंधरे **सति सूर्यवंश्या गृहाय** गृहस्थाश्रमाय **न** भवन्ति ॥

**इति महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया संजीविनीसमाख्यया व्याख्यया समेतो महाकविश्रीकालिदासकृतौ रघुवंशे महाकाव्ये अजपाणिग्रहणं नाम सप्तमः सर्गः ।**

---

१ ' रू–रु–क्षालकान्ता ' इ॰ पा॰ २ ननु विवाहस्य पूर्वमेव जातत्वात्कथमिदानीमुदवहदिति प्रयोगः । उच्यते । प्रबलतरवैरिनिवहविजयादिदानीमेवेन्दुमतीलाभाद्विवाहोऽभूत् । यदि तान्शत्रून्न व्यजेष्यत तर्हि तैरिन्दुमत्यपहारे कृते विवाहोऽप्यकृत एव स्यादिति भावः । इति दि॰ । चा॰ अपि प्राय एवम् ।

# अष्टमः सर्गः ।

हेरम्बमवलम्ब्येऽहं यस्मिन्पातालकेलिषु ।
दन्तेनोदस्यति क्षोणीं विश्राम्यन्ति फणीश्वराः ॥

**अथ तस्य विवाहकौतुकं ललितं बिभ्रत एव पार्थिवः ।**
**वसुधामपि हस्तगामिनीमकरोदिन्दुमतीमिवापराम् ॥ १ ॥**

अथ **पार्थिवः** रघुः **ललितं** सुभगं **विवाहकौतुकं** विवाहमङ्गलं विवाहहस्तसूत्रं वा **बिभ्रत एव** । ' कौतुकं मङ्गले हर्षे हस्तसूत्रे कुतूहले ।' इति शाश्वतः । **तस्य** अजस्य । **अपरामिन्दुमतीमिव** । **वसुधामपि हस्तगामिनीमकरोत्** । अस्मिन्सर्गे वैतालीयं छन्दः ॥

**दुरितैरपि कर्तुमात्मसात्प्रयतन्ते नृपसूनवो हि यत् ।**
**तदुपस्थितमग्रहीदजः पितुराज्ञेति न भोगतृष्णया ॥ २ ॥**

**नृपसूनवः** राजपुत्राः **यद्** राज्यं **दुरितैः अपि** विषप्रयोगादिनिषिद्धोपायैरपि **आत्मसात्** स्वाधीनम् । ' तदधीनवचने ' इति सातिप्रत्ययः । **कर्तुं प्रयतन्ते हि** । प्रवर्तन्त एवेत्यर्थः । हिशब्दोऽवधारणे । ' हि हेतावधारणे ' इत्यमरः । **उपस्थितं** स्वतः प्राप्तं **तद्** राज्यम् **अजः पितुराज्ञेति** हेतोः **अग्रहीत्** स्वीचकार । **भोगतृष्णया** तु **न** अग्रहीत ॥

**अनुभूय वसिष्ठसंभृतैः सलिलैस्तेन सहाभिषेचनम् ।**
**विशदोच्छ्वसितेन मेदिनी कथयामास कृतार्थतामिव ॥ ३ ॥**

**मेदिनी** भूमिः । महिषी च ध्वन्यते । वसिष्ठेन संभृतैः [ **वसिष्ठसंभृतैः** ] । **सलिलैः तेन** अजेन । **सह अभिषेचनमनुभूय विशदोच्छ्वसितेन** स्फुटमुद्बृंहणेन । आनन्दनिर्मलोच्छ्वसितेन चेति ध्वन्यते । **कृतार्थतां** गुणवद्भर्तृलाभकृतं साफल्यं **कथयामास इव** । न चैतावता पूर्वेषामपकर्षः प्रशंसापरत्वात् । ' सर्वत्र जयमान्विच्छेत्पुत्रादिच्छेत्पराजयम् । ' इत्यङ्गीकृतत्वाच्च ॥

**स बभूव दुरासदः परैर्गुरुणाथर्वविदा कृतक्रियः ।**
**पवनाग्निसमागमो ह्ययं सहितं ब्रह्म यदस्त्रतेजसा ॥ ४ ॥**

---

१ हेरम्बम् गजाननं । पातालकेलिषु पातालक्रीडासु । क्षोणीं पृथ्वीमुदस्यत्युत्क्षिपति सति विश्राम्यन्ति तत्काले भुवो भारापनयादिति भावः । २ 'अत ऊर्ध्वमक्षारालवणाशिनौ ब्रह्मचारिणावलंकुर्वाणावधःशायिनौ स्यातां त्रिरात्रं संवत्सरं वा इत्याश्वलायनवचनान्न निवर्तनक्षण एव हस्तसूत्रत्यागः । ३ एतदेव वियोगिनी सुन्दरीति चोच्यते । तल्लक्षणम्–'विषमे ससजा गुरुः समे सभरालोऽथ गुरुर्वियोगिनी ।' इति ॥ ४ अत्र कामन्दकः—राजपुत्रा मदोन्मत्ता गजा इव निरंकुशाः । भ्रातरं पितरं वापि निघ्नन्त्येवाभिमानिनः ॥ ५ ' महाभिषेचनम् ' इ. पा०. ६ ' दुरासदोऽरिभिः ' इ. पा.

**अथर्वविदा** अथर्ववेदाभिज्ञेन **गुरुणा** वसिष्ठेन **कृतक्रियः** । अथर्वोक्तविधिना कृताभिषेकसंस्कार इत्यर्थः । **सः अजः परैः** शत्रुभिः **दुरासदः** दुर्धर्षः **बभूव** । तथा हि । **अस्त्रतेजसा** क्षत्रतेजसा **सहितं** युक्तं **यद्ब्रह्म** ब्रह्मतेजः । **अयं पवनाग्निसमागमो हि** । तत्कल्प इत्यर्थः । पवनाग्नीत्यत्र पूर्वनिपातशास्त्रस्यानित्यत्वात् ' द्वन्द्वे घि ' इति नाग्निशब्दस्य पूर्वनिपातः । तथा च काशिकायाम्–' अदमेकस्तु लक्षणहेत्वोरिति निर्देशः पूर्वनिपातव्यभिचारचिह्नम् ' इति । क्षात्रेणैवायं दुर्धर्षः किमयं पुनर्वसिष्ठमन्त्रप्रभावे सतीत्यर्थः । अत्र मनुः–' नाक्षत्रं ब्रह्म भवति क्षत्रं नाब्रह्म वर्धते । ब्रह्मक्षत्रे तु संयुक्ते इहामुत्र च वर्धते ॥ ' इति ॥

**रघुमेव निवृत्तयौवनं तममन्यन्त नवेश्वरं[3] प्रजाः ।**
**स हि तस्य न केवलां श्रियं प्रतिपेदे सकलान्गुणानपि ॥ ५ ॥**

**प्रजाः नवेश्वरं तम्** अजं **निवृत्तयौवनं** प्रत्यावृत्तयौवनं **रघुमेवामन्यन्त** । न किंचित्ततोत्र भेदोस्तीत्यर्थः । कुतः । **हि** यस्मात् **सः** अजः **तस्य** रघोः **केवलाम्** एकां **श्रियं न प्रतिपेदे** । किं तु **सकलान्गुणान्** शौर्यदाक्षिण्यादीन् **अपि** प्रतिपेदे । अतस्तद्गुणयोगात्तद्बुद्धिर्युक्तेत्यर्थः ॥

**अधिकं शुशुभे शुभंयुना द्वितयेन द्वयमेव संगतम् ।**
**पदमृद्धमजेन पैतृकं विनयेनास्य नवं च यौवनम् ॥ ६ ॥**

**द्वयमेव शुभंयुना** शुभवता । ' शुभंयुस्तु शुभान्वितः ' इत्यमरः । ' अहंशुभयोर्युस् ' इति युस्प्रत्ययः । **द्वितयेन संगतं** युतं सद् **अधिकं शुशुभे** । किं केनेत्याह–पदमिति । **पैतृकं** पितुरागतम् । ' ऋतष्ठञ् ' इति ठञ्प्रत्ययः । **ऋद्धं** समृद्धं **पदं** राज्यम् **अजेन** । **अस्य** अजस्य **नवं यौवनं विनयेन[4]** इन्द्रियजयेन **च** । ' विनयो हीन्द्रियजयस्तद्युक्तः शास्त्रमर्हति । ' इति कामन्दकः । राज्यस्थोऽपि प्राकृतवन्न दृप्तोऽभूदित्यर्थः ॥

**सदयं बुभुजे महाभुजः सहसोद्वेगमियं व्रजेदिति ।**
**अचिरोपनतां स मेदिनीं नवपाणिग्रहणां वधूमिव ॥ ७ ॥**

**महाभुजः सः** अजः **अचिरोपनतां** नवोपगतां **मेदिनीं** भुवम् । नवं पाणिग्रहणं विवाहो यस्यास्तां [ **नवपाणिग्रहणाम्** ] नवोढां **वधूमिव** । **सहसा** बलात्कारेण चेत् ' सहो बलं सहा मार्गः ' इत्यमरः । **इयं** मेदिनी वधूर्वा **उद्वेगं** भयं **व्रजेदिति** हेतोः **सदयं** सकृपं **बुभुजे** भुक्तवान् । ' भुजोऽनवने ' इत्यात्मनेपदम् ॥

---

१ शताच्छिद्रेण पात्रेण सौवर्णेन यथाविधि । अभिषिञ्चेत धर्मज्ञः सम्यग्वेदविशारदः ॥ या ओषधारोषधिभिः श्रुताभिः सुसमाहिताः । रथे तिष्ठति गन्धश्च आब्रह्मन्ब्राह्मणेति च ॥ × × × आशुः शिशान इत्येवं सर्वरत्नैश्च भार्गव । ये देवाः पुरःसदेति कुशाग्रैः परिमार्जयेत् ॥ ऋग्वेदवित्तता राज्ञो रोचनया यथाविधि । मूर्धानं च तथा कण्ठे गन्धद्वारेति संस्पृशेत् ॥ × × × ध्रुवाद्यौरिति मन्त्रेण सोपवेश्यः पुरोधसा । वृषस्य वृषदंशस्य द्वीपिनश्च भृगूद्वह ॥ तेषामुपरि सिंहस्य व्याघ्रस्य च ततः परम् । तत्रोपविष्टस्य तदा प्रतीहारः प्रदर्शयेत् ॥ इत्याद्यभिषेकप्रकारो देवीपुराणे द्रष्टव्यः । २ अनुरूपभावो महावीरच०–दुरासदं च तत्तेजः क्षात्रं यद् ब्रह्मसंयुतम् । इति । ३ ' नरेश्वरम् ' इ. पा०. ४ विनयेनास्यैव नवं यौवनं ( विबभौ ) यौवने विनयस्तु दुर्लभः । अयं तु प्राप्तैश्वर्यो यौवनेपि विनयवानासीदिति भावः । दि०. ५ 'मुग्धामर्जयत्येष मृदूपायेन सान्त्वयन् ' इति रुद्रटः । रतिरहस्येपि–" सौम्यैरालिङ्गनैर्वाक्यैश्चुम्बनैश्चापि सान्त्वयेत् , इ. हे० चा०

**अहमेव मतो महीपतेरिति सर्वः प्रकृतिष्वचिन्तयत् ।**
**उदधेरिव निम्नगाशतेष्वभवन्नास्य विमानना क्वचित् ॥ ८ ॥**

**प्रकृतिषु** प्रजासु मध्ये **सर्वः** अपि जनः । अथ वा प्रकृतिष्वित्यस्याहमित्यनेनान्वयः । व्यवधानं तु सह्यम् । सर्वोऽपि जनः प्रकृतिषु **अहमेव महीपतेर्मतः** महीपतिना मन्यमानः । 'मतिबुद्धिपूजार्थेभ्यश्च' इति वर्तमाने क्तः । 'क्तस्य च वर्तमाने' इति षष्ठी । **इति अचिन्तयत्** अमन्यत । **उदधेः निम्नगाशतेषु इव अस्य** नृपस्य कर्तुः । 'कर्तृकर्मणोः कृति' इति कर्तरि षष्ठी । **क्वचिद्** अपि जनविषये **विमानना** अवगणना तिरस्कारः **न अभवत्** । यतो न कंचिदवमन्यतेऽतः सर्वोऽप्यहमेवास्य मत इत्यमन्यतेत्यर्थः ॥

**न खरो न च भूयसा मृदुः पवमानः पृथिवीरुहानिव ।**
**स पुरस्कृतमध्यमक्रमो नमयामास नृपाननुद्धरन् ॥ ९ ॥**

**स** नृपः **भूयसा** बाहुल्येन **खरः** तीक्ष्णः **न** । भूयसा **च मृदुः** अतिमृदुरपि **न** । किं तु **पुरस्कृतमध्यमक्रमः** सन् । मध्यमपरिपाटीमवलम्ब्येत्यर्थः । **पवमानः** वायुः **पृथिवीरुहान्** तरून् **इव** । **नृपान् अनुद्धरन्** अनुत्पाटयन्नेव **नमयामास** । अत्र कामन्दकः—'मृदुश्चेदवमन्येत तीक्ष्णादुद्विजते जनः । तीक्ष्णश्चैव मृदुश्चैव प्रजानां स च संमतः ( सरसो मतः—इ० पा० ) ॥' इति ॥

**अथ वीक्ष्य रघुः प्रतिष्ठितं प्रकृतिष्वात्मजमात्मवत्तया ।**
**विषयेषु विनाशधर्मसु त्रिदिवस्थेष्वपि निःस्पृहोऽभवत् ॥ १० ॥**

**अथ रघुरात्मजं** पुत्रं **आत्मवत्तया** सत्त्ववत्तया । निर्विकारमनस्कतयेत्यर्थः । 'उदयादिष्वविकृतिर्मनसः सत्त्वमुच्यते । आत्मवान्सत्त्ववानुक्तः' इत्युत्पलमालायाम् । **प्रकृतिषु** अमात्यादिषु **प्रतिष्ठितं** रूढमूलं **वीक्ष्य** ज्ञात्वा विनाशो धर्मो येषां तेषु **विनाशधर्मसु** । अनित्येष्वित्यर्थः । 'धर्मादनिच्केवलात्' इत्यनिच्प्रत्ययः समासान्तः । **त्रिदिवस्थेषु** स्वर्गस्थेषु **अपि विषयेषु** शब्दादिषु **निःस्पृहः** निर्गतेच्छः **अभवत्** ॥

कुलधर्मश्चायमेवेत्याह—

**गुणवत्सुतरोपितश्रियः परिणामे हि दिलीपवंशजाः ।**
**पदवीं तरुवल्कवाससां प्रयताः संयमिनां प्रपेदिरे ॥ ११ ॥**

---

१ 'अस्य भूपतेः' इ. पा० २ 'क्रियः' इ. पा० ३ महाभारतेपि—तीक्ष्णादुद्विजते लोको मृदुः सर्वत्र बाध्यते । एवं बुद्ध्वा महाराज मा तीक्ष्णो मा मृदुर्भव ॥ अनुरूपभावः किराता०—समवृत्तिरुपैति मार्दवं समये यश्च तनोति तिग्मताम् । अधितिष्ठति लोकमोजसा स विवस्वानिव मेदिनीपतिः ॥इति । भङ्ग्यन्तरेणोक्तपूर्वोयं भावः—'आददे नातिशीतोष्णो नभस्वानिव दक्षिणः ।' इत्यत्र । ४अयं श्लोकोऽन्यथा पठ्यते कैश्चिद्यथा—अथ वीक्ष्य गुणैः प्रतिष्ठितं प्रकृतिष्वात्मजमाभिगामिकैः । पदवीं परिणामदेशिनीं रघुरादत्त वनान्तगामिनाम् ॥ ५अयं चा० व दि० रादीनामपि संमतः पा० । दि० व्याचष्टे च । आत्मना तुल्यं वर्तत इत्यात्मवान् । तस्य भावस्तत्तया । इति । मल्लि० तु 'आत्मवित्तया' इति मुख्यं पाठं गृहीत्वा 'आत्मज्ञत्वेन निःस्पृहोऽभवदिति' व्याख्यातवान् । ६ 'विनाशधर्मिषु' इ. पा०

**दिलीपवंशजाः परिणामे** वार्द्धके गुणवत्सुतेषु रोपितश्रियः स्थापितलक्ष्मीकाः [ **गुणवत्सुतरोपितश्रियः** ] **प्रयताः** च सन्तः । तरुवल्कान्येव वासांसि येषां तेषां [ **तरुवल्कवाससां** ] **संयमिनां** यतीनां **पदवीं प्रपेदिरे हि** । यस्मात्तस्मादस्यापीदमुचितमित्यर्थः ॥

**तमरण्यसमाश्रयोन्मुखं शिरसा वेष्टनशोभिना सुतः ।**
**पितरं प्रणिपत्य पादयोरपरित्यागमयाचतात्मनः ॥ १२ ॥**

**अरण्यसमाश्रयोन्मुखं** वनवासोद्युक्तं **पितरं तं** रघुं **सुतः** अजः । **वेष्टनशोभिना** उष्णीषमनोहरेण **शिरसा पादयोः प्रणिपत्य । आत्मनः अपरित्यागम् अयाचत** । मां परित्यज्य न गन्तव्यमिति प्रार्थितवानित्यर्थः ॥

**रघुरश्रुमुखस्य तस्य तत्कृतवानीप्सितमात्मजप्रियः ।**
**न तु सर्प इव त्वचं पुनः प्रतिपेदे व्यपवर्जितां श्रियम् ॥ १३ ॥**

**आत्मजप्रियः** पुत्रवत्सलः **रघुः** । अश्रूणि मुखे यस्य तस्य **अश्रुमुखस्य तस्य** अजस्य **तत्** अपरित्यागरूपम् **ईप्सितम्** अभिलषितं **कृतवान्** । किं **तु सर्पः त्वचमिव व्यपवर्जितां** त्यक्तां **श्रियं पुनः न प्रतिपेदे** न प्राप ॥

**स[3] किलाश्रममन्त्यमाश्रितो निवसन्नावसथे पुराद्बहिः ।**
**समुपास्यत पुत्रभोग्यया स्नुषयेवाविकृतेन्द्रियः श्रिया ॥ १४ ॥**

**स** रघुः **किल अन्त्यमाश्रमं** प्रव्रज्यां चतुर्थाश्रममित्यर्थः । **आश्रितः पुराद्** नगराद् **बहिः आवसथे** स्थाने **निवसन् अविकृतेन्द्रियः** । जितेन्द्रियः सन्नित्यर्थः । अत एव **स्नुषया इव** वध्वेव **पुत्रभोग्यया** । न स्वभोग्यया । **श्रिया समुपास्यत** शुश्रूषितः । जितेन्द्रियस्य तस्य स्नुषयेव श्रियापि पुष्पफलोदकाहरणादिशुश्रूषाव्यतिरेकेण न किंचिदपेक्षितमासीदित्यर्थः । अत्र यद्यपि 'ब्राह्मणाः प्रव्रजन्ति' इति श्रुतेः । 'आत्मन्यग्नीन्समारोप्य ब्राह्मणः प्रव्रजेद् गृहात् ।' इति मनुस्मरणात् । 'मुखजानामयं धर्मो यद्विष्णोर्लिङ्गधारणम् । बाहुजातोरुजातानामयं धर्मो न विद्यते ॥' इति निषेधाच्च ब्राह्मणस्यैव प्रव्रज्या न क्षत्रियादेरित्याहुस्तथापि 'यदहरेव विरजेत्तदहरेव प्रव्रजेत् ।' इत्यादिश्रुतेस्त्रैवर्णिकसाधारण्यात् । 'त्रयाणां वर्णानां वेदमधीत्य चत्वार आश्रमाः' इति सूत्रकारवचनात् । 'ब्राह्मणः क्षत्रियो वापि वैश्यो वा प्रव्रजेद् गृहात् ।' इति स्मरणात् 'मुखजानामयं धर्मो वैष्णवं लिङ्गधारणम् । बाहुजातोरुजातानां त्रिदण्डं न विधीयते ॥' इति निषेधस्य त्रिदण्डविषयत्वदर्शनाच्च । कुत्रचिद्ब्राह्मणपदस्योपलक्षणमाचक्षाणाः केचित्त्रै-

---

१ 'ककुत्स्थ०' इ० चा० दि०व०दि० संमतः पा० २ 'गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः । सापत्यो निरपत्यो वा ( अपत्यस्यैव चापत्यं—इ० पा० ) तदारण्यं समाश्रयेत् ॥' इति भावः । ३ 'स किल क्षितिपालवेश्मनो निवसन्नावसथे यतिप्रियः ।' इ० का० ४ 'क्वापि कस्यचिद्ब्राह्मणग्रहणस्य' इ० पा० ।

वर्णिकाधिकारं प्रतिपेदिरे। तथा सति 'स किलाश्रममन्त्यमाश्रितः (८।१४) इत्यत्रापि कविनाप्ययमेव पक्षो विवक्षित इति प्रतीमः। अन्यथा वानप्रस्थाश्रमतया व्याख्याने 'विदधे विधिमस्य नैष्ठिकं यतिभिः सार्धमनग्निमग्निचित्।' (८।२५) इति वक्ष्यमाणेनानग्निसंस्कारेण विरोधः स्यात्। अग्निसंस्काररहितस्य वानप्रस्थस्यैवाभावात्। इत्यलं प्रासङ्गिकेन॥

**प्रशमस्थितपूर्वपार्थिवं कुलमभ्युद्यतनूतनेश्वरम्।**
**नभसा निभृतेन्दुना तुलामुदितार्केण समारुरोह तत्॥ १५॥**

प्रशमे स्थितः पूर्वपार्थिवो रघुर्यस्य तत् [ **प्रशमस्थितपूर्वपार्थिवम्** ]। अभ्युद्यतोऽभ्युदितो नूतनेश्वरोऽजो यस्य तत् [ **अभ्युद्यतनूतनेश्वरम्** ]। **तत्** प्रसिद्धं **कुलं निभृतेन्दुना** अस्तमयासन्नचन्द्रेण **उदितार्केण** प्रकटितसूर्येण च **नभसा तुलां** सादृश्यं **समारुरोह** प्राप। न च नभसा तुलामित्यत्र 'तुल्यार्थैः–' इत्यादिना प्रतिषेधस्तृतीयायाः। तस्य सदृशवाचितुलाशब्दविषयत्वात्। 'कृष्णस्य तुला नास्ति' इति प्रयोगात्। अस्य च सादृश्यवाचित्वात्॥

**यतिपार्थिवलिङ्गधारिणौ ददृशाते रघुराघवौ जनैः।**
**अपवर्गमहोदयार्थयोर्भुवमंशाविव धर्मयोर्गतौ॥ १६॥**

यतिः भिक्षुः। पार्थिवो राजा। तयोर्लिङ्गधारिणौ [ **यतिपार्थिवलिङ्गधारिणौ** ] **रघुराघवौ** रघुतत्सुतौ। **अपवर्गमहोदयार्थयोः** मोक्षाभ्युदयफलयोः **धर्मयोः** निवर्तकप्रवर्तकरूपयोरित्यर्थः। **भुवं गतौ** भूलोकमवतीर्णौ **अंशौ इव**। **जनैः ददृशाते** दृष्टौ॥

**अजिताधिगमाय मन्त्रिभिर्युयुजे नीतिविशारदैरजः।**
**अनपायिपदोपलब्धये रघुराप्तैः समियाय योगिभिः॥ १७॥**

**अजः अजिताधिगमाय** अजितपदलाभाय **नीतिविशारदैः** नीतिज्ञैः **मन्त्रिभिः युयुजे** संगतः। **रघुः** अप्यनपायिपदस्योपलब्धये मोक्षस्य प्राप्तये [ **अनपायिपदोपलब्धये** ] यथार्थदर्शिनो यथार्थवादिनश्चाप्ताः। तैः **आप्तैः योगिभिः समियाय** संगतः। उभयत्राप्युपायाचिन्तार्थमिति शेषः॥

**नृपतिः प्रकृतीरवेक्षितुं व्यवहारासनमाददे युवा।**
**परिचेतुमुपांशु धारणां कुशपूतं प्रवयास्तु विष्टरम्॥ १८॥**

---

१ 'ऊर्जस्वल०' इ० हे० चा० दि० रादयः पठन्ति। २ 'अपवर्ग'–अपवृत्ति, 'अर्थयोः'–अर्थिनो। इ. पा. ३ जितेन्द्रियत्वेनात्र यतिशब्दप्रयोगः। ४ यतो धर्मादेव मोक्षोऽर्थश्च संभवति। 'यतोऽभ्युदयो निःश्रेयसंहेतुः स धर्मः' इति कात्यायनः। यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः इति कणभुक्। ५ '०विचक्षणैः' इ. पा.। ६ 'अनपाय' इ. पा०; अयं श्लोकोऽन्यथा पठ्यते कैश्चित्–समपृच्यत भूपतिर्युवा सचिवैः प्रत्यहमर्थसिद्धये। अपुनर्जननोपपत्तये प्रवयाः संयमिभिर्मनीषिभिः॥ इति। ७ अजितानां शत्रूणामधिगमाय जयाय ज्ञानाय वा अजितानां राज्यांशानां सम्पादनाय वा। ८ अनुरञ्जयितुं प्रजाः प्रभुर्व्यवहारासनमाददे नवः। अपरः शुचिविष्टरस्थितः–राश्रयः–परिचेतुं यतते स्म धारणाम्॥ इ. पा.

**युवा नृपतिः** अजः **प्रकृतीः** प्रजाः कार्यार्थिनीः **अवेक्षितुम्** । दुष्टादुष्टपरिज्ञानार्थमित्यर्थः । **व्यवहारासनं** धर्मासनं **आददे** स्वीचकार । **प्रवयाः** स्थविरो नृपती रघुः **तु** । ' प्रवयाः स्थविरो वृद्धः ' इत्यमरः । **धारणां** चित्तस्यैकाग्रतां **परिचेतुम्** अभ्यसितुम् **उपांशु** विजने । ' उपांशु विजने प्रोक्तम् ' इति हलायुधः । कुशैः पूतं [ **कुशपूतं** ] **विष्टरं** आसनमाददे । ' यमादिगुणसंयुक्ते मनसः स्थितिरात्मनि । धारणा प्रोच्यते सद्भिर्योगशास्त्रविशारदैः ॥' इति वसिष्ठः ॥

**अनयत्प्रभुशक्तिसंपदा वशमेको नृपतीननन्तरान् ।**
**अपरः प्रणिधानयोग्यया मरुतः पञ्च शरीरगोचरान् ॥ १९ ॥**

**एकः** अन्यतरः । अज इत्यर्थः । **अनन्तरान्** स्वभूम्यनन्तरान् **नृपतीन्** यातव्यपार्ष्णिग्राहादीन् **प्रभुशक्तिसंपदा** कोशदण्डमहिम्ना **वशं** स्वायत्तताम् **अनयत्** । ' कोशा दण्डो बलं चैव प्रभुशक्तिः प्रकीर्तिता । ' इति मिताक्षरायाम् । **अपरः** रघुः **प्रणिधानयोग्यया** समाध्यभ्यासेन । ' योग्याऽभ्यासार्कयोषितोः ' इति विश्वः । **शरीरगोचरान्** देहाश्रयान् **पञ्च मरुतः** प्राणादीन्वशमनयत् । ' प्राणोऽपानः समानश्चोदानव्यानौ च वायवः । शरीरस्थाः ' इत्यमरः ॥

**अकरोदचिरेश्वरः क्षितौ द्विषदारम्भफलानि भस्मसात् ।**
**इतरो दहने स्वकर्मणां ववृते ज्ञानमयेन वह्निना ॥ २० ॥**

**अचिरेश्वरः** अजः **क्षितौ** द्विषतामारम्भाः कर्माणि तेषां फलानि [ **द्विषदारम्भफलानि** ] **भस्मसादकरोत्** कार्त्स्न्येन भस्मीकृतवान् । ' विभाषा साति कार्त्स्न्ये ' इति सातिप्रत्ययः । **इतरः** रघुः **ज्ञानमयेन** आत्मतत्त्वज्ञानरूपेण **वह्निना** पावकेन । करणेन । **स्वकर्मणां** भवबीजभूतानां **दहने** भस्मीकरणे **ववृते** । स्वकर्माणि दग्धुं प्रवृत्त इत्यर्थः । ' ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन । ' इति गीतावचनात् ॥

---

१ अस्मान्मरमातिरिक्तं श्लोकमेकं पठन्ति हे० चा० दिनकरादयः । यथा–नयचक्षुरजं दिदृक्षया पररन्ध्रस्य ततान मण्डले । हृदये समरोपयन्मनः परमं ज्योतिरवेक्षितुं रघुः ॥ इति । २ ' देशबन्धश्चित्तस्य धारणा ' इ. पातञ्जलं सूत्रम् । ' नाभिचक्रे हृदयपुण्डरीके मूर्ध्नि ज्योतिषि नासिकाग्रे जिह्वाग्रे इत्येवमादिषु देशेषु बाह्ये वा विषये चित्तस्य वृत्तिमात्रेण बन्ध इति बन्धो धारणा ' इ. भाष्यम् । ' संभ्रम्य छोटिकां दद्यात्कराग्रं जानुमण्डले । मात्राभिः पञ्चदशभिः प्राणायामोऽधमः स्मृतः ॥ मध्यमो द्विगुणः श्रेष्ठस्त्रिगुणो धारणा तथा । त्रिभिस्त्रिभिः स्मृतैकैका ताभिर्योगस्तथैव च ॥ ' इ. विज्ञानेश्वरः । ३ उक्तं च योगवासिष्ठे— मारुतान्मरुतां स्थाने मनसैव समन्विते । धारयेत्पञ्च घटिका ह्यवश्यास्तेऽन्तरानिलाः ॥ इति । हृदि प्राणो गुदेऽपानः समानो नाभिसंस्थितः । उदानः कण्ठदेशे स्याद्व्यानः सर्वशरीरगः ॥ अन्नप्रवेशनं मूत्राद्युत्सर्गोऽन्नादिपाचनम् । भाषणादिनिमेषादितद्व्यापाराः क्रमादमी ॥ इ. तेषां स्थानानि व्यापाराश्च । ४ ' अपरः ' इ. पा. । ५ ' ध्यानमयेन वह्निना '–तेजसा–चक्षुषा ' इ. पा. । ६ पुण्यपापानामित्यर्थः ।

**पणबन्धमुखान्गुणानजः षडुपायुङ्क्त समीक्ष्य तत्फलम् ।**
**रघुरप्यजयद्गुणत्रयं प्रकृतिस्थं समलोष्टकाञ्चनः ॥ २१ ॥**

'पणबन्धः संधिः' इति कौटिल्यः । **अजः पणबन्धमुखान्** संध्यादीन् **षड् गुणान्** । 'संधिर्ना विग्रहो यानमासनं द्वैधमाश्रयः । षड्गुणाः' इत्यमरः । **तत्फलं** तेषां गुणानां फलं **समीक्ष्य** आलोच्य **उपायुङ्क्त** । फलिष्यन्तमेव गुणं प्रायुङ्क्तेत्यर्थः । 'प्रोपाभ्यां युजेरयज्ञपात्रेषु' इत्यात्मनेपदम् । समं तुल्यतया भावितं लोष्टं मृत्पिण्डः काञ्चनं सुवर्णं च येन स **समलोष्टकाञ्चनः** । निःस्पृह इत्यर्थः । 'लोष्टानि लेष्टवः पुंसि' इत्यमरः । **रघुरपि गुणत्रयं** सत्त्वादिकम् । 'गुणाः सत्त्वं रजस्तमः' इत्यमरः । प्रकृतौ साम्यावस्थायामेव तिष्ठतीति **प्रकृतिस्थं** पुनर्विकारशून्यं यथा तथा **अजयत्** ॥

**न नवः प्रभुरा फलोदयात्स्थिरकर्मा विरराम कर्मणः ।**
**न च योगविधेर्नवेतरः स्थिरधीरा परमात्मदर्शनात् ॥ २२ ॥**

**स्थिरकर्मा** फलोदयकर्मकारी **नवः प्रभुः** अजः **आ फलोदयात्** फलसिद्धिपर्यन्तं **कर्मणः** आरम्भाद् **न विरराम** न निवृत्तः । 'जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्' इत्यपादानात्पञ्चमी । 'व्याङ्परिभ्यो रमः' इति परस्मैपदम् । **स्थिरधीः** निश्चलचित्तो **नवेतरः** रघुः **च आ परमात्मदर्शनात्** परमात्मसाक्षात्कारपर्यन्तं **योगविधेः** ऐक्यानुसंधानात् **न** विरराम ॥

**इति शत्रुषु चेन्द्रियेषु च प्रतिषिद्धप्रसरेषु जाग्रतौ ।**
**प्रसितावुदयापवर्गयोरुभयीं सिद्धिमुभाववापतुः ॥ २३ ॥**

**इति** एवं प्रतिषिद्धः प्रसरः स्वार्थप्रवृत्तिर्येषां तेषु [ **प्रतिषिद्धप्रसरेषु** ] **शत्रुषु चेन्द्रियेषु च जाग्रतौ** अप्रमत्तौ **उदयापवर्गयोः** अभ्युदयमोक्षयोः **प्रसितौ** आसक्तौ । 'तत्परे प्रसितासक्तौ' इत्यमरः । **उभौ** अजरघू **उभयीं** द्विविधामभ्युदयमोक्षरूपाम् । 'उभादुदात्तो नित्यम्' इति तयप्प्रत्ययस्यायजादेशः । 'टिड्ढा—इति ङीप् । **सिद्धिम्** फलं **अवापतुः** । उभावुभे सिद्धी यथासंख्यमवापतुरित्यर्थः ॥

**अथ काश्चिदजव्यपेक्षया गमयित्वा समदर्शनः समाः ।**
**तमसः परमापदव्ययं पुरुषं योगसमाधिना रघुः ॥ २४ ॥**

---

१ 'अगमत्' इति पाठे गुणत्रयमार्गं क्रान्तवान् । यदुक्तं—गुणानेतानतीत्य त्रीन् । इ. हे०.
२ सुवर्णादिदानेन शत्रूणां प्रीत्युत्पादनेनात्मनो मित्रीकरणं सन्धिः । परमण्डले दाहलुण्ठनच्छेदादि विग्रहः । उपचितशक्तेः कृतमूलराष्ट्ररक्षकस्य शत्रोरवस्कन्दनाय यात्रा यानम् । कालप्रतीक्षया विजिगीषोर्दुर्गादौ निश्चयतः स्थितिरासनम् । बलिना सह सन्धिरबलेन सह विग्रहः इत्यादि प्रकारकं द्वैधम् । अरिणा बाध्यमानस्य बलवद्भूपालाद्याश्रयणमाश्रयः । विशेषस्तु कामन्दकीयादौ द्रष्टव्यः । ३ 'स्थिरबुद्धिः' इ. 'परमात्म-' 'परमार्थ०' इ. च. पा० ४ अत्र भगवद्गीता— दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः । वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥ इति । स्थिता प्रतिष्ठिता अहमस्मि परं ब्रह्मेति धीर्यस्य इति गीताभाष्ये । ५ शत्रुपक्षे स्वस्थानान्यनृपादिप्रजादिसाधनम् । इन्द्रियपक्षे विषयाः ।

अथ रघुः **समदर्शनः** सर्वभूतेषु समदृष्टिः सन् **अजव्यपेक्षया** अजकाङ्क्षानुरोधेन **काश्चित्समाः** कतिचिद्वर्षाणि । 'समा वर्षे समं तुल्यम्' इति विश्वः । **गमयित्वा** नीत्वा **योगसमाधिना** ऐक्यानुसंधानेन । 'संयोगो योग इत्युक्तो जीवात्मपरमात्मनोः ।' इति वसिष्ठः । **अव्ययम्** अविनाशिनं **तमसः** परमविद्यायाः **परम्** । मायातीतमित्यर्थः । **पुरुषं** परमात्मानम् **आपत** प्राप । सायुज्यं प्राप्त इत्यर्थः ॥

**श्रुतदेहविसर्जनः पितुश्चिरमश्रूणि विमुच्य राघवः ।**
**विदधे विधिमस्य नैष्ठिकं यतिभिः सार्धमनग्निमग्निचित् ॥ २५ ॥**

**अग्निचित्** अग्निं चितवानाहितवान् । 'अग्नौ चेः' इति क्विप्प्रत्ययः । स्वयमग्निचिदिति भावः । **राघवः** अजः **पितुः श्रुतदेहविसर्जनः** आकर्णितपितृतनुत्यागः सन् **चिरमश्रूणि** बाष्पान् **विमुच्य** विसृज्य **अस्य** पितुः **अनग्निम्** । अग्निसंस्काररहितमित्यर्थः । **नैष्ठिकं** निष्ठायामन्ते भवं **विधिम्** आचारमन्त्येष्टिं **यतिभिः** संन्यासिभिः **सार्धं** सह **विदधे** चक्रे । अनग्निं विधिमित्यत्र शौनकः—'सर्वसङ्गनिवृत्तस्य ध्यानयोगरतस्य च । न तस्य दहनं कार्यं नैव पिण्डोदकक्रिया ॥ निदध्यात्प्रणवेनैव बिले भिक्षोः कलेवरम् । प्रोक्षणं खननं चैव सर्वं तेनैव कारयेत् ॥ इति ॥

**अकरोच्च तदौर्ध्वदैहिकं पितृभक्त्या पितृकार्यकल्पवित् ।**
**न हि तेन पथा तनुत्यजस्तनयावर्जितपिण्डकाङ्क्षिणः ॥ २६ ॥**

पितृकार्यस्य तातश्राद्धस्य कल्पविद्विधानज्ञः [ **पितृकार्यकल्पवित्** ] सः अजः **पितृभक्त्या** पितरि प्रेम्णा करणेन । न पितुः परलोकसुखापेक्षया । मुक्तत्वादिति भावः । तस्य रघोः और्ध्वदैहिकं [ **तदौर्ध्वदैहिकम्** ] । देहादूर्ध्वं भवतीति तत्तिलोदकपिण्डदानादिकम् । **अकरोत् च** । ननु कथं भक्तिरेव श्राद्धादिफलप्रेप्सापि कस्मान्नाभूदित्याशङ्क्याह न हीति । **तेन पथा** योगरूपेण मार्गेण **तनुत्यजः** शरीरत्यागिनः पुरुषाः [ **तनयावर्जितपिण्डकाङ्क्षिणः** ] तनयावर्जितं दत्तं पिण्डं काङ्क्षन्तीति तथोक्ताः । **न हि** भवन्ति ॥

**स परार्ध्यगतेरशोच्यतां पितुरुद्दिश्य सदर्थवेदिभिः ।**
**शमिताधिरधिज्यकार्मुकः कृतवानप्रतिशासनं जगत् ॥ २७ ॥**

**परार्ध्यगतेः** प्रशस्तगतेः प्राप्तमोक्षस्य **पितुः अशोच्यताम्** अशोचनीयत्वम् **उद्दिश्य** अभिसंधाय । शोको न कर्तव्य इत्युपदिश्येत्यर्थः । **सदर्थवेदिभिः** परमार्थज्ञैर्विद्वद्भिः **शमिताधिः** निवारितमनोव्यथः । 'पुंस्याधिर्मानसी व्यथा' इत्यमरः । **सः** अजः **अधिज्यकार्मुकः** । अधिज्यमारोपितमौर्वीकं कार्मुकं यस्य स तथोक्तः सन् । **जगत्**

---

१ मानापमानसुखदुःखादिद्वंद्वेषु वा । सर्वत्र ब्रह्मैव पश्यन्निति वा । २ मृतार्थं तदहे दानं ( तदहर्दानं—इ. पा. ) त्रिषु स्यादौर्ध्वदैहिकम् । इत्यमरः । देहादूर्ध्वम् ऊर्ध्वदेहः । राजदन्तादिः । ऊर्ध्वदेहे भवम् । अध्यात्मादित्वाट्ठञ् । अनुशतिकादित्वादुभयपदवृद्धिः । ३ परिव्राजि वियत्ने तु पतिते चात्मवेश्मनि । कार्यो न शोको ज्ञातीनामन्यथा दोषभागिनः ॥ इति सुमन्तुः ।

कर्मभूतम् **अप्रतिशासनं** द्वितीयाज्ञारहितम् । आत्माज्ञाविधेयमित्यर्थः । **कृतवान** चकार ।

**क्षितिरिन्दुमती च भामिनी पतिमासाद्य तमग्र्यपौरुषम् ।**
**प्रथमा बहुरत्नसूरभूदपरा वीरमजीजनत्सुतम् ॥ २८ ॥**

**क्षितिः** मही **भामिनी** कामिनी **इन्दुमती च** । 'भामिनी कामिनी च' इति हलायुधः । **अग्र्यपौरुषं** महापराक्रममुत्कृष्टभोगराशिं च **तम्** अजं **पतिमासाद्य** प्राप्य । तत्र **प्रथमा** क्षितिः बहूनि रत्नानि श्रेष्ठवस्तूनि सूत इति **बहुरत्नसूः अभूत्** ।'रत्नं स्वजातिश्रेष्ठेऽपि' इत्यमरः । **अपरा** इन्दुमती **वीरं सुतम् अजीजनत्** जनयति स्म । जायतेर्णौ लुङि रूपम् । सहोक्त्या सादृश्यमुच्यते ॥

स सुतः क इत्याशङ्क्याह—

**दशरश्मिशतोपमद्युतिं यशसा दिक्षु दशस्वपि श्रुतम् ।**
**दशपूर्वरथं यमाख्यया दशकण्ठारिगुरुं विदुर्बुधाः ॥ २९ ॥**

दश रश्मिशतानि यस्य स दशरश्मिशतः सूर्यः । तेनोपमीयते इति तदुपमा [ 'स उपमा यस्याः सा दशरश्मिशतोपमा' इ.पा. ]द्युतिर्यस्य स तथा तं [ **दशरश्मिशतोपमद्युतिम्** ] **यशसा** करणेन **दशस्वपि दिक्षु** आशासु **श्रुतं** प्रसिद्धम् । दशकण्ठस्य रावणस्यारेः रामचन्द्रस्य गुरुं पितरं [ **दशकण्ठारिगुरुम्** ] **यं** सुतम् । **आख्यया** नाम्ना **दशपूर्वरथं** । दशरथमित्यर्थः । **बुधाः** विद्वांसः **विदुः** जानन्ति । 'विदो लटो वा' इति झेर्जुसादेशः । दशेति पूर्वं पदं यस्य रथपदस्य स दशपूर्वः । स चासौ रथश्च दशरथश्चेति विग्रहः । बहुव्रीहिरत्र नेष्टः । तदर्थानुपपत्तेः । अनेककोटिरथत्वाच्च दशरथस्य । इत्याशयेन नामैव पूर्वपदं व्यवहितं प्रयुक्तम् । एतदनुसारान्माघेऽपि 'हिरण्यपूर्वं कशिपुं प्रचक्षते' इति प्रयुक्तम् ॥

**ऋषिदेवगणस्वधाभुजां श्रुतयागप्रसवैः स पार्थिवः ।**
**अनृणत्वमुपेयिवान्बभौ परिधेर्मुक्त इवोष्णदीधितिः ॥ ३० ॥**

**श्रुतयागप्रसवैः** स्वाध्याययजनसंतानैः । करणैः । यथासंख्यमृषीणां देवगणानामिन्द्रादीनां स्वधाभुजां पितॄणाम् [ **ऋषिदेवगणस्वधाभुजाम्** ] **अनृणत्वम्** ऋणविमुक्तत्वम् **उपेयिवान** प्राप्तवान् । 'एषं वा अनृणो यः पुत्री यज्वा ब्रह्मचारी च' इति श्रुतेः । **स पार्थिवः** अजः **परिधेः** परिवेशात् । 'परिवेशस्तु परिधिः' इत्यमरः । **मुक्तः** निर्गतः । कर्मकर्ता । **उष्णदीधितिः** सूर्य इव । **बभौ** दिदीपे इत्युपमा ॥

---

१ 'सुत' इ. पा. २ 'धीरम्' इ. पा०. विशेषेण शत्रून् ईरयति कम्पयतीति वीरस्तम् । 'भामिनी शब्देन भुवः सापत्न्यात्स्पर्धयेव पुत्रमसूतेति भावः' इ. हे० । ३ यमाख्यया इति ग्राम्यं यमप्रतीतेः इ. हे० । अनुप्रासालं०, ४ 'धनुरुपपदमस्मै वेदमभ्यादिदेश' इति किरात. ५ जायमानो ह वै ब्राह्मणस्त्रिभिरृणैरृणवाञ्जायते । ब्रह्मचर्येणर्षिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः । एष वा— इति सकला श्रुतिः । अस्य समानार्थः श्लोकः बुद्धचरिते—नरः पितॄणामनृणः प्रजाभिर्वेदैरृषीणां क्रतुभिः सुराणाम् । उत्पद्यते सार्धमृणैस्त्रिभिस्तैर्यस्यास्ति मोक्षः किल तस्य मोक्षः ॥ इति ।

**बलमार्तभयोपशान्तये विदुषां सत्कृतये बहु श्रुतम् ।**
**वसु तस्य विभोर्न केवलं गुणवत्तापि परप्रयोजना ॥ ३१ ॥**

**तस्य विभोः** अजस्य **केवलं वसु** धनमेव परप्रयोजनं परोपकारकं **न** अभूत् । किं तु **गुणवत्तापि** गुणित्वमपि **परप्रयोजना** परेषामन्येषां प्रयोजनं यस्यां सा । विधेयांशत्वेन प्राधान्याद्गुणवत्ताया विशेषणं वस्त्वित्यत्र तूहनीयम् । तथा हि । **बलं** पौरुषमार्तानामापन्नानां भयस्योपशान्तये निषेधाय [ **आर्तभयोपशान्तये** ] । न तु स्वार्थे परपीडनाय वा । **बहु** भूरि **श्रुतं** विद्या **विदुषां सत्कृतये** सत्काराय । न तूत्सेकाय । बभूव । तस्य धनं परोपयोगीति किं वक्तव्यम् । बलश्रुतादयोऽपि गुणाः परोपयोगिन इत्यर्थः ॥

**स कदाचिदवेक्षितप्रजः सह देव्या विजहार सुप्रजाः ।**
**नगरोपवने शचीसखो मरुतां पालयितेव नन्दने ॥ ३२ ॥**

**अवेक्षितप्रजः** पालितप्रजः [ अकुतोभयत्वेनानुसंहितप्रजः । न केवलं स्त्रैण इति भावः । शोभना प्रजा यस्यासौ ] **सुप्रजाः** सुसंतानः । [ सुपुत्रवान् । ] ' नित्यमसिच्प्रजामेधयोः ' इत्यसिच्प्रत्ययः । पुत्रन्यस्तभार इति भावः । **सः** अजः **कदाचिद्देव्या** महिष्येन्दुमत्या **सह** नगरस्य पुरस्य उपवने [ **नगरोपवने** ] **विजहार** चिक्रीड । किंभूतः कस्मिन्निव । **शचीसखः** सन् । शच्या सहेत्यर्थः । **मरुतां** देवानां **पालयिता** इन्द्रः **नन्दने** नन्दनाख्येऽमरावत्युपकण्ठवने **इव** ॥

**अथ रोधसि दक्षिणोदधेः श्रितगोकर्णनिकेतमीश्वरम् ।**
**उपवीणयितुं ययौ रवेरुदगावृत्तिपथेन नारदः ॥ ३३ ॥**

**अथ** दक्षिणस्योदधेः समुद्रस्य [ **दक्षिणोदधेः** ] **रोधसि** तीरे **श्रितगोकर्णनिकेतम्** अधिष्ठितगोकर्णाख्यस्थानम् **ईश्वरं** शिवम् **उपवीणयितुं** वीणयोप समीपे गातुम् । 'सत्यापपाश–' इत्यादिना वीणाशब्दादुपगानार्थे णिच्प्रत्ययः । ततस्तुमुन् । **नारदः** मुनिः ( देवर्षिः ) **रवेः** सूर्यस्योदीच उत्तरस्या दिश आकाश आवृत्तिर्निवर्तनम् । तस्याः पन्था गतिप्रकारस्तेन [ **उदगावृत्तिपथेन** ] । यथा रविरुत्तरस्या दिशो व्यावृत्य दक्षिणायनमागच्छति तद्वदित्यर्थः । ' उदयावृत्तिपथेन ' इति पाठे सूर्यस्य सन्वधिन उदयावृत्तिपथेन आकाशमार्गेण । **ययौ** जगाम । सूर्योपमानेनास्यातितेजस्त्वमुच्यते ॥

---

१ ' सत्रतये '–' नमस्काराय ' इ. मूलटीकापा० । २ उपवनादिलक्षणानि वृक्षोदये–उद्यानोपवनारामा वनं प्रमदपूर्वकम् । पञ्चधा निष्कुटं चेति वृक्षवाटी प्रशस्यते ॥ राज्ञामेवोपभोग्यं यदुद्यानं तदुदाहृतम् । पुरबाह्ये तु सामान्यं भवेदुपवनं नृणाम् ॥ आरामस्त्वेकभोग्योऽथ वनं प्रमदपूर्वकम् । अन्तःपुरैकभोग्यं स्यान्निष्कुटं तु गृहे कृतम् ॥ अमात्यगणिकादीनां सर्वं नानातरूज्ज्वलम् । आरामं त्रिविधं द्रौमं शाकं पौष्पं विदुर्बुधाः ॥ इति । ३ ' उपवीणयितुं मुनिः पथा पवमानस्य जगाम नारदः । ' इ. पा०. ४ नराणां समूहो नारं तद्द्यति खण्डयति कलिदानादिति नारदः । नारं पानीयमित्युक्तं तत्पितृभ्यः सदा भवान् । ददाति तेन ते नाम नारदेति भविष्यति ॥ इत्यागमः । नृणिदं नारमज्ञानम् । तत् द्यति खण्डयति ज्ञानोपदेशेनेति वा ।

कुसुमैर्ग्रथितामपार्थिवैः स्रजमातोद्यशिरोनिवेशिताम् ।
अहरत्किल तस्य वेगवानधिवासस्पृहयेव मारुतः ॥ ३४ ॥

**अपार्थिवैः** अभौमैः । दिव्यैरित्यर्थः । **कुसुमैः ग्रथितां** गुम्फितां **तस्य** नारदस्यातोद्यस्य वीणावाद्यस्य शिरस्यग्रे निवेशिताम् [ **आतोद्यशिरोनिवेशिताम्** ] । 'चतुर्विधमिदं वाद्यं वादित्रातोद्यनामकम्' इत्यमरः । **स्रजं** मालां **वेगवान्मारुतः** । अधिवासे संस्कारे स्पृहयेव वासनयेव [ **अधिवासस्पृहयेव** ] । स्रजा स्वाङ्गं संस्कर्तुमित्यर्थः । 'संस्कारो गन्धमाल्याद्यैर्यः स्यात्तदधिवासनम्' इत्यमरः । **अहरात्किल** । किलेत्यैतिह्ये ॥

भ्रमरैः कुसुमानुसारिभिः परिकीर्णा परिवादिनी मुनेः ।
ददृशे पवनावलेपजं सृजती बाष्पमिवाञ्जनाविलम् ॥ ३५ ॥

**कुसुमानुसारिभिः** पुष्पानुयायिभिः **भ्रमरैः** अलिभिः **परिकीर्णा** व्याप्ता **मुनेः** नारदस्य **परिवादिनी** वीणा । 'वीणा तु वल्लकी । विपञ्ची सा तु तन्त्रीभिः सप्तभिः परिवादिनी ॥' इत्यमरः । पवनस्य वायोरवलेपोऽधिक्षेपस्तज्जम् [ **पवनावलेपजं** ] अञ्जनेन कज्जलेनाविलं कलुषं [ **अञ्जनाविलं** ] **बाष्पम्** अश्रु **सृजती** मुञ्चती **इव** । **ददृशे** दृष्टा । भ्रमराणां साञ्जनबाष्पबिन्दुसादृश्यं विवक्षितम् । 'वा नपुंसकस्य' इति वर्तमाने 'आच्छीनद्योर्नुम्' इति नुम्विकल्पः ॥

अभिभूय विभूतिमार्तवीं मधुगन्धातिशयेन वीरुधाम् ।
नृपतेरमरस्रगाप सा दयितोरुस्तनकोटिसुस्थितिम् ॥ ३६ ॥

**सा अमरस्रग्** दिव्यमाला । मधुगन्धयोर्मकरन्दसौरभ्ययोरतिशयेनाधिक्येन [ **मधुगन्धातिशयेन** ] करणेन । **वीरुधां** लतानां नगरोपवनवर्तिनीनाम् । 'लता प्रतानिनी वीरुत्' इत्यमरः । ऋतुरस्या प्राप्तस्ताम् **आर्तवीम्** । वसन्तर्तुसंभवामित्यर्थः । **विभूतिं** समृद्धिं पुष्पाणाम् **अभिभूय** तिरस्कृत्य **नृपतेः** अजस्य [ **दयितोरुस्तनकोटिसुस्थितिम्** ] दयिताया इन्दुमत्या उर्वोर्विशालयोः स्तनयोर्ये कोटी चूचुकौ तयोः सुस्थितिं गोप्यस्थाने पतितत्वात्प्रशस्तां स्थितिम् **आप** प्राप्ता ॥

क्षणमात्रसखीं सुजातयोः स्तनयोस्तामवलोक्य विह्वला ।
निमिमील नरोत्तमप्रिया हृतचन्द्रा तमसेव कौमुदी ॥३७ ॥

---

१ यद्यप्यातोद्यशब्दो वाद्यचतुष्टयस्य वाचकः 'ततं चैवानुविद्धं च घनं शुषिरमेव च । चतुर्विधं तु विज्ञेयमातोद्यं लक्षणान्वितम् ॥' इति भरतेनोक्तत्वात्तथाप्यत्र प्रकरणाद्वीणामभिधत्ते । शब्दात्प्रकरणाल्लिङ्गादौचित्याद्देशकालयोः । शब्दस्यार्थं विजानीयान्न शब्दादेव केवलम् ॥ इति च । २ 'महती' इत्याख्या । 'विश्वावसोस्तु बृहती तुम्बरोस्तु कलावती । महती नारदस्याथ सरस्वत्यास्तु कच्छपी' इति हेमचन्द्रः । 'महती शततन्त्री' इति क्षीरस्वामी । ३ 'स्रगसज्जत सा महीपतेः' इ.—'दयितोरःस्थलरत्नकोटिषु' इ. 'दयितोरःस्थलकोटिषु स्थितिम्' इति च पा० ४ 'नरेश्वर' इ. पा० ।

**सुजातयोः** सुजन्मनोः । सुन्दरयोरित्यर्थः । **स्तनयोः** क्षणमात्रं सखीं सखीमिव स्थितां [ **क्षणमात्रसखीम्** ] । सुजातत्वसाधर्म्यात्स्रजः स्तनसखीत्वमिति भावः । **तां** स्रजम् **अवलोक्य** ईषद्दृष्ट्वा **विह्वला** विवशा **नरोत्तमप्रिया** अजदयिता इन्दुमती । **तमसा** राहुणा । 'तमस्तु राहुः स्वर्भानुः' इत्यमरः । **हृतचन्द्रा कौमुदी** चन्द्रिका **इव** । **निमिमील** मुमोह । ममारेत्यर्थः । 'निमीलो दीर्घनिद्रा च' इति हलायुधः । कौमुद्या निमीलनं प्रतिसंहारः ॥

**वपुषा करणोज्झितेन सा निपतन्ती पतिमप्यपातयत् ।**
**ननु तैलनिषेकबिन्दुना सह दीपार्चिरुपैति मेदिनीम् ॥ ३८ ॥**

करणमिन्द्रियोपलक्षितं चैतन्यम् । तेनोज्झितेन मुक्तेन [ **करणोज्झितेन** ] 'करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि ।' इत्यमरः । **वपुषा निपतन्ती सा** इन्दुमती **पतिम्** अजम् **अपि अपातयत्** पातयति स्म । तथा हि । निषिच्यत इति निषेकः । तैलस्य निषेकस्तैलनिषेकः । क्षरत्तैलमित्यर्थः । तस्य बिन्दुना **तैलनिषेकबिन्दुना सह दीपार्चिः** दीपज्वाला **मेदिनीं** भुवम् **उपैति ननु** उपैत्येव । 'नन्वत्रावधारणे । ' प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु ।' इत्यमरः । इन्दुमत्या दीपार्चिरुपमानम् । अजस्य तैलबिन्दुः । तत एव तस्या जीवितसमाप्तिस्तस्य जीवितशेषश्च सूच्यते ॥

**उभयोरपि पार्श्ववर्तिनां तुमुलेनार्तरवेण वेजिताः ।**
**विहगाः कमलाकरालयाः समदुःखा इव तत्र चुक्रुशुः ॥ ३९ ॥**

**उभयोः** द्वयोः **अपि पार्श्ववर्तिनां** परिजनानां **तुमुलेन** संकुलेन **आर्तरवेण** करुणस्वनेन **वेजिताः** भीताः कमलाकर आलयो येषां ते [ **कमलाकरालयाः** ] सरःस्थिताः **विहगाः** हंसादयः **तत्र** उपवने **समदुःखा इव** तत्पार्श्ववर्तिनां समानशोका इव **चुक्रुशुः** क्रोशन्ति स्म ॥

**नृपतेर्व्यजनादिभिस्तमो नुनुदे सा तु तथैव संस्थिता ।**
**प्रतिकारविधानमायुषः सति शेषे हि फलाय कल्पते ॥ ४० ॥**

**नृपतेः** अजस्य **तमः** मूर्च्छेत्यर्थः । **व्यजनादिभिः** साधनैः **नुनुदे** अपसारितम् । आदिशब्देन जलसेककर्पूरक्षोदादयो गृह्यन्ते । **सा तु** इन्दुमती **तथैव संस्थिता** मृता । तथा **हि** । प्रतिकारस्य चिकित्साया विधानं करणं [ **प्रतिकारविधानं** ] **आयुषः** जीवितकालस्य **शेषे सति** विद्यमाने । 'आयुर्जीवितकालो ना' इत्यमरः । **फलाय** सिद्धये **कल्पते** समर्थं भवति नान्यथा । नृपतेरायुःशेषसद्भावात्प्रतीकारस्य साफल्यम् । तस्यास्तु तदभावाद्वैफल्यमित्यर्थः ॥

**प्रतियोजयितव्यवल्लकीसमवस्थामथ सत्त्वविप्लवात् ।**
**स निनाय नितान्तवत्सलः परिगृह्योचितमङ्कमङ्गनाम् ॥ ४१ ॥**

---

१ अयं श्लोकोऽन्यथा पठ्यते कैश्चिद्यथा—सममेव नराधिपेन सा गुरुसंमोहविलुप्तचेतना । अगमत्सह तैलबिन्दुना नवदीपार्चिरिव क्षितेस्तलम् ॥ २ 'विह्वलां पुनः' इ. पा.

**अथ** सत्त्वस्य चैतन्यस्य विप्लवाद्विनाशात् [ **सत्त्वविप्लवात्** ] हेतोः । ' द्रव्यासुव्यवसायेषु सत्त्वम् ' इत्यमरः । प्रतियोजयितव्या अवस्त्रंसनानन्तरं पुनः सज्जीकरणयोग्या [ ' तन्त्रिभिर्योजनीया । न तु योजिततन्त्रीत्यर्थः ' इ. पा. ] या वल्लकी वीणा तस्याः समावस्था दशा यस्यास्ताम् [ **प्रतियोजयितव्यवल्लकीसमवस्थाम्** ] **अङ्गनां** वनितां **नितान्तवत्सलः** अतिप्रेमवान् **सः** अजः **परिगृह्य** हस्ताभ्यां गृहीत्वा **उचितं** परिचितम् **अङ्कम्** उत्सङ्गं **निनाय** नीतवान् । वल्लकीपक्षे तु सत्त्वं तन्त्रीणामवष्टम्भकः शलाकाविशेषः ॥

**पतिरङ्कनिषण्णया तया करणापायविभिन्नवर्णया ।**
**समलक्ष्यत बिभ्रदाविलां मृगलेखामुषसीव चन्द्रमाः ॥ ४२ ॥**

**पतिः** अजः **अङ्कनिषण्णया** उत्सङ्गस्थितया करणानामिन्द्रियाणाम् । तदुपलक्षितस्य चैतन्यस्य वा अपायेनापगमेन हेतुना विभिन्नवर्णया विच्छायया [ **करणापायविभिन्नवर्णया** ] **तया** प्रियया उपलक्षितः । **उषसि** प्रातःकाले **आविलां** मलिनां **मृगलेखां** लाञ्छनं मृगरेखारूपं **बिभ्रत्** धारयन् **चन्द्रमाः इव** । **समलक्ष्यत** अदृश्यत । इत्युपमा ॥

**विललाप स बाष्पगद्गदं सहजामप्यपहाय धीरताम् ।**
**अभितप्तमयोऽपि मार्दवं भजते कैव कथा शरीरिषु ॥ ४३ ॥**

**सः** अजः **सहजां** स्वाभाविकीम् **अपि धीरतां** धैर्यं **अपहाय** विप्रकीर्य बाष्पेण कण्ठगतेन गद्गदं विशीर्णाक्षरं यथा तथा [ **बाष्पगद्गदं** ] ध्वनिमात्रानुकारिगद्गदशब्दैः **विललाप** परिदेवितवान् । ' विलापः परिदेवनम् ' इत्यमरः । धैर्यापहारे दुःखातिशयः कारणमित्याशयेनाह–**अभितप्तम्** अग्निना संतप्तम् **अयः** लोहमचेतनम् **अपि मार्दवं** मृदुत्वमवैक्लव्यं च **भजते** प्राप्नोति । **शरीरिषु** देहिषु चेतनेषु । अभितप्तेष्विति शेषः । विषये **कथा एव** वाद एव संदिग्धार्थनिर्णयरूपा **का** किंरूपा इत्याक्षेपः । संदिग्धे न्यायः प्रवर्तते हि । प्रतप्तेष्ववैर्यप्राप्तिसंदेहो नास्त्येवेत्यर्थः ॥

**कुसुमान्यपि गात्रसंगमात्प्रभवन्त्यायुरपोहितुं यदि ।**
**न भविष्यति हन्त साधनं किमिवान्यत्प्रहरिष्यतो विधेः ॥ ४४ ॥**

**कुसुमानि** पुष्पाणि **अपि** । अपिशब्दो नितान्तमार्दवद्योतनार्थः । **गात्रसंगमात्** देहसंसर्गात् । न तीव्राभिघातादिति भावः । **आयुः अपोहितुम्** अपहर्तुं **प्रभवन्ति** समर्थानि भवन्ति **यदि** । **हन्त** विषादे । ' हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः । ' इत्यमरः । **प्रहरिष्यतः** हन्तुमिच्छतः **विधेः** दैवस्य **अन्यत्** कुसुमातिरिक्तं **किमिव** वस्तु । इवशब्दो वाक्यालङ्कारे । कीदृशमित्यर्थः । **साधनं** प्रहरणं **न भविष्यति** न भवेत् । सर्वमपि साधनं भविष्यत्येवेत्यर्थः ॥

---

१ अयमप्यन्यथा पठ्यते यथा–स निनाय नितान्तवत्सलः परिगृह्य प्रथमच्छविं क्षणात् । तल्लिलोद्धतपद्मिनीनिभां दयितामङ्कमुदश्रुलोचनः ॥

**अथ वा मृदु वस्तु हिंसितुं मृदुनैवारभते प्रजान्तकः ।**
**हिमसेकविपत्तिरत्र मे नलिनी पूर्वनिदर्शनं मता ॥ ४५ ॥**

**अथ वा** पक्षान्तरे । **प्रजान्तकः** कालः **मृदु** कोमलं **वस्तु मृदुनैव** वस्तुना **हिंसितु** हन्तुम् **आरभते** उपक्रमते । **अत्र** अर्थे [ **हिमसेकविपत्तिः** ] हिमसेकेन तुषारनिष्यन्देन विपत्तिर्मृत्युर्यस्याः सा तथा । **नलिनी** पद्मिनी पूर्वं प्रथमं निदर्शनमुदाहरणं **पूर्वनिदर्शनं मे मता** संमता । द्वितीयं निदर्शनं पुष्पमृत्युरिन्दुमतीति भावः ॥

**स्रगियं यदि जीवितापहा हृदये किं निहिता न हन्ति माम् ।**
**विषमप्यमृतं क्वचिद्भवेदमृतं वा विषमीश्वरेच्छया ॥ ४६ ॥**

**इयं स्रग्** जीवितमपहन्तीति **जीवितापहा यदि । हृदये** वक्षसि । ' हृदयं वक्षसि स्वान्ते ' इत्यमरः । **निहिता** अर्पिता सती **मां किं न हन्ति । ईश्वरेच्छया क्वचित्** प्रदेशे **विषमपि अमृतं भवेत्** क्वचित् **अमृतं वा विषं** भवेत् । दैवमेवात्र कारणमित्यर्थः ॥

**अथ वा मम भाग्यविप्लवादशनिः कल्पित एष वेधसा ।**
**यदनेन तरुर्न पातितः क्षपिता तद्विटपाश्रया लता ॥ ४७ ॥**

**अथ वा मम** भाग्यस्य विप्लवाद्विपर्ययाद् [ **भाग्यविप्लवाद्** ] निमित्तात् । **एष** स्रगित्यर्थः । विधेयप्राधान्यात्पुंलिङ्गनिर्देशः । **वेधसा** विधात्रा कर्त्रा । **अशनिः** वैद्युतोऽग्निः **कल्पितः** अपूर्वः कृतः । इत्यभिसंधिः । ' दम्भोलिरशनिर्द्वयोः ' इत्यमरः । अपूर्वत्वमेव स्पष्टयति—**यद्** यस्मात्कारणाद् **अनेन** पुरोवर्तिना पुष्पाशनिना [ प्रसिद्धाशनिनेव ] **तरुः** आश्रयभूतो लतायाः **न पातितः** न प्रध्वंसितः । किं तु **तद्विटपाश्रया** तस्य तरोः शाखाधारा **लता** वल्ली **क्षपिता** प्रध्वंसिता । तच्छब्देनात्मा ध्वन्यते । लताशब्देनेन्दुमती । लोके प्रसिद्धोऽशनिस्तरुं लतां च क्षपयति । अयं च लतामेव न तरुमित्यनेन प्रकारेणास्यापूर्वत्वमित्यभिप्रायः ॥

**कृतवत्यसि नावधीरणामपराद्धेऽपि यदा चिरं मयि ।**
**कथमेकपदे निरागसं जनमाभाष्यमिमं न मन्यसे ॥ ४८ ॥**

**मयि चिरं** भूरिशः **अपराद्धेपि** अपराद्धं कृतवत्यपि । राधेः कर्तरि क्तः । **यदा** यस्माद्धेतोः । यदेति हेत्वर्थः । ' स्वरादौ पठ्यते यदेति हेतौ ' इति गणव्याख्यानात् । **अवधीरणाम्** अवज्ञां **न कृतवत्यसि** नाकार्षीः । तत **कथमेकपदे** तत्क्षणे । ' स्यात्तत्क्षण एकपदम् ' इति विश्वः । **निरागसं** नितरामनपराधम् **इमं जनम्** । इममिति स्वात्मनिर्देशः । मामित्यर्थः । **आभाष्यं** संभाष्यं [ ' आमन्त्रणार्हे ' इ. पा. ] **न मन्यसे** न चिन्तयसि ॥

---

१ गता इ. पा० २ तमेशब्दौ निपातेषु द्रष्टव्यौ त्वयामयेत्यस्मिन्नर्थे । इति वामनः । ३ अत्र हेमाद्रिः–अयं शब्दाश्चिन्त्यः । अपे क्लेशतमसोः इति डस्य विधानात् । क्लेशरागतमोदर्पदुःखरोगज्वरादिषु । डः कर्मस्वपहन्तेः स्याद्व्यातः पापापहः शिवः ॥ इति गणदर्पणोक्तेर्घटते । यथात्र सप्तदशसर्गे परकर्मापहः सोऽभूत ( ६१ ) इत्या० । ४ सुरमाल्यरूपभाक् इ.पा०; कल्पितः–निर्मितः ' इति, वेधसा–' कर्मणा ' इति, तद्विटपाश्रया—०श्रिता इति च पा० ।

**ध्रुवमस्मि शठः शुचिस्मिते विदितः कैतववत्सलस्तव ।**
**परलोकमसंनिवृत्तये यदनापृच्छ्य गतासि मामितः ॥ ४९ ॥**

हे **शुचिस्मिते** धवलहसिते । कैतवेन कपटेन वत्सलः स्निग्धः [ **कैतववत्सलः** ] **शठः** गूढविप्रियकारी । इति **ध्रुवं** सत्यं **तव विदितः** त्वया विज्ञातः **अस्मि** । 'मति-बुद्धि–' इत्यादिना कर्तरि क्तः । 'क्तस्य च वर्तमाने' इति कर्तरि षष्ठी । कुतः । **यद्** यस्मात् **माम्अनापृच्छ्य** अनामन्त्र्य **इतः** अस्माल्लोकात् **परलोकम् असंनिवृत्तये** अपुनरावृत्तये **गतासि** ॥

**दयितां यदि तावदन्वगाद्विनिवृत्तं किमिदं तया विना ।**
**सहतां हतजीवितं मम प्रबलामात्मकृतेन वेदनाम् ॥ ५० ॥**

**इदं मम हतजीवितं** कुत्सितं जीवितं **तावद्** आदौ **दयिताम्** इन्दुमतीम् **अन्वगाद्** अन्वधावद् **यदि** । पूर्वं मूर्छितत्वादिति भावः । तर्हि **तया** दयितया **विना किं** किमर्थं **विनिवृत्तं** प्रत्यागतम् । प्रत्यागमनं न युक्तमित्यर्थः । यदि प्रत्यागतं तर्हि **आत्मकृतेन** स्वदुश्चेष्टितेन निवृत्तिरूपेण **प्रबलाम्** अधिकां **वेदनां** दुःखं **सहतां** क्षमताम् । स्वयंकृतापराधेषु साहिष्णुतैव शरणमिति भावः ॥

**सुरतश्रमसंभृतो मुखे ध्रियते स्वेदलवोद्गमोऽपि ते ।**
**अथ चास्तमिता त्वमात्मना धिगिमां देहभृतामसारताम् ॥ ५१ ॥**

सुरतेन निमित्तेन श्रमस्तेन सुरतश्रमेण संभृतो जनितः [ **सुरतश्रमसंभृतः** ] **स्वेदलवोद्गमोऽपि ते** तव **मुखे ध्रियते** वर्तते । **अथ च त्वमात्मना** स्वरूपेण **अस्तं** नाशम् **इता** प्राप्ता । अतः कारणाद् **देहभृतां** प्राणिनाम् **इमां** प्रत्यक्षाम् **असारताम्** अस्थिरतां **धिक्** ॥

**मनसापि न विप्रियं मया कृतपूर्वं तव किं जहासि माम् ।**
**ननु शब्दपतिः क्षितेरहं त्वयि मे भावनिबन्धना रतिः ॥ ५२ ॥**

आत्मनि कैतववत्सलत्वं शठत्वं चेन्दुमत्यभिप्रायेणैव यदारोपितं तदधुना निषेधयति । **मया** कर्त्रा **मनसा** करणेन **अपि तव विप्रियं न कृतपूर्वम्** । पूर्वं न कृतमित्यर्थः । सुप्सुपेति समासः । **किं** केन निमित्तेन **मां जहासि** त्यजसि । ननु मेदिनीपतिस्त्वं नातो विप्रियमस्तीत्याशङ्क्याह । **ननु** प्रिये **अहं क्षितेः शब्दपतिः** शब्दत एव पतिः । न त्वर्थत इत्यर्थः । पालयिता प्रियश्च पतिः । अतः शब्दशक्त्या पतित्वं नार्थशक्त्येत्याशयः । तर्हि कुतस्तवार्थतः पतित्वमित्याकाङ्क्षायामाह । **भावनिबन्धना** [ अभिप्रायनिबन्धना ] स्वभावहेतुका । न तु बाह्यकरणाश्रया । **मे रतिः** प्रेम तु **त्वयि** एव । अस्तीति शेषः । अत एव मनसापि विप्रियकरणमकारणमित्यभिसंधिः ॥

---

१ 'गूढविप्रियकृच्छठः' इति दशरूपकम् । प्रियं वक्ति पुरोऽन्यत्र विप्रियं कुरुते भृशम्' । इ० रुद्रटश्च । २ 'आत्मकृतां नु' इ. ना० ३ अयं श्लोकोऽन्यथा पठ्यते कैश्चिद्यथा–सुरतश्रमवारिबिन्दवो न तु तावद्विरमन्ति ते मुखे । स्वयमस्तमितास्यहो बत क्षयिणां देहवतामसारता ॥

कुसुमोत्खचितान्वलीभृतश्चलयन्भृङ्गरुचस्तवालकान् ।
करभोरु करोति मारुतस्त्वदुपावर्तनशाङ्कि मे मनः ॥ ५३ ॥

हे **करभोरु** करभसदृशोरु । 'मणिबन्धादाकनिष्ठं करस्य करभो बहिः ।' इत्यमरः । कुसुमैरुत्खचितानुत्कर्षेण रचितान् [ **कुसुमोत्खचितान्** ] पुष्पानुविद्धान् **वलीभृतः** [ तरङ्गितान् ] भङ्गीयुक्तान् । कुटिलानित्यर्थः । **भृङ्गरुचः** भ्रमरवर्णान् **तवालकांश्चलयन्** कम्पयन् **मारुतः** । **मे मनः** । कर्म । **त्वदुपावर्तनशाङ्कि** तवोपावर्तनं प्रत्याश्वसनं शङ्कत इति तत् **करोति** । अलकचलनाद्यादृच्छिकात्प्रत्याश्वसनमनुमीयत इत्यर्थः । उपावर्तनं परिवर्तनं वा ॥

तदपोहितुमर्हसि प्रिये प्रतिबोधेन विषादमाशु मे ।
ज्वलितेन गुहागतं तमस्तुहिनाद्रेरिव नक्तमोषधिः ॥ ५४ ॥

हे **प्रिये** । **तत्** तस्मात्कारणाद् **आशु मे विषादं** दुःखम् । **नक्तं** रात्रौ **ओषधिः** तृणज्योतिराख्या लता **ज्वलितेन** प्रकाशेन **तुहिनाद्रेः** हिमाचलस्य **गुहागतं तमः** अन्धकारम् **इव** । **प्रतिबोधेन** ज्ञानेन **अपोहितुं** निरसितुम् **अर्हसि** ॥

इदमुच्छ्वसितालकं मुखं तव विश्रान्तकथं दुनोति माम् ।
निशि सुप्तमिवैकपङ्कजं विरताभ्यन्तरषट्पदस्वनम् ॥ ५५ ॥

**इदम् उच्छ्वसितालकं** चलित( विकीर्ण )चूर्णकुन्तलं **विश्रान्तकथं** निवृत्तसंलापं **तव मुखं मां दुनोति** परितापयति । किमिव । **निशि** रात्रौ **सुप्तं** निमीलितं विरतोऽभ्यन्तराणामन्तर्वर्तिनां षट्पदानां स्वनो यत्र तत् [ **विरताभ्यन्तरषट्पदस्वनम्** ] । निःशब्दभृङ्गमित्यर्थः । **एकपङ्कजम्** अद्वितीयं पद्मम् **इव** । निशीत्यनेनान्धकारं लक्ष्यते । तदेवोच्छ्वसितानुमानमित्यूहनीयम् ॥

शशिनं पुनरेति शर्वरी दयिता द्वन्द्वचरं पतत्रिणम् ।
इति तौ विरहान्तरक्षमौ कथमत्यन्तगता न मां दहेः ॥ ५६ ॥

**शर्वरी** रात्रिः **शशिनं** चन्द्रं **पुनः एति** प्राप्नोति । द्वन्द्वेन द्वन्द्वीभूय चरतीति द्वन्द्वचरः तं **द्वन्द्वचरं पतत्रिणं** चक्रवाकं **दयिता** चक्रवाकी पुनरेति । **इति** हेतोः **तौ** चन्द्रचक्रवाकौ विरहान्तराणि विरहभेदान्क्षमेते सहेते इति **विरहान्तरक्षमौ** । 'अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये' । इत्यमरः । **अत्यन्तगता** अपुनरागमनाय गता त्वं तु **कथं न मां दहेः** न संतापयेः । अपि तु दहेरेवेत्यर्थः ॥

नवपल्लवसंस्तरेऽपि ते मृदु दूयेत यदङ्गमर्पितम् ।
तदिदं विषहिष्यते कथं वद वामोरु चिताधिरोहणम् ॥ ५७ ॥

---

१ 'कुसुमोत्कलितान्;' वल्लिमतः इ. पा० । २ 'विरहस्य वियोगस्यान्तरमवधिं क्षमेते सहेते नादृशौ विरहावधिसहौ' इति दिनकरव्याख्या समीचीनतरा । विरहलक्षणं रसाकरे—विप्रलम्भस्तु सामान्ये वियोगे विरहोऽन्यथा । यावज्जीववियोगः स्यादार्यायोर्हर्निशं भवेत् ॥ इति । 'मृतप्रियाणामत्यन्तं यावज्जीवार्तिदायिनम् । वियोगं विरहं प्राहुर्दुःसहं पूर्वसूरयः ॥' इ. शब्दार्णवे ।

**नवपल्लवसंस्तरे** नूतनप्रवालास्तरणे **अपि अर्पितं** स्थापितं **मृदु ते** तव **यद् अङ्गं** शरीरं **दूयेत** परितप्तं भवेत् । वामौ सुन्दरावूरू यस्याः सा । हे **वामोरु** । 'वामं स्यात्सुन्दरे सव्ये' इति केशवः । 'संहितशफलक्षण–' इत्यादिनोङ्प्रत्ययः । **तदिदम्** अङ्गं चितायाः काष्ठसंचयस्याधिरोहणं [ **चिताधिरोहणम्** ] **कथं विषहिष्यते वद** ॥

**इयमप्रतिबोधशायिनीं रशना त्वां प्रथमा रहःसखी ।**
**गतिविभ्रमसादनीरवा न शुचा नानुमृतेव लक्ष्यते ॥ ५८ ॥**

**इयं प्रथमा** आद्या **रहःसखी** । सुरतसमयेऽप्यनुयानादिति भावः । गतिविभ्रमसादेन नीरवा चंक्रमणविलासोपरमेण निःशब्दा [ **गतिविभ्रमसादनीरवा** ] **रशना** मेखला । अप्रतिबोधमपुनरुद्बोधं यथा तथा शायिनीम् [ **अप्रतिबोधशायिनीम्** ] । मृतामित्यर्थः । **त्वामनु** त्वया सह । 'तृतीयार्थे' इत्यनुशब्दस्य कर्मप्रवचनीययुक्ते द्वितीया । **शुचा** शोकेन **मृतेव न लक्ष्यते** इति **न** । लक्ष्यत एवेत्यर्थः । संभाव्यनिषेधननिवर्तनाय द्वौ प्रतिषेधौ ॥

**कलमन्यभृतासु भाषितं कलहंसीषु मदालसं गतम् ।**
**पृषतीषु विलोलमीक्षितं पवनाधूतलतासु विभ्रमाः ॥ ५९ ॥**
**त्रिदिवोत्सुकयाप्यवेक्ष्य मां निहिताः सत्यममी गुणास्त्वया ।**
**विरहे तव मे गुरुव्यथं हृदयं न त्ववलम्बितुं क्षमाः ॥ ६० ॥**

युग्मम् । उभयोरेकान्वयः । **अन्यभृतासु** कोकिलासु **कलं** मधुरं **भाषितं** भाषणम् । **कलहंसीषु** विशिष्टहंसीषु मदेन अलसं मन्थरं [ **मदालसं** ] **गतं** गमनम् । **पृषतीषु** हरिणीषु **विलोलमीक्षितं** चञ्चला दृष्टिः । पवनेन वायुनाधूतलतास्वीषत्कम्पितलतासु [ **पवनाधूतलतासु** ] **विभ्रमाः** विलासाः । इति **अमी** पूर्वोक्ताः कलभाषणादयः **गुणाः** एषु कोकिलादिस्थानेष्विति शेषः । **त्रिदिवोत्सुकयापि** स्वर्गं प्रति प्रस्थितयापि **त्वया** इह जीवन्त्यैव **मामवेक्ष्य** विरहासहं विचार्य **सत्यं निहिताः** । मत्प्राणधारणोपायतया स्थापिता इत्यर्थः । **तव विरहे गुरुव्यथम्** अतिदुःखं **मे हृदयं** मनः **अवलम्बितुं** धारयितुं **तु न क्षमाः** न शक्ताः । ते तु त्वत्संगम एव सुखकारिणः । नान्यथा । प्रत्युत प्राणानपहरन्तीति भावः ॥

**मिथुनं परिकल्पितं त्वया सहकारः फलिनी च नन्विमौ ।**
**अविधाय विवाहसत्क्रियामनयोर्गम्यत इत्यसांप्रतम् ॥ ६१ ॥**

**ननु** हे प्रिये **सहकारः** चूतविशेषः **फलिनी** प्रियङ्गुलता **च इमौ त्वया मिथुनं**

---

१ 'गतं मनोहरम्' इति पा. 'हरिणीषु' इ. पा. । ३ चपलमीक्षितं दर्शनम् इ. पा. । ४ श्यामेत्यपरनामधेया । ५ अनुरूपवर्णनं शाकुन्तले–सङ्कल्पितं प्रथममेव मया तवार्थे भर्तारमात्मसदृशं सुकृतैर्गता त्वम् । चूतेन संश्रितवती नवमालिकेयमस्यामहं त्वयि च संप्रति वीतचिन्तः ॥ तदुक्तम्–विवाहमङ्गलाचारगीतनेपथ्यसंयुता । वृक्षेणोद्वाहिता श्यामा जायते कुसुमाकुला ॥ इति ।

**परिकल्पितं** मिथुनत्वेनाभ्यमानि [ समर्थितम् इ. पा. ] । **अनयोः** फलिनीसहकारयोः **विवाहसत्क्रियां** विवाहमङ्गलम् [ ' विवाहाख्यां सत्क्रियां संभावनां ' इ. पा. ] **अविधाय** अकृत्वा **गम्यत इति असांप्रतम्** अयुक्तम् । मातृहीनानां न किंचित्सुखमस्तीति भावः ॥

**कुसुमं कृतदोहदस्त्वया यदशोकोऽयमुदीरयिष्यति ।**
**अलकाभरणं कथं नु तत्तव नेष्यामि निवापमाल्यताम् ॥ ६२ ॥**

वृक्षादिपोषकं दोहदम् । **त्वया** कृतं दोहदं पादताडनरूपं यस्य स [ **कृतदोहदः** ] **अयम् अशोकः यत्कुसुममुदीरयिष्यति** प्रसविष्यते । **तत् तव** अलकानामाभरणमाभरणभूतं [ **अलकाभरणं** ] कुसुमं **कथं नु** केन प्रकारेण **निवापमाल्यतां** दाहाञ्जलेरर्ध्यतां **नेष्यामि** । ' निवापः पितृदानं स्यात् ' इत्यमरः ॥

**स्मरतेव सशब्दनूपुरं चरणानुग्रहमन्यदुर्लभम् ।**
**अमुना कुसुमाश्रुवर्षिणा त्वमशोकेन सुगात्रि शोच्यसे ॥ ६३ ॥**

**अन्यदुर्लभम्** । किं तु स्मर्तव्यमेवेत्यर्थः । सशब्दं ध्वानियुक्तं नूपुरं मञ्जीरं यस्य तं [ **सशब्दनूपुरं** ] चरणेन पादेनानुग्रहं ताडनरूपं [ **चरणानुग्रहम्** ] । त्वदीयमिति भावस्थम् । **स्मरतेव** चिन्तयतेव । कुसूमान्येवाश्रूणि तद्वर्षिणा [ **कुसुमाश्रुवर्षिणा** ] पुष्पबाष्पमुचा **अमुना** पुरोवर्तिना पूर्वोक्तादन्येन **अशोकेन** । हे **सुगात्रि** । ' अङ्गगात्रकण्ठेभ्यश्च ' इति वक्तव्यान्ङीप् । **त्वं शोच्यसे** ॥

**तव निःश्वसितानुकारिभिर्बकुलैरर्धचितां समं मया ।**
**असमाप्य विलासमेखलां किमिदं किंनरकण्ठि सुप्यते ॥ ६४ ॥**

**तव निःश्वासितानुकारिभिः** सौरभ्यादिभिरिति भावगतम् । **बकुलैः** बकुलकुसुमैः करणैः **मया समं** सार्धम् **अर्धचिताम्** अर्धं यथा तथा चितां स्यूतां विलासाय मेखलां [ **विलासमेखलाम्** ] **असमाप्य** अपूरयित्वा । हे **किंनरकण्ठि** । किंनरस्य देवयोनिविशेषस्य कण्ठ इव कण्ठो यस्याः । कण्ठशब्देनात्र तज्जः स्वरो लक्ष्यते । तत्संबुद्धिः । ' अङ्गगात्रकण्ठेभ्यश्च ' इति ङीप् । **इदं** पूर्ववर्ति यथा तथा **किं** कस्मै प्रयोजनाय **सुप्यते** निद्रा क्रियते । ' वचिस्वपि– ' इत्यादिना संप्रसारणम् । अनुचितमिदं स्वपनमित्यर्थः ॥

**समदुःखसुखः सखीजनः प्रतिपच्चन्द्रनिभोऽयमात्मजः ।**
**अहमेकरसस्तथापि ते व्यवसायः प्रतिपत्तिनिष्ठुरः ॥ ६५ ॥**

**अयं सखीजनः समदुःखसुखः** । त्वद्दुःखेन दुःखी त्वत्सुखेन सुखीत्यर्थः ॥ अयम्

---

१ ' कृतदोहदः ' इ. पा०. २ तदुक्तं प्रयोगरत्नावल्याम् । नूपुरान्वितपादेन तरुण्या ताडितो भृशम् । अशोकः केसरो वक्रसीधुसिक्तश्च फुल्लति ॥ दोहदलक्षणं शब्दार्णवे–' तरुगुल्मलतादीनामकाले कुशलैः कृतम् । पुष्पाद्युत्पादकं द्रव्यं दोहदः स्यात्तु तत्क्रिया ' ॥ इति । ३ ' अनुवादिभिः ' इ. पा०

**आत्मजः** बालः **प्रतिपच्चन्द्रनिभः** प्रतिपदि शुक्लपक्षे क्षीणचन्द्रस्तन्निभस्तत्सदृशः । दर्शनीयो वर्धिष्णुश्चेत्यर्थः । प्रतिपच्छब्देन द्वितीया लक्ष्यते । प्रतिपदि चन्द्रस्यादर्शनात् । **अहमेकरसः** अभिन्नरागः । समानप्रेमेत्यर्थः। 'शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः।' इत्यमरः । **तथापि** । जीवितसामग्रीसत्त्वेऽपीत्यर्थः । **ते** तव **व्यवसायः** अस्मत्परित्यागरूपो व्यापारः [ **प्रतिपत्तिनिष्ठुरः** ] । प्रतिपत्त्या निश्चयेन निष्ठुरः क्रूरः । ' प्रतिपत्तिः पदप्राप्तौ प्रवृत्तौ गौरवेऽपि च । प्रागल्भ्ये च प्रबोधे च ' इति विश्वः । स्मर्तुं न शक्यः किमुताधिकर्तुमिति भावः ॥

**धृतिरस्तमिता रतिश्च्युता विरतं गेयमृतुर्निरुत्सवः ।**
**गतमाभरणप्रयोजनं परिशून्यं शयनीयमद्य मे ॥ ६६ ॥**

**अद्य मे धृतिः** धैर्यं प्रीतिर्वा **अस्तम्** नाशम् **इता** । **रतिः** क्रीडा **च्युता** गता । **गेयं** गानं **विरतम्** । **ऋतुः** वसन्तादिः **निरुत्सवः** । आभरणानां प्रयोजनं [ **आभरणप्रयोजनम्** ] **गतम्** अपगतम् । शेतेऽस्मिन्निति **शयनीयं** तल्पम् । ' कृत्यल्युटो बहुलम् ' इत्यधिकरणार्थेऽनीयर्प्रत्ययः । परितः शून्यं **परिशून्यं** जातम् । त्वां विना सर्वमपि निष्फलमिति भावः ॥

तत्र हेतुं प्रकाशयति—

**गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधौ ।**
**करुणाविमुखेन मृत्युना हरता त्वां वद किं न मे हृतम् ॥ ६७ ॥**

त्वमेव **गृहिणी** दाराः । अनेन सर्वं कुटुम्बं त्वदाश्रयमिति भावः । **सचिवः** बुद्धिसहायो मन्त्री । सर्वो हितोपदेशस्त्वदायत्त इत्यनेनोच्यते । **मिथः** रहसि **सखी** नर्मसचिवः । सर्वोपभोगस्त्वदाश्रयं इत्यमुना प्रकटितम् । **ललिते** मनोहरे **कलाविधौ** वादित्रादिचतुःषष्टिकलाप्रयोगे **प्रियशिष्या** । प्रियत्वं प्राज्ञत्वादित्यभिसन्धिः । सर्वानन्दोऽनेन त्वन्निबन्धन इत्युद्घाटितम् । अतः **त्वां** समष्टिरूपां **हरता** अत एव **करुणाविमुखेन** कृपाशून्येन **मृत्युना मे** मत्संबन्धि **किं** वस्तु **न हृतं वद** । सर्वमपि हृतमित्यर्थ ॥

**मदिराक्षि मदाननार्पितं मधु पीत्वा रसवत्कथं नु मे ।**
**अनुपास्यसि बाष्पदूषितं परलोकोपनतं जलाञ्जलिम् ॥ ६८ ॥**

हे **मदिराक्षि** मत्तलोचने । प्रसङ्गोचितेयं संबुद्धिः प्रसङ्गश्च मधुपानोल्लेखः । **मदाननार्पितं** मन्मुखे संभृतं **रसवत्** सुगन्धमाधुर्यं **मधु** मद्यं **पीत्वा** इदानीं परलोकं उपनतं प्राप्तं [ **परलोकोपनतं** ] मे [ **बाष्पदूषितं** ] बाष्पैरश्रुभिर्दूषितं कलुषितं **जलाञ्जलिं**

१ × × × 'अयमात्मजश्च प्रतिपच्चन्द्रनिभो वर्धिष्णुत्वात्सर्वलोकरौत्सुक्येन दृश्यमानत्वाच्च दर्शनीयः । प्रतिपच्चन्द्र इत्यत्र प्रतिपत्सामीप्यलक्षणया द्वितीयाचन्द्रो विवक्षितः । यद्यपि प्रतिपदि चन्द्रकलास्ति तथाप्यदृश्यमानत्वान्न युज्यते । अतो द्वितीयाचन्द्रसदृश इत्यर्थः । अहमेकरसस्त्वयि दृढप्रेमा । तथाप्येतत्त्रितयं यद्यपि जीवितालम्बनं वर्तते तथापि ते व्यवसायो मरणोद्योगः प्रतिपत्तौ प्रीतौ निष्ठुरः पराङ्मुख इत्यर्थः । ' इति. दिनकरव्याख्या । २ स्वभावनिर्दय इति व० । ३ ' चिरशून्यम् ' इ. पा.

तिलोदकाञ्जलिं **कथं नु अनुपास्यसि** ॥ मदाननार्पितस्य परलोकोपनतस्य च रसवतो बाष्पबिन्दुदूषितस्य मधुनो जलाञ्जलेश्च महदन्तरमिति विवक्षा ॥

अस्यापरा व्याख्यापि दृश्यते यथा—माद्यत्यनयेति मदिरा लोकप्रसिद्धा । तथापि 'नार्यो मदिरलोचनाः' इत्यादिप्रयोगदर्शनान्माद्यत्याभ्यामिति मदिरे अक्षिणी यस्यास्तत्संबुद्धिर्हे मदिराक्षि । मदाननेनार्पितं रसवत्स्वादुतरं मधु मद्यं पीत्वा बाष्पदूषितमश्रुतप्तं परलोकोपनतं परलोकप्राप्तं मे जलाञ्जलिं तिलोदकाञ्जलिं कथं नु अनन्तरं पास्यसि । तदनन्तरमिदमनर्हमित्यर्थः । यथाह भट्टमल्लः—'अनुपानं हिमजलं यवगोधूमनिर्मिते । दध्नि मद्ये विषे द्राक्षे पिष्टे पिष्टमयेऽपि च ॥' इति । तच्चेहैव युज्यते । इदं तूष्णं लोकान्तरोपयोगि चेत्यायुर्वेदविरोधात्कथमनुपास्यसीति भावः ॥

**विभवेऽपि सति त्वया विना सुखमेतावदजस्य गण्यताम् ।**
**अहृतस्य विलोभनान्तरैर्मम सर्वे विषयास्त्वदाश्रयाः ॥ ६९ ॥**

**विभवे** ऐश्वर्ये **सत्यपि त्वया विना अजस्य सुखम् एतावद्** इयदवधिकं **गण्यताम्** । यावत्त्वया सह भुक्तं ततोऽन्यन्न किंचिद्भविष्यतीत्यर्थः । कुतः । **विलोभनान्तरैः** अन्यैर्विशेषेण लोभजनकवस्तुभिरैश्वर्यादिभिः **अहृतस्य** अनाकृष्टस्य **मम सर्वे विषयाः** भोगादयः **त्वदाश्रयाः** त्वमेवाश्रयोऽधिकरणं येषां ते तथा त्वदधीनाः । त्वां विना मे न किंचिद्रोचत इत्यर्थः ॥

**विलपन्निति कोसलाधिपः करुणार्थग्रथितं प्रियां प्रति ।**
**अकरोत्पृथिवीरुहानपि स्रुतशाखारसबाष्पदुर्दिनान् ॥ ७० ॥**

**कोसलाधिपः** अजः **इति** करुणः शोकरसः स एवार्थस्तेन ग्रथितं संबद्धं यथा तथा [ **करुणार्थग्रथितं** ] **प्रियां प्रति** इन्दुमतीमुद्दिश्य **विलपन्पृथिवीरुहानपि** वृक्षानपि [ **स्रुतशाखारसबाष्पदुर्दिनान्** ] स्रुतो गलितः शाखानां विटपानां रसो निर्यासः स एव बाष्पः स दुर्दिनं दुर्वर्षो येषां ते । तथाभूतान् **अकरोत्** । किमुत मनुष्यानिति भावगतम् । स्रुतशाखारसबाष्पदूषितानित्यपि पाठो दृश्यते । स्रुताः शाखारसा मकरन्दा एव बाष्पास्तैर्दूषितान् अकरोत् । अचेतनानप्यरोदयादित्यर्थः ॥

**अथ तस्य कथंचिदङ्कतः स्वजनस्तामपनीय सुन्दरीम् ।**
**विससर्ज कृतान्त्यमण्डनामनलायागुरुचन्दनैधसे ॥ ७१ ॥**

**अथ स्वजनः** । स्वश्चासौ जनश्चेति विग्रहः । बन्धुवर्गः । **तस्य** अजस्य **अङ्कतः** उत्सङ्गात् **कथंचिदपनीय** कृतमन्त्यं मण्डनं यस्यास्ताम् **कृतान्त्यमण्डनाम्** । तदन्त्यमण्डनामिति पाठे तद्दिव्यकुसुममेवान्त्यं मण्डनमलङ्कारो यस्यास्ताम् । **तां सुन्दरीम्** अगुरुः कालागुरुश्चन्दनः श्रीखण्ड एवैधांसीन्धनानि यस्मिन् । इति मन्त्रसं-

---

१ मदिराख्या दृष्टिर्वा । तथा संगीतकलिकायाम्—स्निग्धार्धमुकुला कान्ता लंघिता मदिरा तथा । पञ्चवात्र परिज्ञाताः शौरादित्येन दृष्टयः ॥ सौष्ठवेनापरित्यक्ता स्मेरापाङ्गमनोहरा । वेपमानान्तरा दृष्टिर्मदिरा परिकीर्तिता ॥ इति ।

स्कारोपि सूचितः। तस्मै [ **अगुरुचन्दनैधसे** ] **अनलाय** अग्नये **विससर्ज** विसृष्टवान्। 'क्रियाग्रहणमपि कर्तव्यम्' इति क्रियामात्रप्रयोगे संप्रदानत्वाच्चतुर्थी ॥

**प्रमदामनु संस्थितः शुचा नृपतिः सन्निति वाच्यदर्शनात्।**
**न चकार शरीरमग्निसात्सह देव्या न तु जीविताशया ॥ ७२ ॥**

**नृपतिः** अजः **सन्** अपि विद्वानपि **शुचा** शोकेन **प्रमदामनु** प्रमदया सह **संस्थितः** मृतः **इति वाच्यदर्शनात्** निन्दादर्शनाद् **देव्या** इन्दुमत्या **सह शरीरमग्निसाद्** अग्न्यधीनं **न चकार**। 'तदधीनवचने' इति सातिप्रत्ययः। **जीविताशया** प्राणेच्छया **तु न** इति न ॥

**अथ तेन दशाहतः परे गुणशेषामुपदिश्य भामिनीम्।**
**विदुषा विधयो महर्द्धयः पुर एवोपवने समापिताः ॥ ७३ ॥**

**अथ विदुषा** शास्त्रज्ञेन। साग्निकेनेत्यभिसंधिः। **तेन** अजेन। गुणा रूपादय एव शेषा यस्यास्तां **गुणशेषां भामिनीम्** इन्दुमतीम् **उपदिश्य** उद्दिश्य। दशानामह्नां समाहारो दशाहः। 'तद्धितार्थ–' इत्यादिना समासः। समाहारस्यैकत्वादेकवचनम्। 'राजाहःसखिभ्यष्टच्' इति टच्। 'रात्राह्नाहाः पुंसि' इति पुंलिङ्गता। 'अह्नोह्न एतेभ्यः' इत्यकारादेशो न। 'न संख्यादेः समाहारे' इति निषेधात्। ततस्तसिल्। तस्माद् **दशाहतः परे** ऊर्ध्वं कर्तव्याः **महर्द्धयः** महासमृद्धयः **विधयः** क्रियाः **पुरः** पुर्याः **उपवने** उद्याने **एव समापिताः** संपूर्णमनुष्ठिताः। 'दशाहतः' इत्यत्र 'विप्रः शुद्ध्येद्दशाहेन द्वादशाहेन भूमिपः' इति मनुवचनविरोधो नाशङ्कनीयः। तस्य निर्गुणक्षत्रियविषयत्वात्। गुणवत्क्षत्रियस्य तु दशाहेन शुद्धिमाह पराशरः–'क्षत्रियस्तु दशाहेन स्वधर्मनिरतः शुचिः।' इति। सूच्यतेऽस्यापि गुणवत्त्वं विदुषेत्यनेन ॥

**स विवेश पुरीं तया विना क्षणदापायशशाङ्कदर्शनः।**
**परिवाहमिवावलोकयन्स्वशुचः पौरवधूमुखाश्रुषु ॥ ७४ ॥**

**तया** इन्दुमत्या **विना**। क्षणदाया रात्रेरपायेऽपगमे यः शशाङ्कश्चन्द्रः स इव दृश्यत इति **क्षणदापायशशाङ्कदर्शनः**। प्रातःकालिकचन्द्र इव दृश्यमान इत्यर्थः। दृश्यत इति कर्मार्थे ल्युट्। **सः** अजः **पौरवधूमुखाश्रुषु स्वशुचः** स्वशोकस्य **परिवाहं** जलोच्छ्वासम् **इव** अव**लोकयन्**। 'जलोच्छ्वासाः परीवाहाः' इत्यमरः। स्वदुःखपूरातिशयमिव पश्यन् **पुरीं विवेश**। वधूग्रहणात्तस्यामिन्दुमत्यां सख्याभिमानादजसमानदुःखसूचनात्परीवाहोक्तिर्निर्वहति ॥

---

१ 'जीवितेच्छया' इ. पा० २ परम्; उपदिश्य–अपदिश्य; भामिनीं–गेहिनीं, सुन्दरीम्; इ. पा. ३ भूरिदक्षिणाविषया एकादशाहादिश्राद्धादयः। इ. चा०; ४ अत्रार्थतोनुरूपाः श्लोकांशाः–'स्वजनस्य हि दुःखमग्रतो विवृतद्वारमिवोपजायते' इ. कुमारसंभवे। 'संतानवाहीन्यपि मानुषाणां दुःखानि सद्बन्धुवियोगजानि। दृष्टे जने प्रेयसि दुःसहानि स्रोतःसहस्रैरिव संप्लवन्ते॥' इ. उत्तररामचरिते च।

अथ तं सवनाय दीक्षितः प्रणिधानाद्गुरुराश्रमस्थितः।
अभिषङ्गजडं विजज्ञिवानिति शिष्येण किलान्वबोधयत्॥ ७५॥

**अथ सवनाय** यागाय **दीक्षितः गुरुः** वसिष्ठ आश्रमे स्वकीयाश्रमे स्थितः [**आश्रमस्थितः**] सन्। **तम्** अजम् **अभिषङ्गजडं** दुःखमोहितं **प्रणिधानाद्** चित्तैकाग्र्याद् **विजज्ञिवान्** ज्ञातवान्। 'क्वसुश्च' इति क्वसुप्रत्ययः। **इति** वक्ष्यमाणप्रकारेण **शिष्येणान्वबोधयत्किल**। बुधेर्ण्यन्ताण्णिचि लङ्॥

वसिष्ठशिष्य आह—

असमाप्तविधिर्यतो मुनिस्तव विद्वानपि तापकारणम्।
न भवन्तमुपस्थितः स्वयं प्रकृतौ स्थापयितुं पथश्च्युतम्॥ ७६॥

**यतः** हेतोः **मुनिः असमाप्तविधिः** असमाप्तक्रतुः ततः **तव तापकारणं** दुःखहेतुं कलत्रनाशरूपं **विद्वान्** जानन् **अपि**। 'विदेः शतुर्वसुः' इति वस्वादेशः। 'न लोक—' इत्यादिना षष्ठीप्रतिषेधः। **ततः च्युतं** स्वभावाद्भ्रष्टं **भवन्तं प्रकृतौ** स्वभावे **स्थापयितुम्**। समाश्वासयितुमित्यर्थः। **स्वयं नोपस्थितः** नागतः॥

मयि तस्य सुवृत्त वर्तते लघुसंदेशपदा सरस्वती।
शृणु विश्रुतसत्त्वसार तां हृदि चैनामुपधातुमर्हसि॥ ७७॥

हे **सुवृत्त** सदाचार। संदिश्यत इति संदेशः संदेष्टव्यार्थः। तस्य पदानि वाचकानि संदेशपदानि लघूनि संक्षिप्तानि यस्यां सा **लघुसंदेशपदा तस्य** मुनेः **सरस्वती** वाङ् **मयि वर्तते**। हे **विश्रुतसत्त्वसार** प्रख्यातधैर्यातिशय। **तां** सरस्वतीं **शृणु**। **एनां** वाचं **हृदि उपधातुं** धर्तुं **च अर्हसि**॥

वक्ष्यमाणार्थानुगुणं मुनेः सर्वज्ञत्वं तावदाह—

पुरुषस्य पदेष्वजन्मनः समतीतं च भवच्च भावि च।
स हि निष्प्रतिघेन चक्षुषा त्रितयं ज्ञानमयेन पश्यति॥ ७८॥

**अजन्मनः पुरुषस्य** पुराणपुरुषस्य भगवतस्त्रिविक्रमस्य **पदेषु** विक्रमेषु। त्रिभुवनेष्वपीत्यर्थः। **समतीतं** भूतं **च भवद्** वर्तमानं **च भावि** भविष्यत् **च** इति **त्रितयं स** मुनिः **निष्प्रतिघेन** अप्रतिबन्धेन **ज्ञानमयेन चक्षुषा** ज्ञानदृष्ट्या **पश्यति हि**। अतस्तदुक्तिषु न संशयितव्यमित्यर्थः॥

चरतः किल दुश्चरं तपस्तृणबिन्दोः परिशङ्कितः पुरा।
प्रजिघाय समाधिभेदिनीं हरिरस्मै हरिणीं सुराङ्गनाम्॥ ७९॥

---

१ 'तमवेक्ष्य मखाय' इ०, आश्रमस्थितः-आश्रमाश्रितः,-श्रयः। इ. पा. २ 'अभिषङ्गिणमीश्वरं विशाम्' इ. पा०। ३ वामदेवेन इ. हे०। ४ पथश्च्युतमिति भरतसंमतः पाठः। पथः स्वभावाद्भ्रष्टमित्यर्थः। 'कृतास्थितिः' इ. दि० व० पठतः। ५ '०हरा' इ, 'उपधातुम्—अवधातुम्' इ. च पा०. ६ 'त्रिषु धामसु शार्ङ्गधन्वनः'। इ. पा० ७ अवितथम् इ. पा०

**पुरा किल दुश्चरं** तीव्रं **तपश्चरतस्तृणबिन्दोः** तृणबिन्दुनामकात्कस्माच्चिदृषेः **परिशङ्कितः** भीतः । कर्तरि क्तः । 'भीत्रार्थानां भयहेतुः' इत्यपादानात्पञ्चमी । **हरिः** इन्द्रः **समाधिभेदिनीं** तपोविघातिनीं **हरिणीं** नाम **सुराङ्गनाम् अस्मै** तृणबिन्दवे **प्रजिघाय** प्रेरितवान् ॥

**स तपःप्रतिबन्धमन्युना प्रमुखाविष्कृतचारुविभ्रमाम् ।**
**अशपद्भव मानुषीति तां शमवेलाप्रलयोर्मिणा भुवि ॥ ८० ॥**

**स** मुनिः । शमः शान्तिरेव वेला मर्यादा । तस्याः प्रलयोर्मिणा [ **शमवेलाप्रलयोर्मिणा** ] प्रलयकालतरङ्गेण । शमविघातकेनेत्यर्थः । 'अब्ध्यम्बुविकृतौ वेला कालमर्यादयोरपि ।' इत्यमरयादवौ । तपसः प्रतिबन्धेन विघ्नेन यो मन्युः क्रोधस्तेन [ **तपःप्रतिबन्धमन्युना** ] हेतुना । प्रमुखेन आविष्कृतचारुविभ्रमां प्रकाशितमनोहरविलासां [ **प्रमुखाविष्कृतचारुविभ्रमाम्** ] **तां** हरिणीं **भुवि** भूलोके **मानुषी** मनुष्यस्त्री **भव इति अशपत्** शशाप ॥

**भगवन्परवानयं जनः प्रतिकूलाचरितं क्षमस्व मे ।**
**इति चोपनतां क्षितिस्पृशं कृतवाना सुरपुष्पदर्शनात् ॥ ८१ ॥**

हे **भगवन्** महर्षे **अयं जनः** । परोऽस्यास्तीति स्वामित्वेन **परवान्** पराधीनः । अयमित्यात्मनिर्देशः । अहं पराधीनेत्यर्थः । **मे** मम **प्रतिकूलाचरितम्** अपराधं **क्षमस्व** । **इति** अनेन प्रकारेण **उपनतां** शरणागतां **च** हरिणीम् **आ सुरपुष्पदर्शनात्** सुरपुष्पदर्शनपर्यन्तम् । क्षितिं स्पृशतीति क्षितिस्पृक्तां **क्षितिस्पृशं** मानुषीं **कृतवान्** अकरोत् । दिव्यपुष्पदर्शनं शापावधिरित्यनुगृहीतवानित्यर्थः ॥

**क्रथकैशिकवंशसंभवा तव भूत्वा महिषी चिराय सा ।**
**उपलब्धवती दिवश्च्युतं विवशा शापनिवृत्तिकारणम् ॥ ८२ ॥**

क्रथकैशिकानां राज्ञां वंशे संभवो यस्याः सा [ **क्रथकैशिकवंशसंभवा** ] **सा** हरिणी **तव महिषी** अभिषिक्ता स्त्री । 'कृताभिषेका महिषी' इत्यमरः । **भूत्वा चिराय दिवः** स्वर्गात् **च्युतं** पतितं **शापनिवृत्तिकारणं** सुरपुष्परूपम् **उपलब्धवती विवशा** । अभूदिति शेषः । मृतेत्यर्थः ॥

**तदलं तदपायचिन्तया विपदुत्पत्तिमतामुपस्थिता ।**
**वसुधेयमवेक्ष्यतां त्वया वसुमत्या हि नृपाः कलत्रिणः ॥ ८३ ॥**

**तत्** तस्मात्तस्या अपायचिन्तया [ **तदपायचिन्तया** ] **अलम्** तस्या मरणं न चिन्त्यमित्यर्थः । निषेधक्रियां प्रति करणत्वाच्चिन्तयेति तृतीया । कुतो न चिन्त्यमत आह—

१ 'प्रतिघात इ० पा०. २ प्रलयोर्मिवान्; भुवि–मुनिः, इ० पा०. ३ यद्वा प्रकृष्टेन चारुणा मुखेन इ०. ४ 'चरितं–चरणम्,' क्षमस्व-सहस्व, सुरपुष्प०-सुरमाल्य०, इ. पा. ५ 'उपलब्धवती तनुं जहौ सुखतः शापनिवृत्तिकारणम्' इति हे० दि० पठतः। 'मुनिशापनिवृत्तिकारणं श्रवमापाशु यतस्ततुं जहौ' इ० पा०. ६ 'अवस्थिता' इ० पा०. सर्वमुत्पादि भङ्गुरम्' इति हितोपदेशे ।

**उत्पत्तिमतां** जन्मवतां **विपद्** विपत्तिः **उपस्थिता** सिद्धा । 'जातस्य हि ध्रुवो मृत्युः' इत्यर्थः। तथापि कलत्ररहितस्य किं जीवितेन । तत्राह **त्वया इयं वसुधा** भूमिः **अवेक्ष्यतां** पाल्यताम् । **हि** यस्माद् **नृपाः वसुमत्या** पृथिव्या **कलत्रिणः** कलत्रवन्तः। अतो न शोचितव्यमित्यर्थः ॥

उदये मदवाच्यमुज्झता श्रुतमाविष्कृतमात्मवत्तया ।
मनसः संमुपस्थिते ज्वरे पुनरक्लीबतया प्रकाश्यताम् ॥ ८४ ॥

**उदये** अभ्युदये सति मदेन यद्वाच्यं निन्दादुःखं तद् [**मदवाच्यम्**] **उज्झता** परिहरता। सत्यपि मदहेतावमाद्यता । त्वयेति शेषः। **आत्मवत्तया** अविकृतचित्ततया लिङ्गेन **श्रुतं** शास्त्रजनितं ज्ञानम् ।['आविष्कृतमात्मवत्त्वया'इति पाठोऽपि दृश्यते। तथात्व इत्थं व्याख्या–**त्वया** यद् **आत्मवद्** अध्यात्मप्रचुरं **श्रुतं** शास्त्रम् तज्जनितं ज्ञानमिति यावत् । ] **आविष्कृतं** प्रकाशितम्। तच्छ्रुतं **मनसः ज्वरे** संतापे **समुपस्थिते** प्राप्ते **अक्लीबतया** धैर्येण लिङ्गेन **पुनः प्रकाश्यताम्**। विदुषा सर्वास्ववस्थास्वपि धीरेण भवितव्यमित्यर्थः।

इतोऽपि न रोदितव्यमित्याह—

रुदता कुत एव सा पुनर्भवता नानुमृतापि लभ्यते ।
परलोकजुषां स्वकर्मभिर्गतयो भिन्नपथा हि देहिनाम् ॥ ८५ ॥

**रुदता भवता सा कुत एव लभ्यते**। न लभ्यत एव। अनुम्रियत इति अनुमृत्। क्विप्। तेन **अनुमृता** अनुमृतवता **अपि** भवता **पुनर्न** लभ्यत इति। नन्वनुमृतेन परत्र लभ्यते । तदपि नेत्याह । **परलोकजुषां** लोकान्तरभाजामपि **देहिनाम्**। गम्यन्त इति **गतयः** गम्यस्थानानि **स्वकर्मभिः** पूर्वाचरितपुण्यपापैः **भिन्नपथाः** पृथक्कृतमार्गाः **हि**। परत्रापि स्वस्वधर्मानुरूपफलभोगाय भिन्नदेशगमनान्न मृतेनापि लभ्यत इत्यर्थः।

अपशोकमनाः कुटुम्बिनीमनुगृह्णीष्व निवापदत्तिभिः ।
स्वजनाश्रु किलातिसंततं दहति प्रेतमिति प्रचक्षते ॥ ८६ ॥

किं तु **अपशोकमनाः** निर्दुःखचित्तः सन् **कुटुम्बिनीं** पत्नीं **निवापदत्तिभिः** पिण्डोदकादिदानैः **अनुगृह्णीष्व** तर्पयेत्यर्थः । अन्यथा दोषमाह–**अतिसंततम्** अविच्छिन्नं स्वजनानां बन्धूनाम् । 'बन्धुस्वस्वजनाः समाः' इत्यमरः । अश्रु

---

१ 'तदुपस्थिते' इ० पा० २ 'संपत्तौ च विपत्तौ च महतामेकरूपता' इति भावः। ३ 'नानुमृतेन' इति, लभ्यते–'अवाप्यते' इ०; हि देहिनां–शरीरिणाम्' इ. च पा०। सर्वोऽप्ययं श्लोकोऽन्यथा पठ्यते कैश्चिद्यथा–रुदितेन न सा निवर्तते नृप तत्तावदन[पा.]र्थकं तव । न भवाननुसंस्थितोऽपि तां लभते कर्मवशा हि देहिनः ॥ ४ अनुरूपभावः कादम्बर्याम्–'अन्यामेव स्वकर्मफलपरिपाकोपचितामसाववशो नीयते भूमिम्'. इति।

[ **स्वजनाश्रु** ] कर्तृ **प्रेतं** मृतं **दहति इति प्रचक्षते** मन्वादयः **किल**। अत्र याज्ञवल्क्यः—' श्लेष्माश्रु बन्धुभिर्मुक्तं प्रेतो भुङ्क्ते यतोऽवशः । अतो न रोदितव्यं हि क्रियाः कार्याः स्वशक्तितः ॥ " इति ॥

**मरणं प्रकृतिः शरीरिणां विकृतिर्जीवितमुच्यते बुधैः ।**
**क्षणमप्यवतिष्ठते श्वसन्यदि जन्तुर्ननु लाभवानसौ ॥ ८७ ॥**

**शरीरिणां मरणं प्रकृतिः** स्वभावः । ध्रुवमित्यर्थः । **जीवितं विकृतिः** यादृच्छिकं **बुधैः उच्यते** । एवं स्थिते **जन्तुः** प्राणी **क्षणमपि** । अत्यन्तसंयोगे द्वितीया । **श्वसन्** जीवन् **अवतिष्ठते यदि असौ** क्षणजीवी **लाभवान्ननु** । जीवने यथालाभं संतोष्टव्यम् । अलभ्यलाभात् । मरणे तु न शोचितव्यम् । अस्य स्वाभाव्यादिति भावः ॥

**अवगच्छति मूढचेतनः प्रियनाशं हृदि शल्यमर्पितम् ।**
**स्थिरधीस्तु तदेव मन्यते कुशलद्वारतया समुद्धृतम् ॥ ८८ ॥**

**मूढचेतनः** भ्रान्तबुद्धिः **प्रियनाशम्** इष्टनाशं **हृदि अर्पितं** निखातं **शल्यं** शङ्कुम् **अवगच्छति** मन्यते । **स्थिरधीः** विद्वान् **तु तदेव** शल्यं **समुद्धृतम्** उत्खातं **मन्यते** । प्रियनाशे सतीति शेषः । कुतः । **कुशलद्वारतया** । प्रियनाशस्य मोक्षोपायतयेत्यर्थः । विषयलाभविनाशयोर्यथाक्रमं हिताहितसाधनत्वाभिमानः पामराणाम् । विपरीतं तु विपश्चितामिति भावः ॥

**स्वशरीरशरीरिणावपि श्रुतसंयोगविपर्ययौ यदा ।**
**विरहः किमिवानुतापयेद्वद बाह्यैर्विषयैर्विपश्चितम् ॥ ८९ ॥**

स्वस्य शरीरशरीरिणौ [ **स्वशरीरशरीरिणौ** ] देहात्मानौ **अपि यदा** यतः [ **श्रुतसंयोगविपर्ययौ** ] । श्रुतौ श्रुत्यवगतौ संयोगविपर्ययौ संयोगवियोगौ ययोस्तौ तथोक्तौ । तदा **बाह्यैः विषयैः** पुत्रमित्रकलत्रादिभिः **विरहः विपश्चितं** विद्वांसं **किमिव अनुतापयेत्** त्वं **वद** । न किंचिदित्यर्थः । अथ वा स्वशब्दस्य शरीरेणैव संबन्धः ॥

**न पृथग्जनवच्छुचो वशं वशिनामुत्तम गन्तुमर्हसि ।**
**द्रुमसानुमतां किमन्तरं यदि वायौ द्वितयेऽपि ते चलाः ॥ ९० ॥**

---

१ अत्र मरणशब्देन स्थूलशरीरत्यागोऽवगन्तव्यः । 'अद्य वर्षशतान्ते वा मृत्युर्वै प्राणिनां ध्रुवः' इति भावः । २ 'इतरः' इ०पा०. ३ 'स्मृत' इ०पा०. ४ सहजीवितयोर्नास्ति सम्बन्धः कायजीवयोः । पुत्रमित्रकलत्रेषु संबन्धः केन हेतुना ॥ इ०, 'यस्यास्ति नैक्यं वपुषापि साध तस्यास्ति किं पुत्रकलत्रमित्रैः । पृथक् च ते चर्मणि रोमकूपाः कुतो हि तिष्ठन्ति शरीरमध्ये ॥' इ. च समानार्थौ श्लोकौ ।

हे **वशिनामुत्तम** जितेन्द्रियवर्य **पृथग्जनवत्** पामरजनवत् **शुचः** शोकस्य **वशं गन्तुं नार्हसि** । तथा हि । **द्रुमसानुमतां** तरुशिखरिणां **किमन्तरं** को विशेषः ? **वायौ** सति **द्वितये अपि** द्विप्रकारा अपि । 'प्रथमचरम—' इत्यादिना जसि विभाषया सर्वनामसंज्ञा । ते द्रुमसानुमन्तः **चलाः** चञ्चलाः **यदि** । सानुमतामपि चलने द्रुमवत्तेषामप्यचलसंज्ञा न स्यादित्यर्थः ॥

**स तथेति विनेतुरुदारमतेः प्रतिगृह्य वचो विससर्ज मुनिम् ।**
**तदलब्धपदं हृदि शोकघने प्रतियातमिवान्तिकमस्य गुरोः॥ ९१ ॥**

**सः** अजः **उदारमतेः विनेतुः** गुरोः वसिष्ठस्य **वचः** तच्छिष्यमुखेरितं **तथेति प्रतिगृह्य** अङ्गीकृत्य **मुनिं** वसिष्ठशिष्यं **विससर्ज** प्रेषयामास । किं तु **तद्** वचः **शोकघने** दुःखसान्द्रे **अस्य** अजस्य **हृदि अलब्धपदम्** अप्राप्तावकाशं **सद् गुरोः** वसिष्ठस्य **अन्तिकं प्रतियातमिव** प्रतिनिवृत्तं किमु इत्युत्प्रेक्षा । तोटकवृत्तमेतत्—' इह तोटकमम्बुधिसैः प्रथितम् ' इति तल्लक्षणम् ॥

**तेनाष्टौ परिगमिताः समाः कथंचिद्बालत्वादवितथसूनृतेन सूनोः ।**
**सादृश्यप्रतिकृतिदर्शनैः प्रियायाः स्वप्नेषु क्षणिकसमागमोत्सवैश्च ९२**

अवितथं यथार्थं सूनृतं प्रियवचनं यस्य [ **अवितथसूनृतेन** ] **तेन** अजेन । **सूनोः** पुत्रस्य **बालत्वात्** । राज्याक्षमत्वादित्यर्थः । **प्रियायाः** इन्दुमत्याः । [ **सादृश्यप्रतिकृतिदर्शनैः** ] सादृश्यं वस्त्वन्तरगतमाकारसाम्यम् । प्रतिकृतिश्चित्रम् । तयोर्दर्शनैः **स्वप्नेषु** क्षणिकाः क्षणभङ्गुरा ये समागमोत्सवास्तैः [ **क्षणिकसमागमोत्सवैः** ] **च** । **कथंचित्** कृच्छ्रेण । **अष्टौ समाः** वत्सराः । 'संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत्समाः । ' इत्यमरः । **परिगमिताः** अतिवाहिताः । उक्तं च—' वियोगावस्थासु प्रियजनसदृक्षानुभवनं ततश्चित्रं कर्म स्वपनसमये दर्शनमपि । तदङ्गस्पृष्टानामुपगतवतां स्पर्शनमपि प्रतीकारः कामव्यथितमनसां कोपि कथितः ॥ ' इति । प्रकृते सादृश्यादित्रितयाभिधानं तदङ्गस्पृष्टपदार्थस्पृष्टेरप्युपलक्षणम् । प्रहर्षिणीवृत्तमेतत् ॥

**तस्य प्रसह्य हृदयं किल शोकशङ्कुः**
**प्लक्षप्ररोह इव सौधतलं बिभेद ।**
**प्राणान्तहेतुमपि तं भिषजामसाध्यं**
**लाभं प्रियानुगमनत्वरया स मेने ॥ ९३ ॥**

शोक एव शङ्कुः कीलः [ **शोकशङ्कुः** ] । ' शङ्कुः कीले शिवेऽस्त्रे च ' इति विश्वः । **तस्य** अजस्य **हृदयम्** । **प्लक्षप्ररोहः सौधतलमिव** । **प्रसह्य** बलात् **किल बिभेद** । **सः** अजः **प्राणान्तहेतुं** मरणकारणम् **अपि भिषजाम् असाध्यम्** अप्रतिसमाधेयं

१ 'प्रविश्य' इ० पा०. २ ' गमने त्वरया ' इ० पा०.

तं शोकशङ्कुं रोगपर्यवसितं [ प्रियानुगमनत्वरया ] प्रियायाअनुगमनेत्कण्ठया लाभं मेने । तद्विरहस्याद्विदुःसहत्वात्तत्प्राप्तिकारणं मरणमेव वरमित्यमन्यतेत्यर्थः ॥

सम्यग्विनीतमथ वर्महरं कुमार-
मादिश्य रक्षणविधौ विधिवत्प्रजानाम् ।
रोगोपसृष्टतनुदुर्वसतिं मुमुक्षुः
प्रायोपवेशनमतिर्नृपतिर्बभूव ॥ ९४ ॥

**अथ नृपतिः** अजः **सम्यग्विनीतं** निसर्गसंस्काराभ्यां विनयवन्तम् । वर्म हरतीति वर्महरः कवचधारणार्हवयस्कः । 'वयसि च' इत्यच्प्रत्ययः । तं [ **वर्महरं** ] **कुमारं** दशरथं **प्रजानां रक्षणविधौ** राज्ये **विधिवद्** विध्यर्हम् । यथाशास्त्रमित्यर्थः । 'तदर्हम्' इति वतिप्रत्ययः । **आदिश्य** नियुज्य रोगेणोपसृष्टाया व्याप्तायास्तनोः शरीरस्य दुर्वसतिं दुःखावस्थितिं [ **रोगोपसृष्टतनुदुर्वसतिं** ] **मुमुक्षुः** जिहासुः सन् । प्रायोपवेशनेऽनशनावस्थाने मतिर्यस्य सः [ **प्रायोपवेशनमतिः** ] **बभूव** । 'प्रायश्चानशने मृत्यौ तुल्यबाहुल्ययोरपि ।' इति विश्वः । अत्र पुराणवचनम्—'समासक्तो भवेद्यस्तु पातकैर्महदादिभिः । दुश्चिकित्स्यैर्महारोगैः पीडितो वा भवेत्तु यः ॥ स्वयं देहविनाशस्य काले प्राप्ते महामतिः । आब्रह्माणं वा स्वर्गादिमहाफलजिगीषया । प्रविशेज्ज्वलनं दीप्तं कुर्यादनशनं तथा । एतेषामधिकारोऽस्ति नान्येषां सर्वजन्तुषु ॥ नराणामथ नारीणां सर्ववर्णेषु सर्वदा ॥' इति । अनयोर्वसन्ततिलकाच्छन्दः । तल्लक्षणम्—'उक्ता वसन्ततिलका तभजा जगौ गः' इति ॥

तीर्थे तोयव्यतिकरभवे जह्नुकन्यासरय्वो-
र्देहत्यागादमरगणनालेख्यमासाद्य सद्यः ॥
पूर्वाकाराधिकतररुचा संगतः कान्तयासौ
लीलागारेष्वरमत पुनर्नन्दनाभ्यन्तरेषु ॥ ९५ ॥

**असौ** अजः **जह्नुकन्यासरय्वोः** तोयानां जलानां व्यतिकरेण संभेदेन भवे [ **तोयव्यतिकरभवे** ] **तीर्थे** गङ्गासरयूसङ्गमे **देहत्यागात् सद्यः** एवामरगणनायां लेख्यं लेखनं [ **अमरगणनालेख्यम्** ] । 'तयोरेव कृत्यक्तखलर्थाः' इति भावार्थे ण्यप्रत्ययः । **आसाद्य** प्राप्य । पूर्वस्मादाकारादधिकतरा रुक् कान्तिर्यस्यास्तया [ **पूर्वाकाराधिकतररुचा** ] **कान्तया** रमण्या **संगतः** सन् । [ **नन्दनाभ्यन्तरेषु** ] नन्दनस्येन्द्रोद्यानस्याभ्यन्तरेष्वन्तर्वर्तिषु **लीलागारेषु** क्रीडाभवनेषु **पुनररमत** । 'यथाकथंचित्तीर्थेऽस्मिन्देहत्यागं करोति यः । तस्यात्मघातदोषो न प्राप्नुयादीप्सिता-

१ 'वर्मधरम्' इ० पा०. २ संन्यासवत्यनशने पुमान् प्रायः इत्यमरः । संन्यसनं सर्वत्यागो मरणाध्यवसायः । इति क्षीरस्वामी. ।

न्यपि ॥ ' इति स्कान्दे । ' पूर्वाकाराधिकचतुरया ' इति पाठे पूर्वस्मादाकारादधिकं चतुरया सुभगया कान्तयेति व्याख्येयम् । मन्दाक्रान्ताच्छन्दः तल्लक्षणम्—' मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद्गुरू चेत् ।' इति ॥

**इति महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया संजीवनीसमाख्यया व्याख्यया समेतो महाकविश्रीकालिदासकृतौ रघुवंशे महाकाव्ये अजविलापः नामाष्टमः सर्गः ।**

---

## नवमः सर्गः ।

एकलोचनमेकार्धे सार्धलोचनमन्यतः ।
नीलार्धं नीलकण्ठार्धं महः किमपि मन्महे ॥

**पितुरनन्तरमुत्तरकोसलान्समधिगम्य समाधिजितेन्द्रियः ।**
**दशरथः प्रशशास महारथो यमवतामवतां च धुरि स्थितः ॥ १ ॥**

समाधिना संयमेन जितेन्द्रियः **समाधिजितेन्द्रियः** । ' समाधिर्नियमे ध्याने ' इति कोषः । **यमवतां** संयमिनाम् **अवतां** रक्षतां राज्ञां **च धुरि** अग्रे **स्थितः महारथः** । ' एको दश सहस्राणि योधयेद्यस्तु धन्विनाम् । शस्त्रशास्त्रप्रवीणश्च स महारथ उच्यते ॥' इति । **दशरथः पितुः अनन्तरम् उत्तरकोसलान्** जनपदान् **समधिगम्य प्रशशास** । अत्र मनुः—' क्षत्रियस्य परो धर्मः प्रजानां परिपालनम् । इति । द्रुतविलम्बितमेतद्वृत्तम् । तल्लक्षणम्–' द्रुतविलम्बितमाह नभौ भरौ ' इति ॥

**अधिगतं विधिवद्यदपालयत्प्रकृतिमण्डलमात्मकुलोचितम् ।**
**अभवदस्य ततो गुणवत्तरं सनगरं नगरन्ध्रकरौजसः ॥ २ ॥**

**अधिगतं** प्राप्तम् **आत्मकुलोचितं** स्वकुलागतं **सनगरं** नगरजनसहितं **प्रकृतिमण्डलं** जानपदमण्डलम् । अत्र प्रकृतिशब्देन प्रजामात्रवाचिना नगरशब्दयोगाद्गोबलीवर्दन्यायेन जानपदमात्रमुच्यते । **यद्** यस्माद् **विधिवद्** यथाशास्त्रम् **अपालयत्** । **ततः** हेतोः । रन्ध्रं करोतीति रन्ध्रकरः । रन्ध्रहेतुरित्यर्थः । ' कृञो ' हेतुता-

---

१ शिवमुपास्मह इत्यर्थः । सार्धलोचनं–प्रियार्धस्थितिभाजः पार्वत्या एकं लोचनं शिवभालस्थतृतीयनेत्रार्धमिलितं यस्य । नीलार्धम्–गजचर्मावृतत्वात् । २ चित्तैकाग्र्येण इति वा । ३ ब्रह्मचर्यं दया क्षान्तिर्दानं सत्यमकल्कता । अहिंसाऽस्तेयमाधुर्ये दमश्चेति यमाः स्मृताः ॥ इति याज्ञवल्क्यः । अहिंसा सत्यवचनं ब्रह्मचर्यमकल्कता । अस्तेयमिति पंचैते यमाख्यानि व्रतानि च, इति वा यमाः । ४ धनुर्वेदस्य तत्त्वज्ञः सर्वशास्त्रविशारदः । सहस्रं योधयत्येकः स महारथ उच्यते ॥ इति वा । अस्मिन्सर्गे चतुर्थपादे यमकाख्यं चित्रं कविनोपनिबद्धम् । तदुक्तं वाग्भटेन–स्यात्पादपदवर्णानामावृत्तिः संयुतायुता । यमकं भिन्नवाच्यानामादिमध्यान्तगोचरम् ॥ इति । ५ ' गुणतत्परम् ' इति पा०. ६ स्वाम्यमात्यसुहृत्कोषराष्ट्रदुर्गबलानि च । सप्ताङ्गानि प्रकृतयः पौराणां श्रेणयोऽपि च ॥ इति कामन्दकः ।

च्छील्यानुलोम्येषु ' इति डप्रत्ययः । नगस्य रन्ध्रकरो नगरन्ध्रकरः कुमारः । 'कुमारः क्रौञ्चदारणः' इत्यमरः । तदोजसः [ **नगरन्ध्रकरौजसः** ] तत्तुल्यबलस्य **अस्य** दशरथस्य **गुणवत्तरमभवत्** । तत्पौरजानपदमण्डलं तस्मिन्नतीवासक्तमभूदित्यर्थः ॥

**उभयमेव वदन्ति मनीषिणः समयवर्षितया कृतकर्मणाम् ।**
**बलनिषूदनमर्थपतिं च तं श्रमनुदं मनुदण्डधरान्वयम् ॥ ३ ॥**

मनस ईषिणः **मनीषिणः** विद्वांसः । पृषोदरादित्वात्साधुः । **बलनिषूदनम्** इन्द्रम् । दण्डस्य धरो राजा मनुरिति यो दण्डधरः स एवान्वयः कूटस्थो यस्य तम् [ **मनुदण्डधरान्वयम्** ] **तं अर्थपतिं** दशरथं **च** इति **उभयमेव** । समयेऽवसरे जलं धनं च वर्षतीति समयवर्षी । तस्य भावः समयवर्षिता तया [ **समयवर्षितया** ] हेतुना **कृतकर्मणां** स्वकर्मकारिणाम् । नुदतीति नुदम् । 'इगुपधज्ञाप्रीकिरः कः' इति कप्रत्ययः । श्रमस्य नुदं **श्रमनुदम्** । क्विबन्तत्वे नपुंसकलिङ्गेनोभयशब्देन सामानाधिकरण्यं न स्यात् इति । **वदन्ति** ॥

**जनपदे न गदः पदमादधावभिभवः कुत एव सपत्नजः ।**
**क्षितिरभूत्फलवत्यजनन्दने शमरतेऽमरतेजसि पार्थिवे ॥ ४ ॥**

**शमरते** शान्तिपरे **अमरतेजसि अजनन्दने** दशरथे **पार्थिवे** पृथिव्या ईश्वरे सति । 'तस्येश्वरः' इत्यण्प्रत्ययः । **जनपदे** देशे **गदः** व्याधिः । 'उपतापरोगव्याधिगदामयाः' इत्यमरः । **पदं न आदधौ** । न चक्रामेत्यर्थः । **सपत्नजः** शत्रुजन्यः **अभिभवः कुत एव** । असंभावित एवेत्यर्थः । **क्षितिः फलवती अभूत्** च ॥

**दशदिगन्तजिता रघुणा यथा श्रियमपुष्यदजेन ततः परम् ।**
**तमधिगम्य तथैव पुनर्बभौ न न महीनमहीनपराक्रमम् ॥ ५ ॥**

**मही** । दशदिगन्ताञ्जितवानिति दशदिगन्तजित् तेन **दशदिगन्तजिता रघुणा यथा श्रियं** कान्तिम् **अपुष्यत्** । **ततः परं** रघोरनन्तरम् **अजेन** च यथा श्रियमपुष्यत् । **तथैव अहीनपराक्रमं** न हीनः पराक्रमो यस्य तमन्यूनपराक्रमं **तं** दशरथम् **इनं** स्वामिनम् **अधिगम्य पुनर्न बभौ** इति **न** । बभावेवेत्यर्थः । द्वौ नञौ प्रकृतमर्थं गमयतः ॥

**समतया वसुवृष्टिविसर्जनैर्नियमनादसतां च नराधिपः ।**
**अनुययौ यमपुण्यजनेश्वरौ सवरुणावरुणाग्रसरं रुचा ॥ ६॥**

**नराधिपः** दशरथः **समतया** समवर्तित्वेन । वसुवृष्टेर्धनवृष्टेर्विसर्जनैः [ **वसुवृ-**

१ 'परिभवः' इ., ' क्षितिः–कृषिः' इ० पा०. २ अहीनः शेषः शम्भुर्वा तद्भूषणधारित्वात् तस्येव पराक्रमो यस्य । अः गरुडः हिः सर्पः तयोरिनः स्वामी विष्णुस्तस्येव पराक्रमो यस्य । 'अः कृष्णे विनतासूनौ ओ विधातरि मन्मथे' इति अनेकार्थः । अहीनान्महासर्पान्निवर्तीत्यहीनपो गरुडस्तस्येव रस्तीक्ष्ण आक्रमो यस्येति वा । इ. हे० । एतत्सर्वं पाण्डित्यपल्लविनमेव ।

**शिविसर्जनैः** ] **असतां** दुष्टानां **नियमनात्** निग्रहात् **च**। **सवरुणौ** वरुणसहितौ **यमपुण्यजनेश्वरौ** यमकुबेरौ यमकुबेरवरुणान्यथासंख्यम् **अनुययौ** अनुचकार। **रुचा** तेजसा **अरुणाग्रसरम्** अरुणसारथिं सूर्यमनुययौ ॥

तस्य व्यसनासक्तिर्नासीदित्याह—

**न मृगयाभिरतिर्न दुरोदरं न च शशिप्रतिमाभरणं मधु।**
**तमुदयाय न वा नवयौवना प्रियतमा यतमानमपाहरत् ॥ ७ ॥**

**उदयाय यतमानम्** अभ्युदयार्थं व्याप्रियमाणं **तं** दशरथं **मृगयाभिरतिः** आखेटव्यसनं **न अपाहरत्** नाचकर्ष। 'आच्छोदनं मृगव्यं स्यादाखेटो मृगया स्त्रियाम्।' इत्यमरः। दुष्टमासमन्तादुदरमस्येति **दुरोदरं** द्यूतं **च न** अपाहरत्। 'दुरोदरो द्यूतकारे पणे द्यूते दुरोदरम्' इत्यमरः। [ **शशिप्रतिमाभरणं** ] शशिनः प्रतिमा प्रतिबिम्बमाभरणं यस्य तत् **मधु न** अपाहरत्। न वेति पदच्छेदः। वाशब्दः समुच्चये। **नवयौवना** नवं नूतनं यौवनं तारुण्यं यस्यास्तादृशी नूतनवयस्का **प्रियतमा वा** स्त्री **न** अपाहरत्। जातावेकवचनम्। अत्र मनुः—'पानमक्षाः स्त्रियश्चेति मृगया च यथाक्रमम्। एतत्कष्टतमं विद्याच्चतुष्कं कामजे गणे ॥' इति ॥

**न कृपणा प्रभवत्यपि वासवे न वितथा परिहासकथास्वपि।**
**न च सपत्नजनेष्वपि तेन वागपरुषा परुषाक्षरमीरिता ॥ ८ ॥**

**तेन** राज्ञा **प्रभवति** प्रभौ सति **वासवे अपि कृपणा** दीना **वाङ् न ईरिता** नोक्ता। **परिहासकथासु अपि वितथा** अनृता वाङ् **न** ईरिता। किं **च अपरुषा** रोषशून्येन तेन **सपत्नजनेषु अपि** शत्रुजनेष्वपि **परुषाक्षरं** निष्ठुराक्षरं यथा तथा वाङ् **न** ईरिता। किमुतान्यत्रेति। सर्वत्रापिशब्दार्थः। किंत्वदीना सत्या मधुरैव वागुक्तेति फलितार्थः ॥

**उदयमस्तमयं च रघूद्वहादुभयमानशिरे वसुधाधिपाः।**
**स हि निदेशमलङ्घयतामभूत्सुहृदयोहृदयः प्रतिगर्जताम् ॥ ९ ॥**

**वसुधाधिपाः** राजानः। उद्वहतीत्युद्वहो नायकः। पचाद्यच्। रघूणामुद्वहो रघुनायकः। तस्माद् [ **रघूद्वहाद्** ] रघुनायकाद् **उदयं** वृद्धिम्। **अस्तमयं** नाशं **च**। इति **उभयमानशिरे** लेभिरे। कुतः। **हि** यस्मात् **स** दशरथो **निदेशम्** आज्ञाम् **अलङ्घयताम्**। शोभनं हृदयमस्येति **सुहृद्** मित्रम् **अभूत्**।

---

१ मद्यस्य प्रायश्चन्द्रिकायां सेवनात् शशिप्रतिमत्वम्। २ दण्डस्य पातनं चैव वाक्पारुष्यार्थदूषणं। क्रोधजेपि गणे विद्यात्कष्टमेतात्त्रिकं सदा ॥ इति च। एवमेतानि चत्वारि कामजानि त्राणि क्रोधजान्येकत्र संहतानि सप्त कष्टतमानि मनुप्रोक्तेष्वष्टादशसु व्यसनेषु। अष्टादशव्यसनानि यथा—मृगयाक्षा दिवास्वप्नः परिवादः स्त्रियो मदः। तौर्यत्रिकं वृथाघातः कामजो दशमो गुणः ॥ पैशून्यं साहसं द्रोहमीर्ष्यासूयार्थदूषणम्। वाग्दण्डजं च पारुष्यं क्रोधजोऽपि गुणोष्टकः। तत्र क्रोधजानामभावमग्रे वक्ष्यति। ३ 'अपि सपत्नजनेन च' इ० पा०।

'सुहृद्दुर्हृदौ मित्रामित्रयोरि'ति निपातः । **प्रतिगर्जतां** प्रतिस्पर्धिनाम् । अय इव हृदयं यस्येति **अयोहृदयः** कठिनचित्तोऽभूत् । आज्ञाकारिणो रक्षति अन्यान्मारयतीत्यर्थः ॥

**अजयदेकरथेन स मेदिनीमुदधिनेमिमधिज्यशरासनः ।**
**जयमघोषयदस्य तु केवलं गजवती जवतीव्रहया चमूः ॥ १० ॥**

**अधिज्यशरासनः स** दशरथः **उदधिनेमिं** समुद्रवेष्टनां **मेदिनीम् एकरथेन अजयत्** । स्वयमेवैकरथेनाजैषीदित्यर्थः । **गजवती** गजयुक्ता । [ **जवतीव्रहया** ] जवेन तीव्रा जवाधिका हया यस्यां सा तथा । **चमूः तु अस्य** नृपस्य **केवलं जयम् अघोषयद्** अप्रथयत् । स्वयमेकवीरस्य चमूरुपकरणमात्रमिति भावः ॥

**[3]अवनिमेकरथेन वरूथिना जितवतः किल तस्य धनुर्भृतः ।**
**विजयदुन्दुभितां ययुरर्णवा घनरवा नरवाहनसंपदः ॥ ११ ॥**

**वरूथिना** गुप्तिमता । 'वरूथो रथगुप्तिर्या तिरोधत्ते रथस्थितिम् ।' इति सज्जनः । **एकरथेन** अद्वितीयरथेन **अवनिं जितवतः धनुर्भृतः नरवाहनसंपदः** कुबेरतुल्यश्रीकस्य **तस्य** दशरथस्य **घनरवाः** मेघसमघोषाः **अर्णवाः विजयदुन्दुभितां किल ययुः** । अर्णवान्तविजयीत्यर्थः ॥

**शमितपक्षबलः शतकोटिना शिखरिणां कुलिशेन पुरंदरः ।**
**स शरवृष्टिमुचा धनुषा द्विषां स्वनवता नवतामरसाननः ॥ १२ ॥**

**पुरंदरः** इन्द्रः **शतकोटिना** शताश्रिणा **कुलिशेन** वज्रेण **शिखरिणां** पर्वतानां **शमितपक्षबलः** विनाशितपक्षसारः । **नवतामरसाननः** नवपङ्कजाननः । 'पङ्केरुहं तामरसम्' इत्यमरः । **स** दशरथः **शरवृष्टिमुचा स्वनवता धनुषा द्विषां** शमितो नाशितः पक्षः सहायो बलं च येन स तथोक्तः । 'पक्षः सहायेऽपि' इत्यमरः ॥

**चरणयोर्नखरागसमृद्धिभिर्मुकुटरत्नमरीचिभिरस्पृशन् ।**
**नृपतयः शतशो मरुतो यथा शतमखं तमखण्डितपौरुषम् ॥ १३ ॥**

**शतशः नृपतयः अखण्डितपौरुषं तं** दशरथम् । **मरुतः** देवाः **शतमखं**

---

१ अनेनार्थदूषणपारुष्यताभाव उक्तः । अत्र कामन्दकः—महत्स्वप्यपराधेषु दण्डं प्राणान्तिकं त्यजेत् । कृते राज्यापहाराच्चु युक्तदण्डः प्रशस्यते ॥ दूष्यस्यादूषणार्थं च परित्यागो महीयसः । अर्थस्य नीतितत्त्वज्ञैरर्थदूषणमुच्यते ॥ तदकस्मात्समाविष्टः कोपेनातिबलीयसा । नित्यमात्महिताकाङ्क्षी न कुर्यादर्थदूषणम् ॥ स. १४, १६–१८. २ उक्तपूर्वोऽयं भावः 'सेनापरिच्छदस्तस्य' इत्यत्र । ३ १०–११योर्मध्येऽयं श्लोकः पठ्यते कैश्चित्—जघननिर्विषयीकृतमेखलानुचितास्रुविलुप्तविशेषकान् । स रिपुदारगणानकरोद्बलादनलकानलकाधिपविक्रमः ॥ ४ 'स्फुरितकोटिसहस्रमरीचिना' इ. 'शत-शत' इ. पा० । सर्व एवायं श्लोकोऽन्यथा पठ्यते कैश्चित्—स्फुरितकोटिसहस्रमरीचिना समचिनोत्कुलिशेन हरिर्यशः । स धनुषा युधि सायकवर्षिणा ( शरवृष्टिमुचा धनुषा युधि ) स्वनवता इ० ॥

**यथा** शतक्रतुमिव नखरागेण चरणनखकान्त्या समृद्धिभिः संपादितर्द्धिभिः [ **नखराग-समृद्धिभिः** ] **मुकुटरत्नमरीचिभिः चरणयोः अस्पृशन्**। तं प्रणेमुरित्यर्थः ॥

**निववृते स महार्णवरोधसः सचिवकारितबालसुताञ्जलीन् ।**
**समनुकम्प्य सपत्नपरिग्रहाननलकानलकानवमां पुरीम् ॥ १४ ॥**

**स** दशरथः सचिवैः संप्रयोजितैः कारिता बालसुतानामञ्जलयो यैस्तान् [ **सचिवकारितबालसुताञ्जलीन्** ] । स्वयमसंमुखगतानित्यर्थः । **अनलकान्** हतभर्तृकतयालकसंस्कारशून्यान् **सपत्नपरिग्रहान्** शत्रुपत्नीः । 'पत्नीपरिजनादानमूलशापाः परिग्रहाः ।' इत्यमरः । **समनुकम्प्य** अनुगृह्य । **अलकानवमाम्** अलकानगरादन्यूनां[1] **पुरीम्** अयोध्यां प्रति [ **महार्णवरोधसः** ] महार्णवानां रोधसः पर्यन्तात् **निववृते** । शरणागतवत्सल इति भावः ॥

**उपगतोऽपि च मण्डलनाभितामनुदितान्यसितातपवारणः ।**
**श्रियमवेक्ष्य स रन्ध्रचलामभूदनलसोऽनलसोमसमद्युतिः ॥ १५ ॥**

अनुदितमनुच्छ्रितमन्यत्स्वच्छत्रातिरिक्तं सितातपवारणं श्वेतच्छत्रं यस्य सः [ **अनुदितान्यसितातपवारणः** ] । [ **अनलसोमसमद्युतिः** ] अनलसोमयोरग्निचन्द्रयोः समे द्युती तेजःकान्ती यस्य स तथोक्तः । **श्रियं** लक्ष्मीं रन्ध्रेऽन्यायालस्यादिरूपे छले चलां चञ्चलां [ **रन्ध्रचलाम्** ] **अवेक्ष्य** अवलोक्य । श्रीर्हि केनचिन्निमिषेण पुमांसं परिहरति । **स** दशरथो मण्डलस्य नाभितां [ **मण्डलनाभिताम्** ] द्वादशराजमण्डलस्य प्रधानमहीपतित्वम् **उपगतः अपि च** । चक्रवर्ती सन्नपीत्यर्थः । 'अथ नाभिस्तु जन्त्वङ्गे यस्य संज्ञा प्रतारिका । रथचक्रस्य मध्यस्थपिण्डिकायां च ना पुनः ॥ आद्यक्षत्रियभेदे तु मतो मुख्यमहीपतौ ॥' इति केशवः । **अनलसः** अप्रमत्तः **अभूत्** । 'अजितमस्ति नृपास्पदमिति'[2] इति पाठान्तरेऽजितं नृपास्पदमस्तीति बुद्ध्यानलसोऽप्रमत्तोऽभूत् । विजितनिखिलजेतव्योऽपि पुनर्जेतव्यान्तरवानिव जागरूक एवावर्तिष्ट इत्यर्थः । द्वादशराजमण्डलं तु कामन्दकेनोक्तम्'—अरिर्मित्रमरेर्मित्रं मित्रमित्रमतः परम् । तथारिमित्रमित्रं च विजिगीषोः पुरःसराः ॥ पार्ष्णिग्राहस्ततः पश्चादाक्रन्दस्तदनन्तरम् । आसारावनयोश्चैव विजिगीषोस्तु पृष्ठतः ॥ अरेश्च विजिगीषोश्च मध्यमो भूम्यनन्तरः । अनुग्रहे संहतयोः समर्थो व्यस्तयोर्वधे ॥ मण्डलाद्बहिरेतेषामुदासीनो बलाधिकः । अनुग्रहे संहतानां व्यस्तानां च वधे प्रभुः ॥' इति । 'अरिमित्रादयः पञ्च विजिगीषोः पुरःसराः । पार्ष्णिग्राहाक्रन्दपार्ष्णिग्राहासाराक्रन्दासाराः ॥' इति पृष्ठतश्चत्वारः । मध्यमोदासीनौ द्वौ विजिगीषुरेक इत्येवं द्वादशराजमण्डलम् । तत्रोदासीनमध्यमोत्तरश्चक्रवर्ती । दशरथश्चैतादृगिति तात्पर्यार्थः ॥

---

१ अलति भूषयति स्वस्थानमित्यलका । अलकाया अवमा निकृष्टा न भवतीत्यलकाऽनवमा ताम् । २ अयं चा० हे० दिनकरादीनां संमतः पा० ।

**तमपहाय ककुत्स्थकुलोद्भवं पुरुषमात्मभवं च पतिव्रता ।**
**नृपतिमन्यमसेवत देवता सकमला कमलाघवमर्थिषु ॥ १६ ॥**

पत्यौ व्रतं नियमो यस्याः सा **पतिव्रता सकमला** कमलहस्ता **देवता** लक्ष्मीः **अर्थिषु** विषये **अलाघवं** लघुत्वरहितम् । अपराङ्मुखमित्यर्थः । **ककुत्स्थकुलोद्भवं तं** दशरथम् **आत्मभवं पुरुषं** विष्णुं **च अपहाय** त्यक्त्वा **अन्यं** कं **नृपतिम् असेवत** कमपि नासेवतेत्यर्थः । विष्णाविव विष्णुतुल्ये तस्मिन्नपि श्रीः स्थिराभूदित्यर्थः ॥

**तमलभन्त पतिं पतिदेवताः शिखरिणामिव सागरमापगाः ।**
**मगधकोसलकेकयशासिनां दुहितरोऽहितरोपितमार्गणम् ॥ १७ ॥**

पतिरेव देवता यासां ताः **पतिदेवताः** पतिव्रताः । मगधाश्च कोसलाश्च केकयाश्च ताञ्जनपदाञ्छासतीति तच्छासिनः । तेषां [ **मगधकोसलकेकयशासिनां** ] **दुहितरः** पुत्र्यः । सुमित्राकौसल्याकैकेय्य इत्यर्थः । अत्र क्रमो न विवक्षितः । **अहितरोपितमार्गणं** शत्रुनिखातशरम् । 'कदम्बमार्गणशराः' इत्यमरः । **तं** दशरथं **शिखरिणां** क्ष्मभृतां दुहितरः । आ समन्तादपगच्छन्तीति [ **आपगाः** ] । अथ वा । 'अपेन संबन्धिना वेगेन गच्छन्तीत्यापगाः' इति क्षीरस्वामी । नद्यः **सागरमिव** । भर्तारम् **अलभन्त** प्रापुः ॥

**प्रियतमाभिरसौ तिसृभिर्बभौ तिसृभिरेव भुवं सह शक्तिभिः ।**
**उपगतो विनिनीषुरिव प्रजा हरिहयोऽरिहयोगविचक्षणः ॥ १८ ॥**

अरीन्घ्नन्तीत्यरिहणो रिपुघ्नाः । हन्तेः क्विप् । 'ब्रह्मभ्रूणवृत्रेषु क्विप्' इति नियमस्य प्रायिकत्वात् । यथाह न्यासकारः—'प्रायिकश्चायं नियमः । क्वचिदन्यस्मिन्नप्युपपदे दृश्यते । मधुहा । प्रायिकत्वं च वक्ष्यमाणस्य बहुलग्रहणस्य पुरस्तादपकर्षाल्लभ्यते' इति । तेषु योगेषूपायेषु विचक्षणो दक्षः [ **अरिहयोगविचक्षणः** ] । 'योगः संनहनोपायध्यानसंगतियुक्तिषु' । इत्यमरः । इन्द्रेऽपि योज्यमेतत् । **असौ** दशरथः **तिसृभिः प्रियतमाभिः सह** । **प्रजाः विनिनीषुः** विनेतुमिच्छुः **तिसृभिः शक्तिभिः** प्रभुमन्त्रोत्साहशक्तिभिः एव सह भुवमुपगतो **हरिहयः** इन्द्रः **इव बभौ** ॥

**स किल संयुगमूर्ध्नि सहायतां मघवतः प्रतिपद्य महारथः ।**
**स्वभुजवीर्यमगापयदुच्छ्रितं सुरवधूरवधूतभयाः शरैः ॥ १९ ॥**

**महारथः स** दशरथः **संयुगमूर्ध्नि** रणाङ्गणे **मघवतः** इन्द्रस्य **सहायतां प्रतिपद्य** प्राप्य **शरैः अवधूतभयाः** निवर्तितत्रासाः **सुरवधूः उच्छ्रितं स्वभुजवीर्यम् अगापयत् किल** खलु । गायतेः शब्दकर्मत्वात् 'गतिबुद्धि—' इत्यादिना सुरवधूनामपि कर्मत्वम् ॥

---

१ 'कुलाद्भवम्' इ पा० २ पृथ्वीपतेर्विष्णवंशत्वाद् व्रतभङ्गाभावः । ३ अपां समूहः आपं तेन गच्छन्तीति वा । ङः । ४ 'महायशाः' इ. पा०

**असकृदेकरथेन तरस्विना हरिहयाग्रसरेण धनुर्भृता ।**
**दिनकराभिमुखा रणरेणवो रुरुधिरे रुधिरेण सुरद्विषाम् ॥ २० ॥**

**एकरथेन** अद्वितीयरथेन **तरस्विना** बलवता हरिहयस्येन्द्रस्याग्रसरेण [ **हरिहयाग्रसरेण** ] **धनुर्भृता** दशरथेन **असकृद्** बहुशो दिनकरस्याभिमुखाः [ **दिनकराभिमुखाः** ]। अभिमुखास्थिता इत्यर्थः । **रणरेणवः सुरद्विषां** दैत्यानां **रुधिरेण रुरुधिरे** निवारिताः ॥

**क्रतुषु तेन विसर्जितमौलिना भुजसमाहृतदिग्वसुना कृताः ।**
**कनकयूपसमुच्छ्रयशोभिनो वितमसा तमसासरयूतटाः ॥ २१ ॥**

**क्रतुषु** अश्वमेधेषु **विसर्जितमौलिना** अवरोपितकिरीटेन । 'यावद्यज्ञमध्वर्युरेव राजा भवति' इति राजचिह्नत्यागविधानादित्यभिप्रायः । 'मौलिः किरीटे धम्मिल्ले' इति विश्वः । **भुजसमाहृतदिग्वसुना** भुजार्जितदिगन्तसंपदा । अनेन क्षत्रियस्य विजितत्वमुक्तम् । नियमार्जितधनत्वं सद्विनियोगकारित्वं च सूच्यते । **वितमसा** तमोगुणरहितेन **तेन** दशरथेन तमसा च सरयूश्च नद्यौ तयोस्तटाः [ **तमसासरयूतटाः** ] कनकयूपानां समुच्छ्रयेण समुन्नमनेन शोभिनः [ **कनकयूपसमुच्छ्रयशोभिनः** ] **कृताः** । कनकमयत्वं च यूपानां शोभार्थं विध्यभावात् । 'हेमयूपस्तु शोभिकः' इति यादवः ॥

**अजिनदण्डभृतं कुशमेखलां यतगिरं मृगशृङ्गपरिग्रहाम् ।**
**अधिवसंस्तनुमध्वरदीक्षितामसमभासमभासयदीश्वरः ॥ २२ ॥**

**ईश्वरः** भगवानष्टमूर्तिरजिनं कृष्णाजिनं दण्डमौदुम्बरं बिभर्तीति ताम् **अजिनदण्डभृतम्** । 'कृष्णाजिनं दीक्षयति । औदुम्बरं दीक्षितदण्डं यजमानाय प्रयच्छति' इति वचनात् । कुशमयी मेखला यस्यास्तां **कुशमेखलाम्** । शरमयी मौञ्जी वा मेखला । तया यजमानं दीक्षयतीति विधानात् । प्रकृते कुशग्रहणं क्वचित्प्रतिनिधिदर्शनात्कृतम् । **यतगिरं** वाचंयमाम् । 'वाचं यच्छति' इति श्रुतेः । मृगशृङ्गं परिग्रहः कण्डूयनसाधनं यस्यास्ताम् [ **मृगशृङ्गपरिग्रहाम्** ] । 'कृष्णाविषाणया कण्डूयते' इति श्रुतेः । **अध्वरदीक्षितां** संस्कारविशेषयुक्तां **तनुं** दाशरथीम् **अधिवसन्** अधितिष्ठन्सन् । असमा भासा दीप्तयो यस्मिन्कर्मणि तद्यथा तथा [ **असमभासम्** ] **अभासयद्** भासयति स्म ॥

**अवभृथप्रयतो नियतेन्द्रियः सुरसमाजसमाक्रमणोचितः ।**
**नमयति स्म स केवलमुन्नतं वनमुचे नमुचेररये शिरः ॥ २३ ॥**

---

१ त्यक्तकेशेन वा । दीक्षितेन मुण्डितेन भाव्यम् । इ. हे० चा० । २ 'जित' इ. पा० ३ दीक्षितं हाश्वरोनुप्रविशति इत्यागमः । ४ 'अपि–वि–जितेन्द्रियः' इ. पा० ।

अवभृथेन प्रयतः [ अवभृथप्रयतः ] नियतेन्द्रियः सुरसमाजसमाक्रमणोचितः देवसभाधिष्ठानार्हः स दशरथः उन्नतं शिरः वनमुचे जलवर्षिणे । 'जलं नीरं वनं सत्त्वम्' इति शाश्वतः । नमुचेः अरये केवलम् इन्द्रायैव नमयति स्म । न कस्मैचिदन्यस्मै मानुषायेत्यर्थः ॥

अथ समावत्रृते कुसुमैर्नवैस्तमिव सेवितुमेकनराधिपम् ।
यमकुबेरजलेश्वरवज्रिणां समधुरं मधुरञ्चितविक्रमम् ॥ २४ ॥

अथ यमकुबेरजलेश्वरवज्रिणां धर्मराजधनदवरुणामरेन्द्राणां समा धूर्भारो यस्य स समधुरः । माध्यस्थवितरणसंनियमनैश्वर्यैस्तुल्यकक्ष इत्यर्थः । 'ऋक्पूरब्धूः—' इत्यादिना समासान्तोऽच्प्रत्ययः । तं समधुरम् अञ्चितविक्रमं पूजितपराक्रमम् एकनराधिपं तं दशरथं सेवितुमिव । मधुः वसन्तः । 'अथ पुष्परसे मधुः । दैत्ये चैत्रे वसन्ते च मधुः' इति विश्वः । नवैः कुसुमैः उपलक्षितः सन् समाववृते समागतः । 'रिक्तहस्तेन नोपेयाद्राजानं देवतां गुरुम् ।' इति वचनात्पुष्पसमेतो राजानं सेवितुमागत इत्यर्थः ॥

जिगमिषुर्धनदाध्युषितां दिशं रथयुजा परिवर्तितवाहनः ।
दिनमुखानि रविर्हिमनिग्रहैर्विमलयन्मलयं नगमत्यजत् ॥ २५ ॥

धनदाध्युषितां कुबेराधिष्ठितां दिशं जिगमिषुः गन्तुमिच्छुः । रथयुजा सारथिनारुणेन [ अनूरुणा इ. पा. ] परिवर्तितवाहनः निवर्तिताश्वः रविः । हिमस्य निग्रहैर्निराकरणैः [ हिमनिग्रहैः ] दिनमुखानि प्रभातानि विमलयन् विशदयन् । मलयं नगं मलयाचलम् अत्यजत् । दक्षिणां दिशमत्याक्षीदित्यर्थः ॥

कुसुमजन्म ततो नवपल्लवास्तदनु षट्पदकोकिलकूजितम् ।
इति यथाक्रममाविरभून्मधुर्द्रुमवतीमवतीर्य वनस्थलीम् ॥ २६ ॥

आदौ कुसुमजन्म । ततः नवपल्लवाः । तदनु । 'अनुर्लक्षणे' इति कर्मप्रवचनीयत्वाद्द्वितीया । यथासंख्यं तदुभयानन्तरं षट्पदानां कोकिलानां च कूजितम् षट्पदकोकिलकूजितम् । इति एवंप्रकारेण यथाक्रमं क्रममनतिक्रम्य द्रुमवतीं द्रुमभूयिष्ठां वनस्थलीमवतीर्य मधुः वसन्तः आविरभूत् । केषांचिद्द्रुमाणां पल्लवप्राथम्यात्केषांचित्कुसुमप्राथम्यान्नोक्तक्रमस्य दृष्टविरोधः ॥

नयगुणोपचितामिव भूपतेः सदुपकारफलां श्रियमर्थिनः ।
अभियुयुः सरसो मधुसंभृतां कमलिनीमलिनीरपतत्रिणः ॥ २७ ॥

नयो नीतिरेव गुणः तेन । अथ वा नयेन गुणैः शौर्यादिभिश्चोपचितां [ नयगुणोपचिताम् ] । सतामुपकारः फलं यस्यास्तां सदुपकारफलां भूपतेः दशरथस्य श्रियम्

---

१ लोकरक्षार्थं वृष्टेरपेक्षितत्वादिन्द्रमेवानमयच्छिरः । इ. चा० । २–२४–२५ योर्मध्ये क्षेपकोऽयं दृश्यते–हिमविवर्जितचन्दनपल्लवं विरहयन्मलयाद्रिमुदङ्मुखः । विहगयोः कृपयेव शनैर्ययौ रविरहर्विरहध्रुवभेदयोः ॥ हिमेन विवर्जिताः पाण्डूकृताश्चन्दनपल्लवा यस्मिंस्तं मलयाद्रिं विरहयन्दूरीकुर्वन्नुदङ्मुखो रविः शनैर्ययौ । तत्र हेतुमाह–अहो विरहे दिनान्ते ध्रुवो निश्चितो भेदो विरहो ययोर्विहगयोश्चक्रवाकयोः कृपयेव इति हे०.

**अर्थिन इव** । मधुना वसन्तेन संभृतां सम्यक्पुष्टां **मधुसंभृतां सरसः** संबन्धिनीं **कमलिनीं** पद्मिनीम् **अलिनीरपतत्रिणः** । अलयो भृङ्गाः नीरपतत्रिणो हंसादयश्च । **अभिययुः** ॥

**कुसुममेव न केवलमार्तवं नवमशोकतरोः स्मरदीपनम् ।**
**किसलयप्रसवोऽपि विलासिनां मदयिता दयिताश्रवणार्पितः ॥ २८ ॥**

ऋतुरस्य प्राप्तः **आर्तवम्** ।' ऋतोरण्' इत्यण् । **नवं** प्रत्यग्रम् **अशोकतरोः केवलं कुसुममेव स्मरदीपनम्** उद्दीपनं **न** । किं तु **विलासिनां मदयिता** मदजनकः **दयिताश्रवणार्पितः किसलयप्रसवोऽपि** पल्लवसंतानोऽपि स्मरदीपनोऽभवत् ॥

**विरचिता मधुनोपवनश्रियामभिनवा इव पत्रविशेषकाः ।**
**मधुलिहां मधुदानविशारदाः कुरवका रवकारणतां ययुः ॥ २९ ॥**

**मधुना** वसन्तेन **विरचिता उपवनश्रियाम् अभिनवाः पत्रविशेषकाः** पत्ररचनाः **इव** स्थिता मधूनां मकरन्दानां दाने विशारदाश्चतुराः [ **मधुदानविशारदाः** ] **कुरवकाः** तरवः **मधुलिहां** मधुपानां **रवकारणतां ययुः** । भृङ्गाः कुरवकाणां मधूनि पीत्वा जगुरित्यर्थः । दानशौण्डानार्थिजनाः स्तुवन्तीति भावः ॥

**सुवदनावदनासवसंभृतस्तदनुवादिगुणः कुसुमोद्गमः ।**
**मधुकरैरकरोन्मधुलोलुपैर्बकुलमाकुलमायतपङ्क्तिभिः ॥ ३० ॥**

[ **सुवदनावदनासवसंभृतः** ] सुवदनावदनासवेन कान्तामुखमद्येन संभृतो जनितः । तत्तस्य दोहदमिति प्रसिद्धिः । तस्यासवस्यानुवादी सदृशो गुणो यस्य **तदनुवादिगुणः कुसुमोद्गमः** कर्ता **मधुलोलुपैः आयतपङ्क्तिभिः** दीर्घपङ्क्तिभिः **मधुकरैः** मधुकरैः **बकुलं** बकुलवृक्षम् **आकुलम् अकरोत्** ॥

**उपहितं शिशिरापगमश्रिया मुकुलजालमशोभत किंशुके ।**
**प्रणयिनीव नखक्षतमण्डनं प्रमदया मदयापितलज्जया ॥ ३१ ॥**

---

१ अशोकस्योद्दीपकत्वमुक्तं शिशुपालवधेऽपि--स्फुटमिवोज्ज्वलकाञ्चनकान्तिभिर्युतमशोकमशोभत चम्पकैः । विरहिणां हृदयस्य भिदाभृतः कपिशितं पिशितं मदनाग्निना ॥ २ ' मधुकृताम् ' इ. पा० । अस्मात्परमतिरिक्तं श्लोकमेकं पठन्ति हे० चा० दिनकरादयः--दशनचन्द्रिकया व्यवभासितं हसितमासवगन्धि मधोरिव । तिलकपुष्पमसेव्यत षट्पदैः शुचिरसं चिरसंचितमीप्सुभिः ॥ ३०—३१ श्लोकयोर्मध्ये इमं प्रक्षिप्तं श्लोकं पठन्ति केचित्--गमयितुं प्रभुरेष सुखेन मां न महतीं बत पान्थवधूजनः । इति दयात इवाभवदायता न रजनी रजनीशवती मधौ ॥ ३ ' अरोचत ' इ० पाठः । सर्वोऽप्ययं श्लोकोऽन्यथा पठ्यते कैश्चिद्यथा—सुरभिसंगमजं वनमालया नवपलाशमधार्यत भङ्गुरम् । रमणदत्तमिवार्धनखक्षतं-इ० ॥ अनुरूपवर्णनं कुमारसंभवे—बालेन्दुवक्राण्यविकाशभावाद्बभुः पलाशान्यतिलोहितानि । सद्यो वसन्तेन समागतानां नखक्षतानीव वनस्थलीनाम् ॥

**शिशिरापगमश्रिया** वसन्तलक्ष्म्या **किंशुके** पलाशवृक्षे । 'पलाशः किंशुकः पर्णः' इत्यमरः । **उपहितं** दत्तं **मुकुलजालं** कुड्मलसंहतिः । मदेन यापितलज्जया अपसारितत्रपया **मदयापितलज्जया प्रमदया प्रणयिनि** प्रियतमे उपहितं नखक्षतमेव मण्डनं तद् [ **नखक्षतमण्डनम्** ] इव **अशोभत** ॥

**व्रणगुरुप्रमदाधरदुःसहं जघननिर्विषयीकृतमेखलम् ।**
**न खलु तावदशेषमपोहितुं रविरलं विरलं कृतवान्हिमम् ॥ ३२ ॥**

व्रणैर्दन्तक्षतैर्गुरुभिर्दुर्धरैः प्रमदानामधरैरधरोष्ठैर्दुःसहं [ **व्रणगुरुप्रमदाधरदुःसहं** ] हिमस्य व्यथाकरत्वादसह्यम् । जघनेषु निर्विषयीकृता निरवकाशीकृता मेखला येन तत् [ **जघननिर्विषयीकृतमेखलम्** ] । शैत्यात्त्याजितमेखलमित्यर्थः । एवंभूतं **हिमं रविः तावद्** आ वसन्ताद् **अशेषं** निःशेषं यथा तथा **अपोहितुं** निरसितुं **नालं खलु** न शक्तो हि । किं तु **विरलं कृतवान्** तनूचकार ॥

**अभिनयान्परिचेतुमिवोद्यता मलयमारुतकम्पितपल्लवा ।**
**अमदयत्सहकारलता मनः सकलिका कलिकामजितामपि ॥ ३३ ॥**

अत्र चूतलताया नर्तकीसमाधिरभिधीयते । **अभिनयान्** अर्थव्यञ्जकान्व्यापारान् । 'व्यञ्जकाभिनयौ समौ' इत्यमरः । **परिचेतुम्** अभ्यसितुम् **उद्यता इव** स्थिता । कुतः । मलयमारुतेन कम्पितपल्लवा **मलयमारुतकम्पितपल्लवा** । पल्लवशब्देन हस्तौ गम्यते । **सकलिका** सकोरका । 'कलिका कोरकः पुमान्' इत्यमरः । **सहकारलता** । [ **कलिकामजितामपि** ] कलिः कलहो द्वेष उच्यते । 'कलिः स्यात्कलहे शूरे कलिरन्त्ययुगे युधि ।' इति विश्वः । कामो रागः । तज्जितामपि । जितरागद्वेषाणामपीत्यर्थः । **मनः अमदयत्** ॥

**प्रथममन्यभृताभिरुदीरिताः प्रविरला इव मुग्धवधूकथाः ।**
**सुरभिगन्धिषु शुश्रुविरे गिरः कुसुमितासु मिता वनराजिषु ॥ ३४ ॥**

सुरभिर्गन्धो यासां तासु **सुरभिगन्धिषु** । 'गन्धस्य—' इत्यादिनेकारः । कुसुमान्यासां संजातानि कुसुमितास्तासु [ **कुसुमितासु** ] **वनराजिषु** वनपङ्क्तिषु । **अन्यभृताभिः** कोकिलाभिः **प्रथमं** प्रारम्भेषु **उदीरिताः** उक्ता अत एव **मिताः** परिमिताः **गिरः** आलापाः । **प्रविरलाः** मौग्ध्यात्स्तोकोक्ताः । मुग्धवधूनां कथा वाचः [ **मुग्धवधूकथाः** ] **इव शुश्रुविरे** श्रुताः ॥

**श्रुतिसुखभ्रमरस्वनगीतयः कुसुमकोमलदन्तरुचो बभुः ।**
**उपवनान्तलताः पवनाहतैः किसलयैः सलयैरिव पाणिभिः ॥ ३५ ॥**

---

१ अस्मात्परमतिरिक्तं श्लोकं पठन्ति हे० चा० दिनकरादयः—परभृता मदनक्षतचेतसां प्रियसखी लघुवागिव योषिताम् । प्रियतमानकरोद्विरहान्तरे [ कलहान्तरे ] मृदुरवा दुरवाप [ प्र ]-समागमान् ॥ २ अन्यापि सुन्दरी हस्ताद्यभिनयेनाभिप्रायं प्रकटयन्ती यतिचित्तमुन्मादयतीति छायार्थः ।

श्रुतिसुखाः कर्णमधुरा भ्रमरस्वना एव गीतयो यासां ताः [ **श्रुतिसुखभ्रमरस्वनगीतयः** ]। कुसुमान्येव कोमला दन्तरुचो दन्तकान्तयो यासां ताः [ **कुसुमकोमलदन्तरुचः** ] । अनेन सस्मितत्वं विवक्षितम् । **उपवनान्तलताः** पवनेनाहतैः कम्पितैः [ **पवनाहतैः** ] **किसलयैः सलयैः** साभिनयैः। लयशब्देन लयानुगतोऽभिनयो लक्ष्यते । उपवनान्ते पवनाहतैरिति सक्रियत्वाभिधानात् । **पाणिभिः इव बभुः** । अनेन लतानां नर्तकीसाम्यं गम्यते ॥

**ललितविभ्रमबन्धविचक्षणं सुरभिगन्धपराजितकेसरम् ।**
**पतिषु निर्विविशुर्मधुमङ्गनाः स्मरसखं रसखण्डनवर्जितम्॥ ३६ ॥**

**अङ्गनाः ललितविभ्रमबन्धविचक्षणं** मधुरविलासघटनापटुतरम् । सुरभिणा मनोहरेण गन्धेन पराजितकेसरं निर्जितबकुलपुष्पम् [ **सुरभिगन्धपराजितकेसरम्** ] । 'अथ केसरे । बकुलः' इत्यमरः । स्मरस्य सखायं **स्मरसखम्** । स्मरोद्दीपकमित्यर्थः । **मधुं** मद्यम् । 'अर्धर्चाः पुंसि च ' इति पुंलिङ्गता । उक्तं च—' मकरन्दस्य मद्यस्य माक्षिकस्यापि वाचकः । अर्धर्चादिगणे पाठात्पुन्नपुंसकयोर्मधुः ॥' इति । **पतिषु** विषये **रसखण्डनवर्जितम्** अनुरागभङ्गरहितं यथा तथा **निर्विविशुः** । परस्परानुरागपूर्वकं पतिभिः सह पपुरित्यर्थः ॥

**शुशुभिरे स्मितचारुतराननाः स्त्रिय इव श्लथशिञ्जितमेखलाः ।**
**विकचतामरसा गृहदीर्घिका मदकलोदकलोलविहंगमाः ॥ ३७ ॥**

**विकचतामरसाः** विकसितकमलाः । मदेन कला अव्यक्तमधुरं ध्वनन्त उदके लोलविहंगमा जलप्रियपक्षिणो हंसादयो यासु ताः [ **मदकलोदकलोलविहंगमाः** ] गृहेषु दीर्घिका वाप्यः [ **गृहदीर्घिकाः** ] स्मितेन चारुतराण्याननानि यासां ताः [ **स्मितचारुतराननाः** ] श्लथाः शिञ्जिता मुखरा मेखला यासां ताः [ **श्लथशिञ्जितमेखलाः** ] शिञ्जितेति कर्तरि क्तः । **स्त्रिय इव** । **शुशुभिरे** ॥

---

१ ' लयस्तूर्यत्रयीसाम्ये संश्लेषणविलासयोः '। इ० हैमः। २ अस्मात्परामिमे श्लोकाः पद्यन्ते चा०दिभिः–अनलसान्यभृतानलसान्मनः कमलधूलि ( रेणु )भृता मरुतेरिताः । कुसुमभारनताऽध्वगयोषितामसमशोकमशोकलताकरोत् ॥ लघयति स्म न पत्यपराधजं (जां) न सहकारतरुस्तरुणा भ्रत (र्ता) म् । कुसुमितो न मितोऽलिभिरुन्मदः स्मरसमाधिकरोऽधिकरोषित(षता)म् ॥ विशदचन्द्रकरं सुखमारुतं कुसुमितद्रुममुन्मदकोकिलम् । तदुपभोगरसं हिमवर्षिणः परभृतोरभृतोपमतां ययौ ॥ ३ 'हास ' इ० मधुं–' मदम् ' इ. च पा० । ४ यद्वा ललितं भावविशेषः । तदुक्तम्–अनाचार्योपदिष्टं स्याल्ललितं रतिचेष्टितम्। प्रियं प्रति भावाविष्करणं ललितमिति केचित्। सुकुमारतयाङ्गानां विन्यासो ललितं भवेत्। इ० विश्वनाथः। विभ्रमः—चित्तवृत्त्यनवस्थानं शृङ्गाराद्विभ्रमो मतः ।' त्वरया हर्षरागादेर्दयितागमनादिषु । अस्थाने भूषणादीनां विन्यासो विभ्रमो मतः ॥' इ. विश्वनाथः। ५ '०चारुविलोचनाः ' इ० पा०. ६ उदके लोलाः चञ्चला इति वा । ' लोलश्चलसतृष्णयोः ' इत्यमरः । ७ स्मितलक्षणं नाट्यलोचने–ईषद्विकसितैर्दन्तैः कटाक्षैः सौष्ठवान्वितम् । अलक्षितद्विजद्वारमुत्तमानां स्मितं भवेत् ॥

**उपययौ तनुतां मधुखण्डिता हिमकरोदयपाण्डुमुखच्छविः ।**
**सदृशमिष्टसमागमनिर्वृतिं वनितयानितया रजनीवधूः ॥ ३८ ॥**

मधुना मधुसमयेन खण्डिता ह्रासं गमिता [ **मधुखण्डिता** ]। क्षीयन्ते खलूत्तरायणे रात्रयः । खण्डिताख्या च नायिका ध्वन्यते। हिमकरोदयेन पाण्डुः मुखस्य प्रदोषस्य वक्त्रस्य च छविर्यस्याः सा [ **हिमकरोदयपाण्डुमुखच्छविः** ] रजन्येव वधूः [ **रजनीवधूः** ]। **इष्टसमागमनिर्वृतिं** प्रियसंगमसुखम् **अनितया** अप्राप्तया । ' इण्गतौ ' इति धातोः कर्तरि क्तः । **वनितया सदृशं** तुल्यं **तनुतां** न्यूनतां कार्श्यं च **उपययौ** ॥

**अपतुषारतया विशदप्रभैः सुरतसङ्गपरिश्रमनोदिभिः ।**
**कुसुमचापमतेजयदंशुभिर्हिमकरो मकरोर्जितकेतनम् ॥ ३९ ॥**

**हिमकरः** चन्द्रः । **अपतुषारतया** अपगतनीहारतया **विशदप्रभैः** निर्मलकान्तिभिः **सुरतसङ्गपरिश्रमनोदिभिः** सुरतसङ्गखेदहारिभिः **अंशुभिः** किरणैः । **मकरोर्जितकेतनम्** । मकरेणोर्जितं केतनं ध्वजो यस्य तम् । लब्धावकाशत्वादुच्छ्रितध्वजमित्यर्थः । **कुसुमचापं** कामम् **अतेजयद्** अशातयत् । ' तिज निशाने ' इति धातोर्ण्यन्ताल्लङ् । सहकारिलाभात्कामोऽपि तीक्ष्णोऽभूदित्यर्थः ॥

**हुतहुताशनदीप्ति वनश्रियः प्रतिनिधिः कनकाभरणस्य यत् ।**
**युवतयः कुसुमं दधुराहितं तदलके दलकेसरपेशलम् ॥ ४० ॥**

**हुतहुताशनदीप्ति** आज्यादिप्रज्वलिताग्निप्रभं **यत् कुसुमम्** । कर्णिकारमित्यर्थः । **वनश्रियः** उपवनलक्ष्म्याः **कनकाभरणस्य प्रतिनिधिः** । अभूदिति शेषः । दलेषु केसरेषु च पेशलम् [ **दलकेसरपेशलम्** ] । सुकुमारपत्रकिञ्जल्कमित्यर्थः । **आहितम्** । प्रियैरिति शेषः । **तत्** कुसुमं **युवतयः अलके** कुन्तले **दधुः** ॥

**अलिभिरञ्जनबिन्दुमनोहरैः कुसुमपङ्क्तिनिपातिभिरङ्कितः ।**
**न खलु शोभयति स्म वनस्थलीं न तिलकस्तिलकः प्रमदामिव ॥४१॥**

**अञ्जनबिन्दुमनोहरैः** कज्जलकणसुन्दरैः । कुसुमपङ्क्तिषु निपतन्ति ये तैः [ **कुसुमपङ्क्तिनिपातिभिः**] **अलिभिः अङ्कितः** चिह्नितः **तिलकः** श्रीमान्नाम वृक्षः । ' तिलकः क्षुरकः श्रीमान् ' इत्यमरः । **वनस्थलीम्** । **तिलकः** विशेषकः । 'तमालपत्रतिलकचित्रकाणि विशेषकम् । द्वितीयं च तुरीयं च न स्त्रियाम्' इत्यमरः । **प्रमदामिव** । **न शोभयति स्म** इति **न खलु** । अपि त्वशोभयदेवेत्यर्थः । 'लट् स्मे ' इति स्मशब्दयोगाद्भूतार्थे लट् ॥

---

१ ' ग(श)मयितुं प्रियसंजनितां व्यथा(शुच)मसङ्या सह यामवती स्त्रिया ' । इ. पा०. २ ' राग ' इ. पा०. ३ अनुरूपवर्णनं कुमारसंभवे–'लग्नद्विरेफाञ्जनभक्तिचित्रं मुखे मधुश्रीस्तिलकं प्रकाश्य' इति ।

अमदयन्मधुगन्धसनाथया किसलयाधरसंगतया मनः ।
कुसुमसंभृतया नवमल्लिका स्मितरुचा तरुचारुविलासिनी ॥ ४२ ॥

**तरुचारुविलासिनी** तरोः पुंसः चारुविलासिनी **नवमल्लिका** सप्तलाख्या लता । 'सप्तला नवमाल्लिका' इत्यमरः । मधुनो मकरन्दस्य मद्यस्य च गन्धेन सनाथया [ **मधुगन्धसनाथया** ]। गन्धप्रधानयेत्यर्थः । किसलयमेवाधरस्तत्र संगतया [ **किसलयाधरसंगतया** ]। प्रसृतरागयेत्यर्थः । कुसुमैः संभृतया संपादितया [ **कुसुमसंभृतया** ]। कुसुमरूपयेत्यर्थः । **स्मितरुचा** हासकान्त्या **मनः** । पश्यतामिति शेषः । **अमदयत्** ॥

अरुणरागनिषेधिभिरंशुकैः श्रवणलब्धपदैश्च यवाङ्कुरैः ।
परभृताविरुतैश्च विलासिनः स्मरबलैरबलैकरसाः कृताः ॥ ४३ ॥

**विलासिनः** विलसनशीलाः पुरुषाः । 'वौकषलस–' इत्यादिना घिनुण्प्रत्ययः । अरुणस्यानूरो रागमारुण्यं निषेधन्ति तिरस्कुर्वन्तीत्यरुणरागनिषेधिनः । तैः [ **अरुणरागनिषेधिभिः** ] । कुसुम्भादिरञ्जनात्तत्सदृशैरित्यर्थः । 'तमन्वेत्यनुबध्नाति तच्छीलं तन्निषेधति । तस्येवानुकरोतीति शब्दाः सादृश्यवाचकाः ॥ ' इति दण्डी । **अंशुकैः** अम्बरैः । श्रवणेषु कर्णेषु लब्धपदैः [ **श्रवणलब्धपदैः** ] । निवेशितैरित्यर्थः । **यवाङ्कुरैः च** । **परभृताविरुतैः** कोकिलाकूजितैः **च** । इत्येतैः **स्मरबलैः** कामसैन्यैः । अबलास्वेक एव रसो रागो येषां ते **अबलैकरसाः** स्त्रीपरतन्त्राः **कृताः** ॥

उपचितावयवा शुचिभिः कणैरलिकदम्बकयोगमुपेयुषी ।
सदृशकान्तिरलक्ष्यत मञ्जरी तिलकजालकजालकमौक्तिकैः ॥ ४४ ॥

**शुचिभिः** शुभ्रैः **कणैः** रजोभिः **उपचितावयवा** पुष्टावयवा । **अलिकदम्बकयोगम् उपेयुषी** प्राप्ता । **तिलकजा** तिलकवृक्षोत्था **मञ्जरी** । अलकेषु यज्जालकमाभरणविशेषस्तस्मिन्मौक्तिकैः [ **अलकजालकमौक्तिकैः** ] **सदृशकान्तिः अलक्ष्यत** । भृङ्गसङ्गिनी शुभ्रा तिलकमञ्जरी नीलालकसक्तमुक्ताजालमिवालक्ष्यतेति वाक्यार्थः ॥

ध्वजपटं मदनस्य धनुर्भृतश्छविकरं मुखचूर्णमृतुश्रियः ।
कुसुमकेसररेणुमलिव्रजाः सपवनोपवनोत्थितमन्वयुः ॥ ४५ ॥

**अलिव्रजाः** षट्पदनिवहाः **धनुर्भृतः** धानुष्कस्य **मदनस्य** कामस्य **ध्वजपटं** पताकाभूतम् । **ऋतुश्रियः** वसन्तलक्ष्म्याः **छविकरं** शोभाकरं **मुखचूर्णं** मुखा-

१ संततया–संगतरागया इ० । नवमल्लिका ' नवमालिका ' इ., ०विलासिना–'विलासिनः ' इ. च पा० । २ कामिनीस्मितमपि मद्यगन्धसनाथं अधररागयुक्तं च भवति । ३ 'निषेविभिः' इ. पा० । ४ वसन्ते हि रक्तवस्त्रधारणं कविभिर्वर्ण्यते । तथा च कुमारसंभवे--' वासो वसाना तरुणार्करागम्' इति । ( ३. ५४ ). ५ रूपकालंकारः । उपमानेन यत्तत्त्वमुपमेयस्य रूप्यते । गुणानां रूपतां दृष्ट्वा रूपकं नाम तद्विदुः । इ. कै० ।

लंकारस्वर्णभूतं [ **सपवनोपवनोत्थितं** ] सपवनं पवनेन सहितं यदुपवनं तस्मिन्नुत्थितम् । कुसुमानां केसरेषु किञ्जल्केषु यो रेणुस्तम् [ **कुसुमकेसररेणुम्** ] । **अन्वयुः** अन्वगच्छन् । यातेर्लङ् ॥

**अनुभवन्नवदोलमृतूत्सवं पटुरपि प्रियकण्ठजिघृक्षया ।**
**अनयदासनरज्जुपरिग्रहे भुजलतां जलतामबलाजनः ॥ ४६ ॥**

नवा दोला प्रेङ्खा यस्मिंस्तं **नवदोलम् ऋतूत्सवं** वसन्तोत्सवम् **अनुभवन् अबलाजनः पटुरपि** निपुणोपि प्रियकण्ठस्य जिघृक्षया ग्रहीतुमालिङ्गितुमिच्छया [**प्रियकण्ठजिघृक्षया** ] **आसनरज्जुपरिग्रहे** पीठरज्जुग्रहणे **भुजलतां** बाहुलतां **जलतां** शैथिल्यम् । डलयोरभेदः । **अनयत्** । दोलाक्रीडासु पतनभयनाटितकेन प्रियकण्ठमाश्लिष्यदित्यर्थः ॥

**त्यजत मानमलं बत विग्रहैर्न पुनरेति गतं चतुरं वयः ।**
**परभृताभिरितीव निवेदिते स्मरमते रमते स्म वधूजनः ॥ ४७ ॥**

**बत** इत्यामन्त्रणे । 'खेदानुकम्पासंतोषविस्मयामन्त्रणे बत ।' इत्यमरः । बत अङ्गनाः । **मानं** कोपं **त्यजत** । तदुक्तम्—'स्त्रीणामीर्ष्याकृतः कोपो मानोऽन्यासङ्गिनि प्रिये ।' इति । **विग्रहैः** विरोधैः **अलम्** विग्रहो न कार्य इत्यर्थः । **गतम्** अतीतं **चतुरम्** उपभोगक्षमं **वयः** यौवनं **पुनः न एति** नागच्छति । **इति** एवंरूपे **स्मरमते** स्मराभिप्राये । 'नपुंसके भावे क्तः' । **परभृताभिः** कोकिलाभिः **निवेदिते** सति **इव वधूजनः रमते स्म** रेमे । कोकिलाकूजितोद्दीपितस्मरः स्त्रीजनः कामशासनभयादिवोच्छृङ्खलमखेलदित्यर्थः ॥

**अथ यथासुखमार्तवमुत्सवं समनुभूय विलासवतीसखः ।**
**नरपतिश्चकमे मृगयारतिं स मधुमन्मधुमन्मथसंनिभः ॥ ४८ ॥**

**अथ** अनन्तरम् । मधुं मथ्नातीति मधुमद्विष्णुः । संपदादित्वात्क्विप् । मधुर्वसन्तः । मथ्नातीति मथः । पचाद्यच् । मनसो मथो मन्मथः कामः । तेषां संनिभः सदृशः **मधुमन्मधुमन्मथसंनिभः स नरपतिः** दशरथः **विलासवतीसखः** स्त्रीसहचरः सन् । ऋतुः प्राप्तोऽस्यार्तवः । तम् **आर्तवमुत्सवं** वसन्तोत्सवं **यथासुखं समनुभूय मृगयारतिं** मृगयाविहारं **चकमे** आचकाङ्क्ष ॥

व्यसनाङ्गदोषं परिहरन्नाह—

**परिचयं चललक्ष्यनिपातने भयरुषोश्च तदिङ्गितबोधनम् ।**
**श्रमजयात्प्रगुणां च करोत्यसौ तनुमतोऽनुमतः सचिवैर्ययौ ॥ ४९ ॥**

---

१ पटुमपि इ॰ पा॰ २ 'यमकश्लेषचित्रेषु बवयोर्डलयोर्न भित्' इति वचनात् । ३ अयमेव भाव उक्तोन्यप्रकारेण कुमारे—चूताङ्कुरास्वादकषायकण्ठः पुंस्कोकिलो यन्मधुरं चुकूज । मनस्विनीमानविघातदक्षं तदेव जातं वचनं स्मरस्य ॥ इति । ४ 'करोति स्म' इ॰ पा॰ ।

**असौ** मृगया । चललक्ष्याणि मृगगवयादीनि । तेषां निपातने [ **चललक्ष्यनिपातने** ] **परिचयम्** अभ्यासं **करोति । भयरुषोः** भयक्रोधयोः **तदिङ्गितबोधनं** तेषां चललक्ष्याणामिङ्गितस्य चेष्टितस्य भयादिलिङ्गभूतस्य बोधनं ज्ञानं **च** करोति । **तनुं** शरीरं [ **श्रमजयात्** ] श्रमस्य जयान्निरासात् **प्रगुणां** प्रकृष्टलाघवादिगुणवतीं **च करोति** । **अतः** हेतोः **सचिवैः अनुमतः** अनुमोदितः सन् **ययौ** । सर्वं चैतद्युद्धोपयोगीत्यतस्तदपेक्षया मृगयाप्रवृत्तिः । न तु व्यसनितयेति भावः ॥

**मृगवनोपगमक्षमवेषभृद्विपुलकण्ठनिषक्तशरासनः ।**
**गगनमश्वखुरोद्धतरेणुभिर्नृसविता स वितानमिवाकरोत् ॥ ५० ॥**

[ **मृगवनोपगमक्षमवेषभृत्** ] मृगाणां वनं तस्योपगमः प्राप्तिः । तस्य क्षममर्हं वेषं बिभर्तीति स तथोक्तः । मृगयाविहारानुगुणवेषधारीत्यर्थः । विपुलकण्ठे निषक्तशरासनो लग्नधन्वा [ **विपुलकण्ठनिषक्तशरासनः** ] । ना सवितेव **नृसविता** पुरुषश्रेष्ठः । उपमितसमासः । **स** राजा **अश्वखुरोद्धतरेणुभिः गगनं वितानं** तुच्छमसद् **इव अकरोत्** । गगनं नालक्ष्यतेत्यर्थः । ' वितानं तुच्छमन्दयोः ' इति विश्वः । अथ वा सवितानम् इत्येकं पदम् । सवितानमुल्लोचसहितमिवाकरोत् । ' अस्त्री वितानमुल्लोचः ' इत्यमरः ॥

**ग्रथितमौलिरसौ वनमालया तरुपलाशसवर्णतनुच्छदः ।**
**तुरगवल्गनचञ्चलकुण्डलो विरुरुचे रुरुचेष्टितभूमिषु ॥ ५१ ॥**

**वनमालया** वनपुष्पस्रजा **ग्रथितमौलिः** बद्धधम्मिल्लः [ **तरुपलाशसवर्णतनुच्छदः** ] तरूणां पलाशैः पत्रैः सवर्णः समानस्तनुच्छदो वर्म यस्य स तथोक्तः । इदं च वर्मणः पलाशसावर्ण्याभिधानं मृगादीनां विश्वासार्थम् । तुरगस्य वल्गनेन गतिविशेषेण चञ्चलकुण्डलः [ **तुरगवल्गनचञ्चलकुण्डलः** ] । **असौ** दशरथो रुरुभिर्मृगविशेषैश्चेष्टिताश्चरिता या भूमयस्तासु [ **रुरुचेष्टितभूमिषु** ] **विरुरुचे** विदिद्युते ॥

**तनुलताविनिवेशितविग्रहा भ्रमरसंक्रमितेक्षणवृत्तयः ।**
**ददृशुरध्वनि तं वनदेवताः सुनयनं नयनन्दितकोसलम् ॥ ५२ ॥**

तनुषु लतासु विनिवेशितविग्रहाः संक्रमितदेहाः [ **तनुलताविनिवेशितविग्रहाः** ] । भ्रमरेषु संक्रमिता ईक्षणवृत्तयो दृग्व्यापारा यासां ताः [ **भ्रमरसंक्रमितेक्षणवृत्तयः** ] **वनदेवताः सुनयनं** सुलोचनं [ **नयनन्दितकोसलम्** ]

१ ' जितश्रमत्वं व्यायाम आममेदःकफक्षयः । चलस्थिरेषु लक्ष्येषु बाणसिद्धिरनुत्तमा । मृगयायां गुणानेतान्वदन्ति नयवित्तमाः ॥' का. नी १५-२६. अनुरूपवर्णनं शाकुन्तले–मेदच्छेदकृशोदरं लघुभवत्युत्थानयोग्यं वपुः सत्त्वानामपि लक्ष्यते विकृतिमच्चित्तं भयक्रोधयोः । उत्कर्षः स च धन्विनां यदिषवः सिध्यन्ति लक्ष्ये चले मिथ्यैव व्यसनं वदन्ति मृगयामीदृग्विनोदः कुतः ॥ इ. २ ' खुरोद्धुत–द्धृत ' इ. पा० । ३ ' पत्रपुष्पमयीमाला वनमाला प्रकीर्तिता ' इ. चा० ४ ' तरुलता ' इ. पा०

नयेन नीत्या नन्दितास्तोषिताः कोसला येन तं दशरथम् । **अध्वनि ददृशुः** । प्रसन्नपावनतया तं देवता अपि गूढवृत्त्या ददृशुरित्यर्थः ॥

**श्वगणिवागुरिकैः प्रथमास्थितं व्यपगतानलदस्यु विवेश सः ।**
**स्थिरतुरंगमभूमि निपानवन्मृगवयोगवयोपचितं वनम् ॥ ५३ ॥**

**स** दशरथः । शुनां गणः स एषामस्तीति श्वगणिनः श्वग्राहिणः तैः । वागुरा मृगबन्धनरज्जुः । ' वागुरा मृगबन्धनी ' इत्यमरः । तया चरन्तीति वागुरिका जालिकाः । ' चरति ' इति ठक्प्रत्ययः । ' द्वौ वागुरिकजालिकौ ' इत्यमरः । तैश्च [ **श्वगणिवागुरिकैः** ] प्रथममास्थितमधिष्ठितम् [ **प्रथमास्थितम्** ] । [ **व्यपगतानलदस्यु** ] व्यपगता अनला दावाग्नयो दस्यवस्तस्कराश्च यस्मात्तथोक्तम् । ' दस्युतस्करमोषकाः ' इत्यमरः । ' कारयेद्वनविशोधनमादौ मातुरन्तिकमपि प्रविविक्षुः । आप्तशस्त्र्यनुगतः प्रविशेद्वा संकटे च गहने च न तिष्ठेत् ॥ ' इति कामन्दकः । स्थिरा दृढा पङ्कादिरहिता तुरंगमयोग्या भूमिर्यस्य तत् [ **स्थिरतुरंगमभूमि** ] । **निपानवद्** आहावयुक्तम् । ' आहावस्तु निपानं स्यादुपकूपजलाशये । ' इत्यमरः । मृगैर्हरिणादिभिर्वयोभिः पक्षिभिर्गवयैर्गोसदृशैररण्यपशुविशेषैश्चोपचितं समृद्धं [ **मृगवयोगवयोपचितम्** ] **वनं विवेश** प्रविष्टवान् ॥

**अथ नभस्य इव त्रिदशायुधं कनकपिङ्गतडिद्गुणसंयुतम् ।**
**धनुरधिज्यमनाधिरुपाददे नरवरो रवरोषितकेसरी ॥ ५४ ॥**

**अथ अनाधिः** मनोव्यथारहितः **नरवरः** नरश्रेष्ठः । [ **रवरोषितकेसरी** ] रवेण धनुष्टङ्कारेण रोषिताः केसरिणः सिंहा येन स राजा । कनकमिव पिङ्गः पिशङ्गो यस्तडिदेव गुणो मौर्वी तेन संयुतं [ **कनकपिङ्गतडिद्गुणसंयुतं** ] **त्रिदशायुधम्** इन्द्रचापं **नभस्यः** भाद्रपदमासः **इव** । ' स्युर्नभस्यप्रौष्ठपदभाद्रभाद्रपदाः समाः । ' इत्यमरः । **अधिज्यम्** अधिगतमौर्वीकं **धनुः उपाददे** जग्राह ॥

**तस्य स्तनप्रणयिभिर्मुहुरेणशावै-**
**र्व्याहन्यमानहरिणीगमनं पुरस्तात् ।**
**आविर्बभूव कुशगर्भमुखं मृगाणां**
**यूथं तदग्रसरगर्वितकृष्णसारम् ॥ ५५ ॥**

**स्तनप्रणयिभिः** स्तनपायिभिः **एणशावैः** हरिणशिशुभिः । ' पृथुकः शावकः शिशुः ' इत्यमरः । **मुहुः** [ **व्याहन्यमानहरिणीगमनं** ] व्याहन्यमानं तद्वत्सलतया तद्गमनानुसारेण मुहुः प्रतिषिध्यमानं हरिणीनां गमनं गतिर्यस्य तत् । कुशा गर्भे येषां तानि

१ ' श्वगुण०–गुणि० ' इ. प्रथमास्थितं–'प्रथमाश्रितम् ' इ. पा० । २ ' संगतम् ' इ. पा० ३ अत्र समानार्थाः श्लोकांशाः शाकुन्तले–'शष्पैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा ' इ० । ' अत्यान्तिकमायान्ती शिशुना स्तनपायिना मृगी रुद्धा । तामयमनन्यदृष्टिर्भग्नग्रीवाविलोकयति ॥ इ. च ।

मुखानि यस्य तत् **कुशगर्भमुखम्** । तस्य यूथस्याग्रेसरः पुरःसरो गर्वितो दृप्तश्च कृष्णसारो[1] यस्य तत् [ **तदग्रसरगर्वितकृष्णसारम्** ] **मृगाणां यूथं** कुलम् । 'सजातीयैः कुलं यूथं तिरश्चां पुंनपुंसकम् ।' इत्यमरः । **तस्य** दशरथस्य **पुरस्तात्** अग्रे **आविर्बभूव** । वसन्ततिलकं वृत्तम् ॥

तत्प्रार्थितं जवनवाजिगतेन राज्ञा
तूणीमुखोद्धृतशरेण विशीर्णपङ्क्ति ।
श्यामीचकार वनमाकुलदृष्टिपातै-
र्वातेरितोत्पलदलप्रकरैरिवार्द्रैः ॥ ५६ ॥

जवनो जवशीलः । 'जुचंक्रम्य-' इत्यादिना युच्प्रत्ययः । 'तरस्वी त्वरितो वेगी प्रजवी जवनो जवः ।' इत्यमरः । तं वाजिनमश्वं गतेनारूढेन [ **जवनवाजिगतेन** ] । तूणीषुधिः । 'बह्वादिभ्यश्च' इति स्त्रियां ङीष् । तस्या मुखाद्विवरादुद्धृतशरेण [ **तूणीमुखोद्धृतशरेण** ] **राज्ञा प्रार्थितम्** अभियातम् । 'याच्ञायामभियाने च प्रार्थना कथ्यते बुधैः ।' इति केशवः । अत एव विशीर्णा पङ्क्तिः संघीभावो यस्य तत् [ **विशीर्णपङ्क्ति** ] । **तत्** मृगयूथं कर्तृ । **आर्द्रैः** भयादश्रुसिक्तैराकुला भयचकिता ये दृष्टिपातास्तैः [ **आकुलदृष्टिपातैः** ] **वातेरितोत्पलदलप्रकरैः** पवनकम्पितेन्दीवरदलबृन्दैः **इव** । **वनं श्यामीचकार** ॥

लक्ष्यीकृतस्य हरिणस्य हरिप्रभावः
प्रेक्ष्य स्थितां सहचरीं व्यवधाय देहम् ।
आकर्णकृष्टमपि कामितया स धन्वी
बाणं कृपामृदुमनाः प्रतिसंजहार ॥ ५७ ॥

[ **हरिप्रभावः** ] हरिरिन्द्रो विष्णुर्वा । तस्येव प्रभावः सामर्थ्यं यस्य स तथोक्तः । **धन्वी** धनुष्मान् **स** नृपः । **लक्ष्यीकृतस्य** वेद्धुमिष्टस्य **हरिणस्य** स्वप्रेयसः **देहं व्यवधाय** अनुरागादन्तर्धाय **स्थिताम्** । सह चरतीति सहचरी । पचादिषु चरेष्टित्करणान्ङीप् । यथाह वामनः—'अनुचरीति चरेष्टित्त्वात्' इति । तां **सहचरीं** हरिणीं **प्रेक्ष्य कामितया** स्वयं कामुकत्वात् **कृपामृदुमनाः** करुणार्द्रचित्तः सन् । **आकर्णकृष्टमपि** । दुष्प्रतिसंहरमपीत्यर्थः । **बाणं प्रतिसंजहार** । नैपुण्यादित्यर्थः । नैपुण्यं तु धन्वीत्यनेन गम्यते ॥

तस्यापरेष्वपि मृगेषु शरान्मुमुक्षोः
कर्णान्तमेत्य बिभिदे निबिडोऽपि मुष्टिः[2] ।
त्रासातिमात्रचटुलैः स्मरयत्सु नेत्रैः[3]
प्रौढप्रियानयनविभ्रमचेष्टितानि ॥ ५८ ॥

---

१ कृष्णेन सारः शबलः । कृष्णशारं इति पाठे कृष्णश्चासौ शारश्च । २ 'अम्भः' इ० चा० ह० दिनकरादयः पठन्ति । ३ 'स्मरतः सुनेत्रैः' इ. पा०

त्रासाद्भयादतिमात्रचटुलैरत्यन्तचञ्चलैः [ त्रासातिमात्रचटुलैः ] [ सु ] नेत्रैः प्रौढ-प्रियानयनविभ्रमचेष्टितानि प्रगल्भकान्ताविलोचनविलासव्यापारान्सादृश्यात् स्मरत्सु [ स्मरतः ] । अपरेष्वपि मृगेषु शरान्मुमुक्षोः मोक्तुमिच्छोः तस्य नृपस्य निबिडः दृढः अपि मुष्टिः कर्णान्तमेत्य प्राप्य विभिदे । स्वयमेव भिद्यते स्म । भिदेः कर्मकर्तरि लिट् । कामिनस्तस्य प्रियाविभ्रमस्मृतिजनितकृपातिरेकान्मुष्टिभेदः । न त्वनैपुण्यादिति तात्पर्यार्थः ॥

उत्तस्थुषः शिशिरपल्वलपङ्कमध्या-
न्मुस्ताप्ररोहकवलावयवानुकीर्णम् ।
जग्राह स द्रुतवराहकुलस्य मार्गं
सुव्यक्तमार्द्रपदपङ्क्तिभिरायताभिः ॥ ५९ ॥

स नृपः [ मुस्ताप्ररोहकवलावयवानुकीर्णम् ] मुस्ताप्ररोहाणां मुस्ताङ्कुराणां कवला ग्रासाः । तेषामवयवैः श्रमविवृतमुखभ्रंशिभिः शकलैरनुकीर्णं व्याप्तम् । आयताभिः दीर्घाभिः आर्द्रपदपङ्क्तिभिः सुव्यक्तम् । शिशिरपल्वलपङ्कमध्याद् उत्तस्थुषः उत्थितस्य द्रुतवराहकुलस्य पलायितवराहयूथस्य मार्गं जग्राह अनुससार ॥

[3]तं वाहनादवनतोत्तरकायमीष-
द्विध्यन्तमुद्धतसटाः प्रतिहन्तुमीषुः ।
नात्मानमस्य विविदुः सहसा वराहा
वृक्षेषु विद्धमिषुभिर्जघनाश्रयेषु ॥ ६० ॥

वराहाः । वाहनाद् अश्वाद् ईषद् अवनतोत्तरकायं किंचिदानतपूर्वकायं विध्यन्तं प्रहरन्तं तं नृपम् । उद्धतसटाः ऊर्ध्वकेसराः सन्तः । ' सटा जटाकेसरयोः ' इति केशवः । प्रतिहन्तुम् ईषुः प्रतिप्रहर्तुमैच्छन् । अस्य नृपस्य इषुभिः सहसा जघनानामाश्रयेष्ववष्टम्भेषु [ जघनाश्रयेषु ] वृक्षेषु विद्धम् आत्मानं न विविदुः । एतेन वराहाणां मनस्वित्वं नृपस्य हस्तलाघवं चोक्तम् ॥

तेनाभिघातरभसस्य विकृष्य पत्री
वन्यस्य नेत्रविवरे महिषस्य मुक्तः ।
निर्भिद्य विग्रहमशोणितलिप्तपुङ्ख-
स्तं पातयां प्रथममास पपात पश्चात् ॥ ६१ ॥

१ ' सपदि ' इ०, मुस्ता०–'गुञ्जा, गुन्द्रा०' इ० च पा० । २ क्रोडानां मुस्ताप्रियत्वं हि प्रसिद्धम् । तथा च शाकु०—'विश्रब्धं क्रियतां वराहततिभिर्मुस्ताक्षतिः पल्वले ' इ० । ३ ' ते ' इ. उद्धत०—' उद्धृत०' इ० पा०

अभिघाते रभस औत्सुक्यं यस्य तस्य [ **अभिघातरभसस्य** ]। अभिहन्तुमुद्यतस्येत्यर्थः । **वन्यस्य** वने भवस्य **महिषस्य नेत्रविवरे** नेत्रमध्ये **तेन** नृपेण **विकृष्य** आकृष्य **मुक्तः पत्री** शरः **विग्रहं** महिषदेहं **निर्भिद्य** विदार्य । [ **अशोणितलिप्तपुङ्खः** ] शोणितलिप्तो न भवतीत्यशोणितलिप्तः पुङ्खो यस्य स तथोक्तः सन् **तं** महिषं **प्रथमं पातयाम् आस** । स्वयं **पश्चात्पपात** । 'कृञ्चानुप्रयुज्यते लिटि' इत्यत्रानुशब्दस्य व्यवहितविपर्यस्तप्रयोगनिवृत्त्यर्थत्वात् 'पातयां प्रथममास' इत्यपप्रयोग इति पाणिनीयाः । यथाह वार्तिककारः—'विपर्यासनिवृत्त्यर्थं व्यवहितनिवृत्त्यर्थं च' इति ॥

**प्रायो विषाणपरिमोषलघूत्तमाङ्गा-**
**न्खङ्गांश्चकार नृपतिर्निशितैः क्षुरप्रैः ।**
**शृङ्गं स दृप्तविनयाधिकृतः परेषा-**
**मत्युच्छ्रितं न ममृषे न तु दीर्घमायुः ॥ ६२ ॥**

**नृपतिः निशितैः क्षुरप्रैः** शरविशेषैः **खङ्गान्** खङ्गाख्यान्मृगान् । 'गण्डके खङ्गखड्गिनौ' इत्यमरः । **प्रायः** बाहुल्येन विषाणपरिमोषेण शृङ्गभङ्गेन लघून्यगुरूण्युत्तमाङ्गानि शिरांसि येषां तान् [ **विषाणपरिमोषलघूत्तमाङ्गान्** ] **चकार** । न त्ववधीदित्यर्थः । कुतः । **दृप्तविनयाधिकृतः** दुष्टनिग्रहनियुक्तः **स** राजा **परेषां** प्रतिकूलानाम् **अत्युच्छ्रितम्** उन्नतं **शृङ्गं** विषाणं प्राधान्यं च । 'शृङ्गं प्राधान्यसान्वोश्च' इत्यमरः । **न ममृषे** न सेहे । **दीर्घमायुः** जीवितकालम् । 'आयुर्जीवितकालो ना' इत्यमरः । **तु न** ममृष इति न । किं तु ममृष एवेत्यर्थः ॥

**व्याघ्रानभीरभिमुखोत्पतितान्गुहाभ्यः**
**फुल्लासनाग्रविटपानिव वायुरुग्णान् ।**
**शिक्षाविशेषलघुहस्ततया निमेषा-**
**त्तूणीचकार शरपूरितवक्त्ररन्ध्रान् ॥ ६३ ॥**

**अभीः** निर्भीकः स धन्वी **गुहाभ्यः** अभिमुखमुत्पतितान् [ **अभिमुखोत्पतितान्** ]। वायुना रुग्णान्भग्नान् [ **वायुरुग्णान्** ]। फुल्ला विकसिताः । 'अनुपसर्गात्फुल्लक्षीबकृशोल्लाघाः' इति निष्ठातकारस्य लत्वनिपातः । येऽसनस्य सर्जवृक्षस्य । 'सर्जकासनबन्धूकपुष्पप्रियकजीवकाः ।' इत्यमरः । अग्रविटपास्तान् [ **फुल्लासनाग्रविटपान्** ] **इव** स्थितान् । इषुधिभूतानित्यर्थः । व्याघ्राणां चित्ररूपत्वादुपमाने फुल्लविशेषणम् । **शरैः** पूरितानि वक्त्ररन्ध्राणि येषां तान् [ **शरपूरितवक्त्ररन्ध्रान्** ] **व्याघ्रान्** । शिक्षाविशेषेणाभ्यासातिशयेन लघुहस्ततया

---

१ पातयां प्रथममासेति व्यवहितोनुप्रयोगः कवेः प्रमादः । यद्वा पातं यातीति पातयाः । छान्दसो विच् । तं पातयां पातं गच्छन्तं महिषं शरः आस प्राप्तवान् । अस गतिदीप्त्यादानेषु । इ० चा० २ 'परिमोक्ष' इ., अत्युच्छ्रितं–अभ्युच्छ्रितं इ., तु—'च' इति च पा०. ३ भग्नान् इ.पा०

क्षिप्रहस्ततया [ **शिक्षाविशेषलघुहस्ततया** ] **निमेषात् तूणीचकार** । तूणं शरैः पूरितवानित्यर्थः ॥

**निर्घातोग्रैः कुञ्जलीनाञ्जिघांसुर्ज्यानिर्घोषैः क्षोभयामास सिंहान् ।**
**नूनं तेषामभ्यसूयापरोऽभूद्वीर्योदग्रे राजशब्दे मृगेषु ॥ ६४ ॥**

कुञ्जेषु लीनान् [ **कुञ्जलीनान्** ] । ' निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे । ' इत्यमरः । **सिंहान् जिघांसुः** हन्तुमिच्छुः । निर्घातो व्योमोत्थित औत्पातिकः शब्दविशेषः । तद्वदुग्रैः रौद्रैः [ **निर्घातोग्रैः** ] **ज्यानिर्घोषैः** मौर्वीशब्दैः **क्षोभयामास** । अत्रोत्प्रेक्षते–**तेषां** सिंहानां संबन्धिभिः वीर्येणोदग्रे उन्नते [ **वीर्योदग्रे** ] **मृगेषु** विषये यो राजशब्दस्तस्मिन् [ **राजशब्दे** ] **अभ्यसूयापरः अभूत् नूनम्** । अन्यथा कथमेतानन्विष्य हन्यादित्यर्थः । ' मृगाणाम् ' इति पाठे समासे गुणभूतत्वाद्राजशब्देन संबन्धो दुर्घटः । शालिनी वृत्तम्—' शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः ' इति लक्षणात् ॥

**तान्हत्वा गजकुलबद्धतीव्रवैरान्काकुत्स्थः कुटिलनखाग्रलग्नमुक्तान् ।**
**आत्मानं रणकृतकर्मणां गजानामानृण्यं गतमिव मार्गणैरमंस्त ॥ ६५ ॥**

**काकुत्स्थः** दशरथः । गजकुलेषु बद्धं तीव्रं वैरं येषां तान् [ **गजकुलबद्धतीव्रवैरान्** ] । कुटिलेषु नखाग्रेषु लग्ना मुक्ता गजकुम्भमौक्तिकानि येषां तान् [ **कुटिलनखाग्रलग्नमुक्तान्** ] । **तान्** सिंहान् **हत्वा** । **आत्मानं** [ **रणकृतकर्मणां** ] रणेषु कृतकर्मणां कृतोपकाराणां **गजानाम् आनृण्यम्** अनृणत्वं **मार्गणैः** शरैः । ' मार्गणो याचके शरे ' इति विश्वः । **गतं** प्राप्तवन्तम् **इव अमंस्त** मेने ॥

**चमरान्परितः प्रवर्तिताश्वः क्वचिदाकर्णविकृष्टभल्लवर्षी ।**
**नृपतीनिव तान्वियोज्य सद्यः सितवालव्यजनैर्जगाम शान्तिम् ॥ ६६ ॥**

**क्वचित् चमरान्परितः** । ' अभितःपरितःसमया–' इत्यादिना द्वितीया । **प्रवर्तिताश्वः** प्रधाविताश्वः । [ **आकर्णविकृष्टभल्लवर्षी** ] आकर्णविकृष्टभल्लानिषुविशेषान्वर्षतीति तथोक्तः स नृपः **नृपतीनिव तान्** चमरान् **सितवालव्यजनैः** शुभ्रचामरैः **वियोज्य** विरहय्य **सद्यः शान्तिं जगाम** । शूराणां परकीयमैश्वर्यमेवासह्यम् । न तु जीवितमिति भावः । औपच्छन्दसिकं वृत्तम् ॥

---

१ वायुनाभिहतो वायुर्गगनाच्च पतत्यधः । प्रचण्डघोरनिर्घोषो निर्घात इति कथ्यते ॥ यदा दीप्तः खगरुतः स निर्घातोतिदोषकृत् । इ० पा० ]. २ नाभिषेको न संस्कारो सिंहस्य क्रियते मृगैः । विक्रमार्जितराज्यस्य स्वयमेव मृगेन्द्रता ॥ इ. हितोपदेशः । ३ गजेन्द्रा हि मुक्ताकरा इति वर्ण्यते । तदुक्तं रत्नपरीक्षायाम्–करीन्द्रजीमूतवराहशङ्खमत्स्याहिशुक्त्युद्भववेणुजानि । मुक्ताफलानि प्रथितानि लोके तेषां तु शुक्त्युद्भवमेव भूरि ॥ कुमारसंभवेऽप्येवं वर्णनं दृश्यते–पदं तुषारस्रुतिधौतरक्तं यस्मिन्नदृष्ट्वापि हतद्विपानाम् । विदन्ति मार्गं नखरन्ध्रमुक्तैर्मुक्ताफलैः केसरिणां किराताः ॥ ४ ' विवर्तिताश्वः ' इति, ' द्रुतमन्वयत बाजिना यूथं चमराणां शरलग्नबालधीनाम् । ' इ. च पा० ५ ' नृपतीनिव तान्निनाय शान्तिं सितवालव्यजनैर्वियोज्य सद्यः । ' इति च पा० ।

अपि तुरगसमीपादुत्पतन्तं मयूरं
न स रुचिरकलापं बाणलक्ष्यीचकार ।
सपदि गतमनस्कश्चित्रमाल्यानुकीर्णे
रतिविगलितबन्धे केशपाशे प्रियायाः ॥ ६७ ॥

**स** नृपः **तुरगसमीपाद् उत्पतन्तमपि** । सुप्रहारमपीत्यर्थः । **रुचिरकलापं** भासुरबर्हम् । मह्यामतिशयेन रौतीति मयूरो बर्ही । पृषोदरादित्वात्साधुः । तं [ **मयूरं** ] चित्रेण माल्येनानुकीर्णे [ **चित्रमाल्यानुकीर्णे** ] । रतौ विगलितबन्धे [ **रतिविगलितबन्धे** ] **प्रियायाः केशपाशे सपदि गतमनस्कः** प्रवृत्तचित्तः । ' उरःप्रभृतिभ्यः कप् ' इति कप्प्रत्ययः । **न बाणलक्ष्यीचकार** । न प्रजहारेत्यर्थः ॥

तस्य कर्कशविहारसंभवं स्वेदमाननविलग्नजालकम् ।
आचचाम सतुषारशीकरो भिन्नपल्लवपुटो वनानिलः ॥ ६८ ॥

[ **कर्कशविहारसंभवं** ] कर्कशविहारादतिव्यायामात्संभवो यस्य तम् । आनने विलग्नजालकं बद्धकदम्बकं [ **आननविलग्नजालकं** ] **तस्य** नृपस्य **स्वेदम्** । **सतुषारशीकरः** शिशिराम्बुकणसहितः । भिन्ना निर्दलिताः पल्लवानां पुटाः कोशा येन स [ **भिन्नपल्लवपुटः** ] । **वनानिलः आचचाम** । जहारेत्यर्थः । रथोद्धता वृत्तमेतत् । तल्लक्षणम्–'रान्नराविह रथोद्धता लगौ' इति ॥

इति विस्मृतान्यकरणीयमात्मनः सचिवावलम्बितधुरं धराधिपम् ।
परिवृद्धरागमनुबन्धसेवया मृगया जहार चतुरेव कामिनी ॥ ६९ ॥

**इति** पूर्वोक्तप्रकारेण **आत्मनः** विस्मृतमन्यत्करणीयं कार्यं येन तं [ **विस्मृतान्यकरणीयम्** ] । विस्मृतात्मकार्यान्तरमित्यर्थः । सचिवैरवलम्बिता धृता धूर्यस्य तं [ **सचिवावलम्बितधुरम्** ] । ' ऋक्पूरब्धूःपथामानक्षे ' इति समासान्तोऽप्रत्ययः । **अनुबन्धसेवया** संततसेवया परिवृद्धो रागो यस्य तं [ **परिवृद्धरागं** ] **धराधिपम्** । मृग्यन्ते यस्यां मृगा इति **मृगया** । ' परिचर्यापरिसर्यामृगयाटाट्यादीनामुपसंख्यानम् ' इति शप्रत्ययान्तो निपातः । **चतुरा** विदग्धा **कामिनी इव** । **जहार** आचकर्ष । ' न जातु कामः कामानामुपभोगेन शाम्यति । हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ ' इति भावः ॥ मुमङ्गली वृत्तम् ॥

स[3] ललितकुसुमप्रवालशय्यां ज्वलितमहौषधिदीपिकासनाथाम् ।
नरपतिरतिवाहयांबभूव क्वचिदसमेतपरिच्छदस्त्रियामाम् ॥ ७० ॥

**स नरपतिः** । ललितानि कुसुमानि प्रवालानि पल्लवानि शय्या यस्यां तां [ **ललितकुसुमप्रवालशय्यां** ] । ज्वलिताभिर्महौषधीभिरेव दीपिकाभिः सनाथां

१ सुकेश्याः इ. पा०. कलापस्य केशपाशसादृश्यमुक्तं विक्रमोर्वशीयेपि–रतिविगलितबन्धे केशहस्ते सुकेश्याः सति कुसुमसनाथे किं करोत्येष बर्ही । इति । २ 'सतुषारशीतलः' इ० पा । ३ ' सुललित० ' इ. पा. ।

[ ज्वलितमहौषधिदीपिकासनाथाम् ] । तत्प्रधानामित्यर्थः । त्रियामां रात्रिं क्वचिद् असमेतपरिच्छदः । परिहृतपरिजनः सन्नित्यर्थः । अतिवाहयांबभूव गमयामास । पुष्पिताग्रा वृत्तम् ॥

**उषसि स गजयूथकर्णतालैः पटुपटहध्वनिभिर्विनीतनिद्रः ।**
**अरमत मधुराणि तत्र शृण्वन्विहगविकूजितबन्दिमङ्गलानि ॥ ७१ ॥**

**उषसि** प्रातः पटूनां पटहानामिव ध्वनिर्येषां तैः [ **पटुपटहध्वनिभिः** ] गजयूथानां कर्णैरेव तालैर्वाद्यप्रभेदैः [ **गजयूथकर्णतालैः** ] **विनीतनिद्रः** विगतनिद्रः **स** नृपः **तत्र** वने **मधुराणि** [ **विहगविकूजितबन्दिमङ्गलानि** ] विहगानां विहंगानां विकूजितान्येव बन्दिनां मङ्गलानि मङ्गलगीतानि **शृण्वन् अरमत** ॥

**अथ जातु रुरोर्गृहीतवर्त्मा विपिने पार्श्वचरैरलक्ष्यमाणः ।**
**श्रमफेनमुचा तपस्विगाढां तमसां प्राप नदीं तुरंगमेण ॥ ७२ ॥**

**अथ जातु** कदाचिद् **रुरोः** मृगस्य **गृहीतवर्त्मा** स्वीकृतरुरुमार्गः **विपिने** वने **पार्श्वचरैः अलक्ष्यमाणः** । तुरगवेगादित्यर्थः । श्रमेण फेनमुचा [ **श्रमफेनमुचा** ] । सफेनं स्विद्यतेत्यर्थः । **तुरंगमेण** तपस्विभिर्गाढामवगाढां सेवितां [ **तपस्विगाढां** ] **तमसां** नाम **नदीं** सरितं **प्राप** ॥

**कुम्भपूरणभवः पटुरुच्चैरुच्चचार निनदोऽम्भसि तस्याः ।**
**तत्र स द्विरदबृंहितशङ्की शब्दपातिनमिषुं विससर्ज ॥ ७३ ॥**

**तस्याः** तमसायाः **अम्भसि** कुम्भपूरणेन भव उत्पन्नः [ **कुम्भपूरणभवः** ] । पचाद्यच् । **पटुः** मधुरः । **उच्चैः** गम्भीरः **निनदः** ध्वनिः **उच्चचार** उदियाय । **तत्र** निनदे **स** नृपः । द्विरदबृंहितं शङ्कत इति **द्विरदबृंहितशङ्की** सन् । शब्देन शब्दानुसारेण पततीति **शब्दपातिनम् इषुं विससर्ज** । स्वागता वृत्तम् ॥

**नृपतेः प्रतिषिद्धमेव तत्कृतवान्पङ्क्तिरथो विलङ्घ्य यत् ।**
**अपथे पदमर्पयन्ति हि श्रुतवन्तोऽपि रजोनिमीलिताः ॥ ७४ ॥**

**तत्** कर्म **नृपतेः** क्षत्रियस्य **प्रतिषिद्धमेव** निषिद्धमेव । **यद्** एतत्कर्म गजवधरूपं **पङ्क्तिरथः** दशरथः **विलङ्घ्य** । 'लक्ष्मीकामो युद्धादन्यत्र करिवधं न कुर्यात् ।' इति शास्त्रमुल्लङ्घ्य **कृतवान्** । ननु विदुषस्तस्य कथमीदृग्विचेष्टितमत आह—अपथ इति । **श्रुतवन्तोऽपि** विद्वांसोऽपि **रजोनिमीलिताः** रजोगुणावृताः सन्तः । न पन्था इत्यपथम् । 'पथो विभाषा' इति वा समासान्तः । 'अपथं नपुंसकम्' इति नपुंसकत्वम् । 'अपन्थास्त्वपथं तुल्यम्' इत्यमरः । तस्मिन् **अपथे** अमार्गे **पदम् अर्पयन्ति हि** निक्षिपन्ति हि । प्रवर्तन्त इत्यर्थः । वैतालीयं वृत्तम् ॥

---

१ 'च' इ., विनीतनिद्रः—'विधूत०' इ०, मधुराणि तत्र—'मधुरस्वराणि' इ. क पा० । २ 'अविमृश्य' इ. पा० । ३ उक्तमेवैतत्—तमापतन्तं नृपतेरवध्यो वन्यः करीति श्रुतवान्कुमारः । म० ५ श्लो. ५० इत्यत्र । ४ आपदेत्युभयलोकदूषणी वर्तमानमपथे हि दुर्मतिम् । इति किरा० १३. ६४.

हा तातेति क्रन्दितमाकर्ण्य विषण्ण-
स्तस्यान्विष्यन्वेतसगूढं प्रभवं सः ।
शल्यप्रोतं प्रेक्ष्य सकुम्भं मुनिपुत्रं
तापादन्तःशल्य इवासीत्क्षितिपोऽपि ॥ ७५ ॥

हेत्यादौ । तातो जनकः । 'हा विषादशुगर्तिषु' इति, 'तातस्तु जनकः पिता' इति चामरः । **हा तात इति क्रन्दितं** क्रोशनम् **आकर्ण्य विषण्णः** भग्नोत्साहः सन् । **तस्य** क्रन्दितस्य [ **वेतसगूढं** ] वेतसैर्गूढं छन्नम् । प्रभवत्यस्मादिति प्रभवः कारणम् । तं [ **प्रभवं** ] **अन्विष्यन्** । शल्येन शरेण प्रोतं स्यूतम् [ **शल्यप्रोतं** ] । 'शल्यं शङ्कौ शरे वंशे' इति विश्वः । **सकुम्भं मुनिपुत्रं प्रेक्ष्य स क्षितिपोऽपि तापाद्** दुःखाद् अन्तःशल्यं यस्य स **अन्तःशल्य इव आसीत्** । मत्तमयूरं वृत्तम् ॥

तेनावतीर्य तुरगात्प्रथितान्वयेन
पृष्टान्वयः स जलकुम्भनिषण्णदेहः ।
तस्मै द्विजेतरतपस्विसुतं स्खलद्भि-
रात्मानमक्षरपदैः कथयांबभूव ॥ ७६ ॥

**प्रथितान्वयेन** प्रख्यातवंशेन । एतेन पापभीरुत्वं सूचितम् । **तेन** राज्ञा **तुरगाद् अवतीर्य पृष्टान्वयः** ब्रह्महत्याशङ्कया पृष्टकुलः । **जलकुम्भनिषण्णदेहः स** मुनिपुत्रः **तस्मै** राज्ञे **स्खलद्भिः** अशक्तिवशादर्धोच्चारितैरित्यर्थः । अक्षरप्रायैः पदैः **अक्षरपदैः आत्मानं** द्विजेतरश्चासौ तपस्विसुतश्च तं **द्विजेतरतपस्विसुतं कथयांबभूव** । न तावत्त्रैवर्णिक एवाहमास्मि किं तु करणः । 'वैश्यात्तु करणः शूद्रायाम्' इति याज्ञवल्क्यः । कुतो ब्रह्महत्येत्यर्थः । तथा च रामायणे—'ब्रह्महत्याकृतं पापं हृदयादपनीयताम् । न द्विजातिरहं राजन्मा भूत्ते मनसो व्यथा । शूद्रायामास्मि वैश्येन जातो जनपदाधिप ॥' इति ॥

तच्चोदितश्च तमनुद्धृतशल्यमेव
पित्रोः सकाशमवसन्नदृशोर्निनाय ।
ताभ्यां तथागतमुपेत्य तमेकपुत्र-
मज्ञानतः स्वचरितं नृपतिः शशंस ॥ ७७ ॥

**तच्चोदितः** तेन पुत्रेण चोदितः पितृसमीपं प्रापयेत्युक्तः स **नृपतिः अनुद्धृतशल्यम्** अनुत्पाटितशरम् **एव तं** मुनिपुत्रम् । **अवसन्नदृशोः** नष्टचक्षुषोः । अन्धयोरित्यर्थः । **पित्रोः** मातापित्रोः । 'पिता मात्रा' इत्येकशेषः । **सकाशं** समीपं

---

१ 'वेतसगूढप्रभवं' इति, प्रेक्ष्य—'वीक्ष्य' इ. पा० । २ 'नोदितः' इ०, च—'सः' इ० च पा० ।

**निनाय [च]**। इदं च रामायणविरुद्धम्। तत्र–'अथाहमेकस्तं देशं नीत्वा तौ भृशदुःखितौ। अस्पर्शयमहं पुत्रं तं मुनिं सह भार्यया ॥' इति नदीतीरे एव मृतं पुत्रं प्रति पित्रोरानयनाभिधानात्। **तथागतं** वेतसगूढम्। एकश्चासौ पुत्रश्चैकपुत्रस्तम् [ **एकपुत्रम्** ]। एकग्रहणं पित्रोरनन्यगतिकत्वसूचनार्थम्। **तं** मुनिपुत्रम् **उपेत्य** संनिकृष्टं गत्वा **अज्ञानतः** करिभ्रान्त्या **स्वचरितं** स्वकृतं **ताभ्यां** मातापितृभ्याम्। क्रियाग्रहणाच्चतुर्थी। **शशंस** कथितवान् ॥

तौ दम्पती बहु विलप्य शिशोः प्रहर्त्रा
शल्यं निखातमुदहारयतामुरस्तः।
सोऽभूत्परासुरथ भूमिपतिं शशाप
हस्तार्पितैर्नयनवारिभिरेव वृद्धः ॥ ७८ ॥

**तौ** जाया च पतिश्च **दम्पती**। राजदन्तादिषु जायाशब्दस्य दम्भावो जम्भावश्च विकल्पेन निपातितः। 'दम्पती जम्पती जायापती भार्यापती च तौ।' इत्यमरः। **बहु विलप्य** भूरि परिदेव्य। 'विलापः परिदेवनम्' इत्यमरः। **शिशोः उरस्तः** वक्षसः। 'पञ्चम्यास्तसिल्'। **निखातं शल्यं** शरं **प्रहर्त्रा** राज्ञा **उदहारयताम्** उद्धारयामासतुः। **स** शिशुः **परासुः** गतप्राणः **अभूत्**। **अथ वृद्धः हस्तार्पितैः नयनवारिभिः एव** शापदानस्य जलपूर्वकत्वात्तैरेव **भूमिपतिं शशाप** ॥

दिष्टान्तमाप्स्यति भवानपि पुत्रशोका-
दन्त्ये वयस्यहमिवेति तमुक्तवन्तम्।
आक्रान्तपूर्वमिव मुक्तविषं भुजङ्गं
प्रोवाच कोसलपतिः प्रथमापराद्धः ॥ ७९ ॥

हे राजन् **भवानपि अन्त्ये वयसि अहमिव पुत्रशोकाद् दिष्टान्तं** कालावसानम्। मरणमित्यर्थः। 'दिष्टः काले च दैवे स्याद्दिष्टम्' इति विश्वः। **आप्स्यति** प्राप्स्यति। **इत्युक्तवन्तम्**। आक्रान्तः पादाहतः पूर्वमाक्रान्तपूर्वः। सुप्सुपेति समासः। तम् [ **आक्रान्तपूर्वम्** ]। प्रथममपकृतमित्यर्थः। **मुक्तविषम्** अपकारिणि पश्चादुत्सृष्टविषं **भुजङ्गमिव** स्थितं तं वृद्धं प्रति **प्रथमापराद्धः** प्रथमापराधी। कर्तरि क्तः। इदं च सहने कारणमुक्तम्। **कोसलपतिः** दशरथः शापदानात्पश्चादप्येनं मुनिं **प्रोवाच** ॥

शापोऽप्यदृष्टतनयाननपद्मशोभे
सानुग्रहो भगवता मयि पातितोऽयम्।
कृष्यां दहन्नपि खलु क्षितिमिन्धनेद्धो
बीजप्ररोहजननीं ज्वलनः करोति ॥ ८० ॥

अदृष्टा तनयाननपद्मशोभा येन तस्मिन् [ **अदृष्टतनयाननपद्मशोभे** ] अपुत्रके **मयि भगवता पातितः**। वज्रप्रायत्वात्पातित इत्युक्तम्। **अयं** पुत्रशोका-

१ उद्धिर्येति चा०। ज्ञापयित्वा (?) इ० व०। २ 'अन्ते' इ०, प्रथमापराद्धः–'प्रथमापराधः' इ० पा०। ३ 'हि भवता' इ०, कृष्यां—'कक्षाम्' इ०, ज्वलनः–'दहनः' इ० पा०।

न्त्रियस्वेत्येवंरूपः **शापोऽपि सानुग्रहः** । वृद्धकुमारीवरन्यायेनेष्टावाप्तेरन्तरीयकत्वात्सोपकार एव । निग्राहकस्याप्यनुग्राहकत्वमर्थान्तरन्यासेनाह—कृष्यामिति । इन्धनैः काष्ठैरिद्धः प्रज्वलितः [ **इन्धनेद्धः** ] **ज्वलनः** अग्निः **कृष्यां** कर्षणार्हाम् । 'ऋदुपधाच्चाक्लृपिचृतेः' इति क्यप् । **क्षितिं दहन्नपि** [ **बीजप्ररोहजननीम्** ] बीजप्ररोहाणां बीजाङ्कुराणां जननीमुत्पादनक्षमां **करोति खलु** ॥

इत्थंगते गतघृणः किमयं विधत्तां
वध्यस्तवेत्यभिहितो वसुधाधिपेन ।
एधान्हुताशनवतः स मुनिर्ययाचे
पुत्रं परासुमनुगन्तुमनाः सदारः ॥ ८१ ॥

**इत्थंगते** प्रवृत्ते सति । **वसुधाधिपेन** राज्ञा **गतघृणः** निष्करुणः । हन्तृत्वान्निष्कृप इत्यर्थः । अत एव **तव वध्यः** वधार्हः **अयं** जनः । अयमिति राज्ञो निर्वेदादनादरेण स्वात्मनिर्देशः । **किं विधत्तामित्यभिहितः** उक्तः । मया किं विधेयमिति विज्ञापित इत्यर्थः । **स मुनिः सदारः** सभार्यः **परासुं** गतासुं **पुत्रम्** अनुगन्तुं मनो यस्य सः **अनुगन्तुमनाः** सन् । 'तुं काममनसोरपि' इति मकारलोपः । **हुताशनवतः** साग्नीन् **एधान्** काष्ठानि **ययाचे** । न चात्रात्मघातदोषः । 'अनुष्ठानासमर्थस्य वानप्रस्थस्य जीर्यतः । भृग्वग्निजलसंपातैर्मरणं प्रविधीयते ॥' इत्युक्तेः ॥

प्राप्तानुगः सपदि शासनमस्य राजा
संपाद्य पातकविलुप्तधृतिर्निवृत्तः ।
अन्तर्निविष्टपदमात्मविनाशहेतुं
शापं दधज्ज्वलनमौर्वमिवाम्बुराशिः ॥ ८२ ॥

**प्राप्तानुगः** प्राप्तानुचरः **राजा सपद्यस्य** मुनेः **शासनं** काष्ठसंभरणरूपं प्रागेकोऽपि संप्रति प्राप्तानुचरत्वात् **संपाद्य** पातकेन मुनिवधरूपेण विलुप्तधृतिर्नष्टोत्साहः [ **पातकविलुप्तधृतिः** ] सन् । **अन्तर्निविष्टपदम्** अन्तर्लब्धस्थानम् **आत्मविनाशहेतुं शापम्** । **अम्बुराशिः और्वं ज्वलनं** वडवानलम् **इव** । 'और्वस्तु वाडवो वडवानलः' इत्यमरः । **दधत्** धृतवान्सन् । **निवृत्तः** । वनादिति शेषः ॥

इति महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया संजीवनीसमाख्यया व्याख्यया समेतो महाकविश्रीकालिदासकृतौ रघुवंशे महाकाव्ये मृगयावर्णनः नाम नवमः सर्गः ।

---

१ 'अभिहिते' इ. पा० । तदर्थमर्थज्ञगते गतत्रपः किमेष ते वध्यजनोऽनुतिष्ठतु । स वह्निसंस्कारमयाचतात्मनः सदारसूनोर्विदधे च तन्नृपः ॥ इति क्वचित्पाठः । २ समेयिवान्रघुवृषभः स्वसैनिकैः स्वमन्दिरं शिथिलधृतिर्निवर्तितः । मनोगतं गुरुमृषिशापमुद्वहन् क्षयानलं जलधिरिवान्तकास्पदम् ॥ इति पा० । ३ उर्वेण किल अयोनिजपुत्रार्थिना ऊरुर्मथितस्तत्र ज्वालामयः पुरुषो जातः । तस्य समुद्र आधार आसीत् । इति श्रुतिः ।

## दशमः सर्गः ।

आशंसे नित्यमानन्दं रामनामकथामृतम् ।
सद्भिः स्वश्रवणैर्नित्यं पेयं पापं प्रणोदितुम् ॥

**पृथिवीं शासतस्तस्य पाकशासनतेजसः ।**
**किंचिदूनमनूनर्द्धेः शरदामयुतं ययौ ॥ १ ॥**

**पृथिवीं शासतः** पालयतः **पाकशासनतेजसः** इन्द्रवर्चसः । **अनूनर्द्धेः** महासमृद्धेः **तस्य** दशरथस्य **किंचिदूनम्** ईषन्न्यूनं **शरदां** वत्सराणाम् । ' स्याद्वतौ वत्सरे शरत् ' इत्यमरः । **अयुतं** दशसहस्रं **ययौ** । 'एकदशशतसहस्राण्ययुतं लक्षं ( नियुतं इ. पा. ) तथा प्रयुतम् । कोट्यर्बुदं च पद्मं स्थानात्स्थानं दशगुणं स्यात् ॥ ' इत्यार्यभटः । इदं च मुनिशापात्परं वेदितव्यं न तु जननात् । ' षष्टिर्वर्षसहस्राणि जातस्य मम कौशिक । दुःखेनोत्पादितश्चायं न रामं नेतुमर्हसि ॥ ' इति रामायणविरोधात् । नाप्यभिषेकात्परं तस्यापि ' सम्यग्विनीतमथ वर्महरं कुमारमादिश्य रक्षणविधौ विधिवत्प्रजानाम् ' ( ८।:९४ ) इति कौमारानुष्ठितत्वाभिधानात्स एव विरोध इति ॥

**न चोपलेभे पूर्वेषामृणनिर्मोक्षसाधनम् ।**
**सुताभिधानं स ज्योतिः सद्यः शोकतमोपहम् ॥ २ ॥**

**स** दशरथः **पूर्वेषां** पितृणाम् **ऋणनिर्मोक्षसाधनम्** । ' एष वा अनृणो यः पुत्री ' इति श्रुतेः । पितृणामृणविमुक्तिकारणम् । **सद्यः** शोक एव तमस्तदपहन्तीति **शोकतमोपहम्** । अत्राभयंकर इतिवदुपपदेऽपि तदन्तविधिमाश्रित्य ' अपे क्लेशतमसोः ' इति डप्रत्ययः । **सुताभिधानं** सुताख्यं **ज्योतिर्नोपलेभे** न प्राप **च** ॥

**अतिष्ठत्प्रत्ययापेक्षसंततिः स चिरं नृपः ।**
**प्राङ्मन्थादनभिव्यक्तरत्नोत्पत्तिरिवार्णवः ॥ ३ ॥**

[ **प्रत्ययापेक्षसंततिः** ] । प्रत्ययं हेतुमपेक्षत इति प्रत्ययापेक्षा संततिर्यस्य स तथोक्तः । ' प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु । ' इत्यमरः । **स नृपः** । **मन्थात् प्राक्** मन्थनात्पूर्वम् अनभिव्यक्ताऽदृष्टा रत्नोत्पत्तिर्यस्य सः [ **अनभिव्यक्तरत्नोत्पत्तिः** ] **अर्णव इव** । **चिरमतिष्ठत्** । सामग्र्यभावाद्विलम्बो न तु वन्ध्यत्वादिति भावः ॥

---

१ नित्यानन्दपदाभ्यां रामस्य ब्रह्मरूपत्वमुक्तम् । तथा च श्रुतिः–'सत्यं ज्ञानमनन्तं ब्रह्म । सच्चिदानन्दं ब्रह्म ' इति । २ अमृतशब्दोऽत्र श्लिष्टः । अमृतं पीयूषममृतो मोक्षश्च । तेन च रामकथाया मोक्षदानसामर्थ्यं ध्वनितम् । ३ पाको नाम दैत्यविशेषस्तस्य शासनो हन्ता इन्द्रः । वस्तुतस्तु पाकानज्ञान् शास्ति उपदिशति ज्ञानसंपन्नान्करोतीति तथा । ४. २–३ योर्मध्ये क्षेपकोयं दृश्यते–मनोर्वंशाश्चिरं तस्मिन्ननभिव्यक्तसंततिः । निमज्ज्य पुनरुत्थास्यन्नदः शोण इवाभवत् ॥

ऋष्यशृङ्गादयस्तस्य सन्तः संतानकाङ्क्षिणः ।
आरेभिरे जितात्मानः पुत्रीयामिष्टिमृत्विजः ॥ ४ ॥

**ऋष्यशृङ्गादयः** । ऋष्यशृङ्गो नाम कश्चिदृषिः । तदादयः । ऋतुमृतौ वा यजन्तीति **ऋत्विजः** याज्ञिकाः । 'ऋत्विग्दधृक्–' इत्यादिना क्विबन्तो निपातः । **जितात्मानः** जितान्तःकरणाः **सन्तः संतानकाङ्क्षिणः** पुत्रार्थिनः **तस्य** दशरथस्य **पुत्रीयां** पुत्रनिमित्ताम् । 'पुत्राच्छ च' इति छप्रत्ययः । **इष्टिं** यागम् **आरेभिरे** प्रचक्रमिरे ॥

तस्मिन्नवसरे देवाः पौलस्त्योपप्लुता हरिम् ।
अभिजग्मुर्निदाघार्ताश्छायावृक्षमिवाध्वगाः ॥ ५ ॥

**तस्मिन्नवसरे** पुत्रकामेष्टिप्रवृत्तिसमये **देवाः** । पुलस्त्यस्य गोत्रापत्यं पुमान्पौलस्त्यो रावणः । तेनोपप्लुताः पीडिताः [ **पौलस्त्योपप्लुताः** ] सन्तः । **निदाघार्ताः** घर्मातुराः । अध्वानं गच्छन्तीति **अध्वगाः** पान्थाः । 'अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः' इति डप्रत्ययः । छायाप्रधानं वृक्षं **छायावृक्षमिव** । शाकपार्थिवादित्वात्समासः । **हरिं** विष्णुं **अभिजग्मुः** ॥

ते च प्रापुरुदन्वन्तं बुबुधे चादिपूरुषः ।
अव्याक्षेपो भविष्यन्त्याः कार्यसिद्धेर्हि लक्षणम् ॥ ६ ॥

**ते** देवाः **च उदन्वन्तं** समुद्रम् । 'उदन्वानुदधौ च' इति निपातः । **प्रापुः** । **आदिपूरुषः** विष्णुः **च बुबुधे** । योगनिद्रां जहावित्यर्थः । गमनप्रतिबोधयोरविलम्बार्थौ चकारौ । तथा हि । **अव्याक्षेपः** गम्यस्याव्यासङ्गः । अविलम्ब इति यावत् **भविष्यन्त्याः कार्यसिद्धेर्लक्षणं** लिङ्गं **हि** । उक्तं च–'अनन्यपरता चास्य कार्यसिद्धेस्तु लक्षणम् ।' इति ॥

भोगिभोगासनासीनं ददृशुस्तं दिवौकसः ।
तत्फणामण्डलोदर्चिर्मणिद्योतितविग्रहम् ॥ ७ ॥

द्यौरोको येषां ते **दिवौकसः** देवाः । पृषोदरादित्वात्साधुः । यद्वा दिवशब्दोऽदन्तोऽप्यस्ति । तथा च बुद्धचरिते–'न शोभते तेन हि नो विना पुरं मरुत्वता वृत्रवधे यथा दिवम् ।' इति । तत्र 'दिवु क्रीडादौ' इति धातोः 'इगुपध–' इति कः । दिवमोक एषामिति विग्रहः । भोगिनः शेषस्य भोगः शरीरम् । 'भोगः सुखे स्त्र्यादि-

---

१ ऋष्यस्य शृङ्गमिव शृङ्गं यस्य । २ इष्टिं तेऽहं करिष्यामि पुत्रीयां पुत्रकारणात् । अथर्वशिरसि प्रोक्तैर्मन्त्रैः सिद्धां विधानतः ॥ इत्या० रामा० बा० १५ अ० । उक्तं च तैत्तिरीयसंहितायाम्–अग्नये पुत्रवते पुरोडाशमष्टाकपालं निर्वपेदिन्द्राय पुत्रिणे पुरोडाशमेकादशकपालं प्रजाकामोऽग्निरेवास्मै प्रजां जनयति वृद्धामिन्द्रः प्रयच्छति । का० २ प्र० २ अनु० ४. भट्टोक्तमिष्टिलक्षणम्–इष्टिस्तु चरुणा प्रोक्ता यागस्तु पशुना स्मृतः । एतच्छेषः क्रतुः प्रोक्तो होमोऽन्यत्तूजनं स्मृतम् ॥

भूतावहेश्च फणकाययोः' इत्यमरः । स एवासनं सिंहासनम् । तत्रासीनमुपविष्टम् [ भोगिभोगासनासीनं ]। आसेः शानच् । 'ईदासः' इतीकारादेशः । तस्य भोगिनः फणामण्डले ये उदर्चिष उद्गमयः मणयस्तैर्द्योतितविग्रहं [ तत्फणामण्डलोदर्चिर्मणिद्योतितविग्रहं ] तं विष्णुं ददृशुः ॥

श्रियः पद्मनिषण्णायाः क्षौमान्तरितमेखले ।
अङ्के निक्षिप्तचरणमास्तीर्णकरपल्लवे ॥ ८ ॥

कीदृशं विष्णुम् । पद्मे निषण्णाया उपविष्टायाः [ पद्मनिषण्णायाः ] श्रियः क्षौमान्तरिता दुकूलव्यवहिता मेखला यस्य तस्मिन् [ क्षौमान्तरितमेखले ]। आस्तीर्णौ करपल्लवौ पाणिपल्लवौ यस्मिन् [ आस्तीर्णकरपल्लवे ]। [ निक्षिप्तचरणम् ] विशेषणद्वयेनापि चरणयोः सौकुमार्यात्कटिमेखलास्पर्शासहत्वं सूच्यते । तस्मिन् अङ्के निक्षिप्तौ चरणौ येन तम् ॥

प्रबुद्धपुण्डरीकाक्षं बालातपनिभांशुकम् ।
दिवसं शारदमिव प्रारम्भसुखदर्शनम् ॥ ९ ॥

पुनः कीदृशम् । प्रबुद्धे विकसिते पुण्डरीके इवाक्षिणी यस्य तं [ प्रबुद्धपुण्डरीकाक्षम् ]। दिवसे तु पुण्डरीकमेवाक्षि यस्येति विग्रहः । बालातपेन निभं सदृशमंशुकं यस्य तं [ बालातपनिभांशुकम् ]। पीताम्बरधरमित्यर्थः । अन्यत्र बालातपव्याजांशुकमित्यर्थः । 'निभो व्याजसदृक्षयोः' इति विश्वः । प्रकृष्ट आरम्भो योगो येषां ते प्रारम्भा योगिनः । तेषां सुखदर्शनं [ प्रारम्भसुखदर्शनम् ]। अन्यत्र प्रारम्भे आदौ सुखदर्शनम् । शारदं शरत्संबन्धिनं दिवसमिव स्थितम् ॥

प्रभानुलिप्तश्रीवत्सं लक्ष्मीविभ्रमदर्पणम् ।
कौस्तुभाख्यमपां सारं बिभ्राणं बृहतोरसा ॥ १० ॥

पुनः किंविधम् । प्रभयानुलिप्तमनुरञ्जितं श्रीवत्सं नाम लाञ्छनं येन तं [ प्रभानुलिप्तश्रीवत्सम् ] लक्ष्म्या विभ्रमदर्पणं [ लक्ष्मीविभ्रमदर्पणं ] कौस्तुभ इत्याख्या यस्य तं [ कौस्तुभाख्यम् ]। अपां समुद्राणां सारं स्थिरांशम् । अम्मयमणिमित्यर्थः । बृहता उरसा बिभ्राणम् ॥

बाहुभिर्विटपाकारैर्दिव्याभरणभूषितैः ।
आविर्भूतमपां मध्ये पारिजातमिवापरम् ॥ ११ ॥

१ मेखलायाः कठिनस्पर्शेन चरणक्लेशो मा भूदिति हेतोरित्य० । २ 'प्रफुल्ल' इ० पा० ३ 'बिभ्रतम्' इ. पा० ४ श्रीयुक्तो वत्सः श्रीवत्सः । श्रीवत्सो नाम भगवतो वक्षःस्थलस्थमहत्त्वलक्षणं श्वेतरोमावर्तविशेषः । भृगुपदाघातचिह्नमिति भागवते । कौस्तुभज्योतिरेव श्रीवत्स इत्यापि तत्रैवोक्तम् । यथा—कौस्तुभव्यपदेशेन स्वात्मज्योतिर्बिभर्त्यजः । तत्प्रभां व्यापिनीं साक्षात्श्रीवत्समुरसा विभुः ॥ इ० । ५ कुं भूमिं स्याभोतीति कुस्तुभः समुद्रस्तस्माज्जातम् । ६ 'अपां मध्यात्'; 'पयोमध्यात्' इ० पा०

**विटपाकारैः** शाखाकारैः **दिव्याभरणभूषितैः बाहुभिः** उपलक्षितम् । अत एव **अपां** सैन्धवीनां **मध्ये आविर्भूतमपरं** द्वितीयं **पारिजातमिव** स्थितम् ॥

**दैत्यस्त्रीगण्डलेखानां मदरागविलोपिभिः ।**
**हेतिभिश्चेतनावद्भिरुदीरितजयस्वनम् ॥ १२ ॥**

**दैत्यस्त्रीगण्डलेखानाम्** असुराङ्गनागण्डस्थलीनां यो मदरागस्तं विलुम्पन्ति हरन्तीति मदरागविलोपिनः तैः [ **मदरागविलोपिभिः** ]। **चेतनावद्भिः** सजीवैः **हेतिभिः** सुदर्शनादिभिः शस्त्रैः । 'रवेरार्चिश्च शस्त्रं च वह्निज्वाला च हेतयः।' इत्यमरः । **उदीरितजयस्वनम्** । जयशब्दमुद्घोषयन्तीभिर्मूर्तिमतीभिरस्त्रदेवताभिरुपास्यमानमित्यर्थः ॥

**मुक्तशेषविरोधेन कुलिशव्रणलक्ष्मणा ।**
**उपस्थितं प्राञ्जलिना विनीतेन गरुत्मता ॥ १३ ॥**

मुक्तो भगवत्संनिधानात्त्यक्तः शेषेणाहीश्वरेण सह विरोधः सहजमपि वैरं येन तेन [ **मुक्तशेषविरोधेन** ] । कुलिशव्रणा अमृताहरणकाल इन्द्रयुद्धे ये वज्रप्रहारास्त एव लक्ष्माणि यस्य स तेन [ **कुलिशव्रणलक्ष्मणा** ] । प्रबद्धोऽञ्जलिर्येन तेन **प्राञ्जलिना** । प्रबद्धाञ्जलिनेत्यर्थः । **विनीतेन** अनुद्धतेन **गरुत्मतोपस्थितम्** उपासितम् । पुरा किल मातलिप्रार्थितेन भगवता तद्दुहितुर्गुणकेश्याः पत्युः कस्यचित्सर्पस्य गरुडादभयदाने कृते स्वविपक्षरक्षणक्षुभितं पक्षिराजं त्वद्वोढाहं त्वत्तो बलाढ्य इति गर्वितं स्ववामतर्जनीभारेणैव भङ्क्त्वा भगवान्विनिनायेति महाभारतीयां कथां सूचयति विनीतेनेत्यनेन ॥

**योगनिद्रान्तविशदैः पावनैरवलोकनैः ।**
**भृग्वादीननुगृह्णन्तं सौखशायनिकानृषीन् ॥ १४ ॥**

योगो मनसो विषयान्तरव्यावृत्तिः । तद्रूपा या निद्रा तस्या अन्तेऽवसाने विशदैः प्रसन्नैः [ **योगनिद्रान्तविशदैः** ] **पावनैः** शोधनैः **अवलोकनैः** । सुखशयनं पृच्छन्तीति सौखशायनिकास्तान् [ **सौखशायनिकान्** ] । 'पृच्छतौ सुस्नातादिभ्यः' इत्युपसंख्यानाट्ठक्प्रत्ययः । **भृग्वादीनृषीननुगृह्णन्तम्** ॥

**प्रणिपत्य सुरास्तस्मै शमयित्रे सुरद्विषाम् ।**
**अथैनं तुष्टुवुः स्तुत्यमवाङ्मनसगोचरम् ॥ १५ ॥**

---

१ पारिणः सागराज्जातः पारिजातः । २ 'मूर्तिमद्भिः प्रहरणैः' इ. पा० । ३ 'त्यक्तशेषाहिवैरेण' इ. वल्लभसंमतः पाठः । 'गरुडोरगयोः शाश्वतिको विरोधः । प्रभुसंनिधौ विरोधिनोऽपि विनीता न वैरायन्ते' इति तद्व्याख्या । ४ स्वात्मनिष्ठेति यावत् । उक्तं च कुमारे- 'स्वात्मना कृतिना च त्वमात्मन्येव प्रलीयसे ।' इ. । ५ एवं हरिवंशेऽपि वर्णनम्–तं शयानं महात्मानं भवाय जगतः प्रभुम् । उपासांचक्रिरे विष्णुं देवाः सर्षिगणास्तथा ॥ + + विष्णुं निद्रामयं योगं प्रविष्टं तमसा वृतम् । ते तु ब्रह्मर्षयः सर्वे पितामहपुरोगमाः । विदुस्तं न क्वचित्सुप्तं क्वचिदासीनमासनं ॥ इ० ।

अथ दर्शनानन्तरं **सुराः सुरद्विषाम्** असुराणां **शमयित्रे** विनाशकाय **तस्मै** विष्णवे **प्रणिपत्य स्तुत्यं** स्तोत्रार्हम् । ' एतिस्तुशास्वृदृजुषः क्यप् ' इति क्यप्प्रत्ययः । वाक्च मनश्च वाङ्मनसे । 'अचतुर–' इत्यच्प्रत्ययान्तो निपातः । तयोर्गोचरो विषयो न भवतीत्यवाङ्मनसगोचरः । तम् [ **अवाङ्मनसगोचरम्** ] **एनं** विष्णुं **तुष्टुवुः** अस्तुवन् ॥

**नमो विश्वसृजे पूर्वं विश्वं तदनु बिभ्रते ।**
**अथ विश्वस्य संहर्त्रे तुभ्यं त्रेधास्थितात्मने ॥ १६ ॥**

**पूर्वम्** आदौ **विश्वसृजे** विश्वस्रष्ट्रे **तदनु** सर्गानन्तरं **विश्वं बिभ्रते** पुष्णते । **अथ विश्वस्य संहर्त्रे** । एवं त्रेधा सृष्टिस्थितिसंहारकर्तृत्वेन स्थित आत्मा स्वरूपं यस्य तस्मै [ **त्रेधास्थितात्मने** ] ब्रह्मविष्णुहरात्मने **तुभ्यं नमः** ॥

ननु कूटस्थस्य कथं त्रैरूप्यमित्याशङ्क्यौपाधिकमित्याह—

**रसान्तराण्येकरसं यथा दिव्यं पयोऽश्नुते ।**
**देशे देशे गुणेष्वेवमवस्थास्त्वमविक्रियः ॥ १७ ॥**

**एकरसं** मधुरैकरसं दिवि भवं **दिव्यं पयः** वर्षोदकं **देशे देशे** ऊषरादिदेशेऽन्यात्र सान् **रसान्तराणि** लवणादीनि **यथा अश्नुते** प्राप्नोति । **एवमविक्रियः** निर्विकारः । एकरूप इत्यर्थः । **त्वं गुणेषु** सत्त्वादिषु **अवस्थाः** स्रष्टृत्वादिरूपाः अश्नुषे ॥

**अमेयो मितलोकस्त्वमनर्थी प्रार्थनावहः ।**
**अजितो जिष्णुरत्यन्तमव्यक्तो व्यक्तकारणम् ॥ १८ ॥**

हे देव **त्वममेयः** लोकैरियत्तया न परिच्छेद्यः । **मितलोकः** परिच्छिन्नलोकः । **अनर्थी** निःस्पृहः । आवहतीत्यावहः । पचाद्यच् । प्रार्थनानामावहः कामदः [ **प्रार्थनावहः** ] । **अजितः** अन्यैर्न जितः । **जिष्णुः** जयशीलः । **अत्यन्तमव्यक्तः** अतिसूक्ष्मरूपः । व्यक्तस्य स्थूलरूपस्य कारणम् [ **व्यक्तकारणम्** ] ॥

---

१ उक्तं च तैत्तिरीयोपनिषदि–'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इति । २ तथा च श्रुतिः–' यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्म ।' इति । स्मृतिश्च–'ब्रह्मत्वे सृजते लोकान् विष्णुत्वे पालयत्यपि । रुद्रत्वे संहरत्येव तिस्रोऽवस्थाः स्वयंभुवः ॥' 'दर्शयन्महिमानं त्वं तिसृभिर्मूर्तिभिः प्रभुः । उत्पत्तिस्थितिनाशानामेकोऽभूः कारणं स्मृतम् ॥' इति शिवपुराणम् । ३ तत्त्वतो निरुपाधिकस्वरूपोपि त्वयि स्रष्टृत्वादिव्यवहारो गुणोपाधिनिबन्धन इति भावः । ४ अत्र श्रुतिः–'सत्यं ज्ञानम् अनन्तं ब्रह्म' इति । 'यो वै भूमा तदमृतमथ यदल्पं तन्मर्त्यम्' इ० छान्दोग्यं च । ५ अखिलजगतो भगवतः अंशभूतत्वात् । 'पादोऽस्य विश्वा भूतानि ' इति श्रुतेः । ६ अत्र गीतावचनम्–'न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा ।' इति । ७ उक्तं च महाभारते–'विष्णुर्विक्रमणाद्देवो जयनाज्जिष्णुरुच्यते' । इ० । ८ अव्यक्तमत्र सूक्ष्ममतीन्द्रियं लिङ्गग्राह्यं परं ब्रह्म । तदुक्तम्–'अव्यक्तमिति विज्ञेयं लिङ्गग्राह्यमतीन्द्रियम्' । इ० । यद्वा सोपाधिकं समष्टिरूपं ब्रह्म–'महतः परमव्यक्तमव्यक्तात्पुरुषः परः ' इ० श्रुतेः । अव्यक्तस्य व्यक्तकारणत्वे ईश्वरगीतावचनम्–अव्यक्ताद्व्यक्तयः सर्वाः प्रभवन्त्यहरागमे । रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके ॥ इति ।

**हृदयस्थमनासन्नमकामं त्वां तपस्विनम् ।**
**दयालुमनघस्पृष्टं पुराणमजरं विदुः ॥ १९ ॥**

हे देव **त्वां हृदयस्थं** सर्वान्तर्यामितया नित्यसंनिहितं तथापि **अनासन्नम्** अगम्यरूपत्वाद्विप्रकृष्टं च **विदुः** । संनिकृष्टस्यापि विप्रकृष्टत्वमिति विरोधः । तथा **अकामम्** । न कामोऽभिलाषोऽस्य तं परिपूर्णत्वान्निःस्पृहत्वाच्च निष्कामम् । तथापि **तपस्विनं** प्रशस्ततपोयुक्तं विदुः । यो निष्कामः स कथं तपः कुरुत इति विरोधः । [ परिहारस्तु ऋषिरूपेण दुस्तरं तपस्तप्यते । ] **दयालुं** परदुःखप्रहरणेच्छुं तथापि **अनघस्पृष्टं** नित्यानन्दस्वरूपत्वाददुःखिनं विदुः । 'अघं दुरितदुःखयोः' इति विश्वः । दयालुरदुःखी चेति विरोधः । 'ईर्ष्यी घृणी त्वसंतुष्टः क्रोधनो नित्यशङ्कितः । परभाग्योपजीवी च षडेते नित्यदुःखिताः ॥' इति महाभारते । **पुराणम्** अनादिम् **अजरं** निर्विकारत्वादक्षरं विदुः । चिरंतनं न जीर्यतीति विरोधालंकारः । उक्तं च— 'आभासत्वे विरोधस्य विरोधालंकृतिर्मता ।' इति । विरोधेन चालौकिकमहिमत्वं व्यज्यते ॥

**सर्वज्ञस्त्वमविज्ञातः सर्वयोनिस्त्वमात्मभूः ।**
**सर्वप्रभुरनीशस्त्वमेकस्त्वं सर्वरूपभाक् ॥ २० ॥**

त्वं जानातीति ज्ञः । 'इगुपध–' इति कप्रत्ययः । सर्वस्य ज्ञः **सर्वज्ञः अविज्ञातः** । न केनापि विज्ञात इत्यर्थः । त्वं [ **सर्वयोनिः** ] सर्वस्य योनिः कारणम् । त्वमात्मन एव भवतीति **आत्मभूः** । न ते किंचित्कारणमस्तीत्यर्थः । त्वं सर्वस्य प्रभुः [ **सर्वप्रभुः** ] **त्वमनीशः । त्वमेकः सर्वरूपभाक्** । त्वमेक एव सर्वात्मना वर्तस इत्यर्थः ॥

**सप्तसामोपगीतं त्वां सप्तार्णवजलेशयम् ।**
**सप्तार्चिर्मुखमाचख्युः सप्तलोकैकसंश्रयम् ॥ २१ ॥**

हे देव **त्वां** सप्तभिः सामभी रथंतरादिभिरुपगीतं [ **सप्तसामोपगीतम्** ] । 'तद्धितार्थ–' इत्युत्तरपदसमासः । सप्तानामर्णवानां जलं सप्तार्णवजलम् । पूर्ववत्समासः । तत्र शेते यः स सप्तार्णवजलेशयः । तं [ **सप्तार्णवजलेशयम्** ] । 'शयवासवासिष्वकालात्'

---

१ मदया० इति । २ अत्र गीता–वहिरन्तश्च भूतानामचरं चरमेव च । सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत् ॥ ३ परिपूर्णकामस्यापि भगवतो दयालुत्वात् लोकानुग्रहार्थं प्रवृत्तिः । तदुक्तं भगवद्गीतासु—न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किंचन । नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ॥ इ० । ४ अत्र माण्डूक्यश्रुतिः—'एष सर्वेश्वर एष सर्वज्ञ एषोन्तर्याम्येष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानाम्' । इ०. ५ 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' इति श्रुतेः । ६ 'रथन्तरबृहत्सामवामदेव्यवैरूप्यपावमानवैराजचान्द्रमसाभिधानानि तैः । इदं विष्णुरित्यादि विष्णोरराटमित्यन्तैर्वोपगीतम्' इ० दिनकरः । सप्तार्णवा वायुपुराणे यथा–क्षीरोदो लवणोदश्च दध्योदश्च घृतोदकः । स्वादूदकः सुरोदश्च तथैवेक्षुरसोदधिः ॥ अग्नेः सप्तजिह्वा यथा–काली कराली धूम्रा च लोहिता च मनोजवा । स्फुलिङ्गिनी विश्वरूपा (रुचीति मुण्डकोपनिषदि) सप्त जिह्वाः प्रकीर्तिताः ॥ इ० गर्गः । भवति हिरण्या कनका रक्ता कृष्णा च सुप्रभा चान्या । अतिरक्ता बहुरूपेति सप्त सप्तार्चिषो जिह्वाः ॥ इ० हलायुधः । भूः भुवः स्वः महः जनः तपः सत्यं चेति सप्तलोकाः ।

इत्यलुक् । सप्तार्चिर्मुखं यस्य तं **सप्तार्चिर्मुखम्** । 'अग्निमुखा वै देवाः' इति श्रुतेः । सप्तानां लोकानां भूर्भुवःस्वरादीनामेकसंश्रयम् [ **सप्तलोकैकसंश्रयम्** ] एवंभूतम् **आचख्युः** ॥

**चतुर्वर्गफलं ज्ञानं कालावस्थाश्चतुर्युगाः ।**
**चतुर्वर्णमयो लोकस्त्वत्तः सर्वं चतुर्मुखात् ॥ २२ ॥**

[ **चतुर्वर्गफलं** ] चतुर्णां धर्मार्थकाममोक्षाणां वर्गश्चतुर्वर्गः । 'त्रिवर्गो धर्मकामार्थैश्चतुर्वर्गः समोक्षकैः ।' इत्यमरः । तत्फलकं यत् **ज्ञानम्** । चत्वारि युगानि कृतत्रेतादीनि यासु ताः **चतुर्युगाः कालावस्थाः** कालपरिमाणम् । चत्वारो वर्णाः प्रकृता उच्यन्ते यस्मिन्निति **चतुर्वर्णमयः** । चातुर्वर्ण्यप्रचुर इत्यर्थः । तत्प्रकृतवचने मयट् । 'तद्धितार्थ–' इत्यादिना तद्धितार्थे विषये तत्पुरुषः । स **लोकः** । इत्येवंरूपं **सर्वं चतुर्मुखात्** चतुर्मुखरूपिणः **त्वत्तः** । जातमिति शेषः । 'इदं सर्वमसृजत यदिदं किंचित्' इति श्रुतेः ॥

**अभ्यासनिगृहीतेन मनसा हृदयाश्रयम् ।**
**ज्योतिर्मयं विचिन्वन्ति योगिनस्त्वां विमुक्तये ॥ २३ ॥**

[ **अभ्यासनिगृहीतेन** ] अभ्यासेन निगृहीतं विषयान्तरेभ्यो निवर्तितम् । तेन । **मनसा योगिनः हृदयाश्रयं** हृत्पद्मस्थं **ज्योतिर्मयं त्वां विमुक्तये** मोक्षार्थं **विचिन्वन्ति** अन्विष्यन्ति । ध्यायन्तीत्यर्थः ॥

**अजस्य गृह्णतो जन्म निरीहस्य हतद्विषः ।**
**स्वपतो जागरूकस्य याथार्थ्यं वेद कस्तव ॥ २४ ॥**

न जायत इत्यजः । 'अन्येष्वपि दृश्यते' इति डप्रत्ययः । तस्य **अजस्य** जन्मशून्यस्यापि **जन्म गृह्णतः** । मत्स्यादिरूपेण जायमानस्य । **निरीहस्य** चेष्टारहितस्यापि **हतद्विषः** शत्रून् हतवतः । **जागरूकस्य** सर्वसाक्षितया नित्यप्रबुद्धस्यापि **स्वपतः** योगनिद्रामनुभवतः । इत्थं विरुद्धचेष्टस्य **तव याथार्थ्यं कः वेद** वेत्ति । 'विदो लटो वा' इति णलादेशः ॥

---

१ 'कालावस्था चतुर्युगा,' सर्वं–'सर्गः' इ० पा० । २ 'चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः ।' इति भगवद्वचनात् । ब्राह्मणोस्य मुखमासीद्बाहू राजन्यः कृतः । ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रोऽजायत । इति श्रुतेश्च । ३ हृदयमनसोर्भेदे वसिष्ठः–यतो निर्याति विषयो यस्मिंश्चैव प्रलीयते । हृदयं तद्विजानीयान्मनसः स्थितिकारणम् ॥ तस्मिन्हृदये अनाहताख्यं द्वादशदलं पद्ममस्ति । तत्र स्थितमोंकाररूपमीश्वरं योगिनो ध्यायन्ति–हृदयेऽनाहतं चक्रं शिवस्य प्रणवाकृतेः । पूजास्थानं तदिच्छन्ति युतं द्वादशभिर्दलैः ॥ उक्तं चान्यत्र—अनाहताख्यं पद्मं तन्मुनिभिः परिकीर्तितम् । आनन्दसदनं तत्तु पुरुषाधिष्ठितं परम् ॥ ब्रह्मणो ज्योतिःस्वरूपत्वे–'अयं पुरुषः स्वयंज्योतिः' 'यदर्चिमद्यदणु' 'तच्छुभ्रं ज्योतिषां ज्योतिः' इत्यादिश्रुतयः प्रमाणम् । अत्र विषये भगवद्गीतावचनम्–अभ्यासयोगयुक्तेन चेतसा नान्यगामिना । परमं पुरुषं दिव्यं याति पार्थानुचिन्तयन् ॥ इति । ४ 'याथात्म्यम्' इति पा० । ५ 'न हि जातो न जायेऽहं न जनिष्ये कदाचन । क्षेत्रज्ञः सर्वभूतानां तस्मादहमजः स्मृतः' ॥ 'अजोऽपि सन्नव्ययात्मा–' 'अजो नित्यः शाश्वतोऽयम्' इत्यादि गीतावचनानि स्वयमेवानुसंधेयानि ।

**शब्दादीन्विषयान्भोक्तुं चरितुं दुश्चरं तपः ।**
**पर्याप्तोऽसि प्रजाः पातुमौदासीन्येन वर्तितुम् ॥ २५ ॥**

किं च । कृष्णादिरूपेण **शब्दादीन्विषयान्भोक्तुम्** । नरनारायणादिरूपेण **दुश्चरं तपश्चरितुम्** । तथा दैत्यमर्दनेन **प्रजाः पातुम्** । **औदासीन्येन** ताटस्थ्येन **वर्तितुं** च **पर्याप्तः** समर्थः **असि** । भोगतपसोः पालनौदासीन्ययोश्च परस्परविरुद्धयोराचरणे त्वदन्यः कः समर्थ इत्यर्थः ॥

**बहुधाप्यागमैर्भिन्नाः पन्थानः सिद्धिहेतवः ।**
**त्वय्येव निपतन्त्योघा जाह्नवीया इवार्णवे ॥ २६ ॥**

**आगमैः** त्रयीसांख्यादिभिर्दर्शनैः **बहुधा भिन्नाः अपि सिद्धिहेतवः** पुरुषार्थसाधकाः **पन्थानः** उपायाः । जाह्नव्या इमे **जाह्नवीयाः** गाङ्गाः । 'वृद्धाच्छः' इति छप्रत्ययः । **ओघाः** प्रवाहाः । तेऽप्यागमैरागतिभिर्बहुधा भिन्नाः सिद्धिहेतवश्च । **अर्णवे इव** । **त्वय्येव निपतन्ति** प्रविशन्ति । येन केनापि रूपेण त्वामेवोपयान्तीत्यर्थः । यथाहुराचार्याः—'किं बहुना कारवोऽपि विश्वकर्मेत्युपासते' इति ॥

**त्वय्यावेशितचित्तानां त्वत्समर्पितकर्मणाम् ।**
**गतिस्त्वं वीतरागाणामभूयःसंनिवृत्तये ॥ २७ ॥**

**त्वयि** आवेशितं निवेशितं चित्तं यैस्तेषां [ **आवेशितचित्तानाम्** ]। तुभ्यं समर्पितानि कर्माणि यैस्तेषां [ **त्वत्समर्पितकर्मणाम्** ] । 'मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु । मामेवैष्यसि कौन्तेय प्रतिजाने प्रियोऽसि मे ॥' इति भगवद्वचनात् । **वीतरागाणां** विरक्तानां **अभूयःसंनिवृत्तये** अपुनरावृत्तये । मोक्षायेत्यर्थः । **त्वम् एव गतिः** साधनम् । 'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इति श्रुतेरित्यर्थः॥

**प्रत्यक्षोऽप्यपरिच्छेद्यो मह्यादिर्महिमा तव ।**
**आप्तवागनुमानाभ्यां साध्यं त्वां प्रति का कथा ॥ २८ ॥**

**प्रत्यक्षः** प्रत्यक्षप्रमाणगम्यः **अपि तव मह्यादिः** पृथिव्यादिः **महिमा** ऐश्वर्यम् । **अपरिच्छेद्यः** इयत्तया नावधार्यः । आप्तवाग्वेदः । 'यतो वा इमानि भूतानि जा-

---

१ 'अजामेकां लोहितशुक्लकृष्णामजो ह्येको जुषमाणोनुशेते' इत्यादयः श्रुतयोत्र प्रमाणम् ।
२ 'वेदा विभिन्ना स्मृतयो विभिन्ना नैको मुनिर्यस्य मतं न भिन्नम्' इति विप्रतिपन्नेष्वपि शास्त्रकारेषु प्रतिपाद्यस्त्वमेक एव । एकमेव परमेश्वरं त्वां नामरूपादिभेदेन सर्वे उपासते इति भावः । अत्रानुरूपं वचनं पाद्मे—यथाद्रिप्रभवा नद्यः पर्जन्यापूरिताः प्रभो । विशन्ति सर्वतः सिन्धुमद्वानस्त्वां तथाखिलाः ॥ महिम्नस्तोत्रेपि—त्रयी सांख्यं योगः पशुपतिमतं वैष्णवमिति प्रभिन्ने प्रस्थाने परमिदमदः पथ्यमिति च । रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषां नृणामेको गम्यस्त्वमसि पयसामर्णव इव ॥ ३ 'ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः । अनन्येनैव योगेन मां ध्यायन्त उपासते । तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ॥' इति वचनाच्च । वायुपुराणे--देहिनां याः प्रवर्तन्ते प्रातरारभ्य स्वाः क्रियाः । ताश्च विष्ण्वर्पणं कुर्वन्कर्मपाशाद्विमुच्यते ॥ ४ श्वेताश्वतरो० ३. ८.

यन्त' इत्यादिश्रुतेः । अनुमानं क्षित्यादिकं सकर्तृकं कार्यत्वाद्धटवदित्यादिकम् । ताभ्यां [ **आप्तवागनुमानाभ्याम्** ] **साध्यं** गम्यं **त्वां प्रति का कथा** । प्रत्यक्षमपि त्वत्कृतं जगदपरिच्छेद्यम् । तत्कारणप्रत्यक्षस्त्वमपरिच्छेद्य इति किमु वक्तव्यमित्यर्थः ॥

**केवलं स्मरणेनैव पुनासि पुरुषं यतः ।**
**अनेन वृत्तयः शेषा निवेदितफलास्त्वयि ॥ २९ ॥**

**स्मरणेनैव केवलं** कृत्स्नम् । ' केवलः कृत्स्न एकश्च ' इति शाश्वतः । **पुरुषं** स्मर्तारं जनं **पुनासि** । **यतः** यदित्यर्थः । **अनेन** स्मृतिकार्येणैव **त्वयि** त्वद्विषये याः **शेषाः** अवशिष्टाः **वृत्तयः** दर्शनस्पर्शनादयो व्यापारास्ताः **निवेदितफलाः** विज्ञापितकार्याः । तव स्मरणस्यैवैतत्फलम् । दर्शनादीनां तु कियदिति नावधारयाम इति भावः ॥

**उदधेरिव रत्नानि**[३] **तेजांसीव विवस्वतः ।**
**स्तुतिभ्यो व्यतिरिच्यन्ते दूराणि चरितानि ते ॥ ३० ॥**

**उदधेः रत्नानीव । विवस्वतस्तेजांसीव । दूराणि** अवाङ्मनसगोचराणि **ते चरितानि स्तुतिभ्यो व्यतिरिच्यन्ते** । निःशेषं स्तोतुं न शक्यन्त इत्यर्थः ॥

**अनवाप्तमवाप्तव्यं न ते किंचन विद्यते ।**
**लोकानुग्रह एवैको हेतुस्ते जन्मकर्मणोः ॥ ३१ ॥**

**अनवाप्तम्** अप्राप्तम् । **अवाप्तव्यं** प्राप्तव्यं **ते** तव **किंचन** किंचिदपि **न विद्यते** । नित्यपरिपूर्णत्वादिति भावः । तर्हि किंनिबन्धने जन्मकर्मणी । तत्राह— लोकेति । **एको लोकानुग्रह एव ते** तव **जन्मकर्मणोर्हेतुः** । परमकारुणिकस्य ते परार्थैव प्रवृत्तिः । न स्वार्थेत्यर्थः ॥

**महिमानं यदुत्कीर्त्य तव संह्रियते वचः ।**
**श्रमेण तदशक्त्या वा न गुणानामियत्तया ॥ ३२ ॥**

**तव महिमानम् उत्कीर्त्य वचः संह्रियते** इति **यत्** । **तत्** वचःसंहरणं **श्रमेण** वाग्व्यापारश्रान्त्या । **अशक्त्या** कार्त्स्न्येन वक्तुमशक्यत्वात् **वा** । **गुणानामियत्तया** एतावन्मात्रतया **न** । तेषामानन्त्यादिति भावः ॥

---

१ तैत्तिरीयो० ३-१; 'द्यावाभूमी जनयन्देव एक आस्ते विश्वस्य कर्ता भुवनस्य भोक्ता' इत्यादि-श्रुतेश्च। २ कलिकल्मषमत्युग्रं नरकार्तिप्रदं नृणाम् । प्रयाति विलयं सद्यः सकृद्यत्रानुसंस्मृते: ॥ इति विष्णुपुराणे । ३ 'तोयानि' इ०, दूराणि–'दूरेण' इ० च पाठः । ४ 'यतो वाचो निवर्तन्ते' 'यद्वाचानभ्युदितम् ' इत्यादि श्रुतयोऽत्र प्रमाणम् । ५ क्लेशकर्मविपाकाशयादिभिरपरामृष्टोऽपि परमेश्वरः स्वेच्छया लौकिकवैदिकसंप्रदायप्रवृत्त्यर्थं जन्मकर्मणोः प्रवर्तते । यदाह परमेश्वर एव–"यदा यदा हि धर्मस्य ग्लानिर्भवति भारत । अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥ परित्राणाय साधूनां विनाशाय च दुष्कृताम् । धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥ " इति ।

**इति प्रसादयामासुस्ते सुरास्तमधोक्षजम् ।**
**भूतार्थव्याहृतिः सा हि न स्तुतिः परमेष्ठिनः ॥ ३३ ॥**

**इति ते सुरास्तम्** अधोभूतमक्षजमिन्द्रियजं ज्ञानं यस्मिंस्तम् **अधोक्षजम्**[1] विष्णुं **प्रसादयामासुः** प्रसन्नं चक्रुः । **हि** यस्मात् **परमेष्ठिनः** सर्वोत्तमस्य तस्य देवस्य **सा** देवैः कृता **भूतार्थव्याहृतिः** भूतस्य सत्यस्यार्थस्य व्याहृतिरुक्तिः । 'युक्ते क्ष्मादावृते भूतम्' इत्यमरः । **न स्तुतिः** न प्रशंसामात्रम् । महान्तो हि यथार्थवचनसुलभा इति भावः । परमे स्थाने तिष्ठतीति परमेष्ठी । 'परमे कित्' इत्युणादिसूत्रेण तिष्ठतेरिनिः । 'तत्पुरुषे कृति बहुलम्' इति सप्तम्या अलुक् । 'स्थास्थिन्स्थूणाम्' इति वक्तव्यात्षत्वम् ॥

**तस्मै कुशलसंप्रश्नव्यञ्जितप्रीतये सुराः ।**
**भयमप्रलयोद्वेलादाचख्युर्नैर्ऋतोदधेः ॥ ३४ ॥**

**सुराः** देवाः । कुशलस्य संप्रश्नेन व्यञ्जिता प्रकटिता प्रीतिर्यस्य तस्मै [**कुशलसंप्रश्नव्यञ्जितप्रीतये**] लक्षितप्रसादायेत्यर्थः[2] । अन्यथा अनवसरविज्ञप्तिर्मुखराणामिव निष्फला स्यादिति भावः । **तस्मै** विष्णवेऽप्रलये प्रलयाभावेऽप्युद्वेलादुन्मर्यादात् [**अप्रलयोद्वेलात्**] नैर्ऋतो राक्षसः । स एवोदधिः तस्माद् [**नैर्ऋतोदधेः**] **भयमाचख्युः** कथितवन्तः ॥

**अथ वेलासमासन्नशैलरन्ध्रानुनादिना ।**
**स्वरेणोवाच भगवान्परिभूतार्णवध्वनिः ॥ ३५ ॥**

**अथ** वेलायामब्धिकूले समासन्नानां संनिकृष्टानां शैलानां रन्ध्रेषु गह्वरेष्वनुनादिना प्रतिध्वनिमता [**वेलासमासन्नशैलरन्ध्रानुनादिना**] **स्वरेण परिभूतार्णवध्वनिः** तिरस्कृतसमुद्रघोषः **भगवान्**[3] **उवाच** ॥

**पुराणस्य कवेस्तस्य वर्णस्थानसमीरिता ।**
**बभूव कृतसंस्कारा चरितार्थैव भारती ॥ ३६ ॥**

---

१ अधः कृतानि जितानीन्द्रियाणि यैस्तेषामधोक्षाणां जायते प्रत्यक्षो भवतीति वा । 'अधो न क्षीयते जातु यस्मात्तस्मादधोक्षजः' इ. भारते उ० प० । यद्वा–अधःशब्देन ब्रह्माण्डस्याधरकपालम्, अक्षशब्देन चोपरितनकपालमुच्यते । तयोर्मध्ये वैराजरूपेण जायत इत्यधोक्षजः । हरिवंशे त्वन्यथास्य व्युत्पत्तिरुक्ता यथा–प्रत्यक्षं शूरसेनानां श्रूयतां महदद्भुतम् । अधोऽनेन शयानेन शकटान्तरचारिणा ॥ राक्षसी निहता रौद्री शकुनीवेषधारिणी । पूतना नाम घोरा सा महाकाया महाबला ॥ विषदिग्धं स्तनं क्षुद्रा प्रयच्छन्ती जनार्दनं । ददृशुस्तां विनिहतां राक्षसीं ते वनौकसः ॥ बलेः सुतां महाघोरां भीषणां विकृताननाम् । पुनर्जातोयमित्याहुरुक्तस्तस्मादधोक्षजः ॥ इति ॥ अधः अक्षजमिन्द्रियजन्यं ज्ञानं यस्येति वा । २ युक्तैव प्रीतिचिह्नदर्शनानन्तरप्रार्थना । तदुक्तं कुमारसंभवे–'कालप्रयुक्ता खलु कार्यविद्भिर्विज्ञापना भर्तृषु सिद्धिमेति' । ३ भगं ऐश्वर्यषट्कमस्यास्तीति भगवान् । ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गना ॥

**पुराणस्य** चिरंतनस्य **कवेः तस्य** भगवतो वर्णस्थानेषूरःकण्ठादिषु समीरिता सम्यगुच्चारिता [ **वर्णस्थानसमीरिता** ]। अत एव कृतः संपादितः संस्कारः साधुत्वस्पष्टतादिप्रयत्नो यस्याः सा [ **कृतसंस्कारा** ] **भारती** वाणी **चरितार्था** कृतार्था **बभूवेव**। एवकारस्त्वसंभावनाविपरीतभावनाव्युदासार्थः ॥

**बभौ सदशनज्योत्स्ना सा विभोर्वदनोद्गता।**
**निर्यातशेषा चरणाद्गङ्गेवोर्ध्वप्रवर्तिनी ॥ ३७ ॥**

**विभोः** विष्णोः वदनादुद्गता निःसृता [ **वदनोद्गता** ]। **सदशनज्योत्स्ना** दन्तकान्तिसहिता । इदं च विशेषणं धावल्यातिशयार्थम् । अत एव **सा** भारती **चरणाद्** अङ्घ्रेर्निर्याता चासौ शेषा च **निर्यातशेषा**। निःसृतावशिष्टेत्यर्थः । 'स्त्रियाः पुंवत्–' इत्यनुवर्त्य 'पुंवत्कर्मधारय–' इति पुंवद्भावः । निर्यातशब्दस्य या निर्याता सावशेषा सा गङ्गेवेति सामानाधिकरण्यनिर्वाहः । निर्यातायाः शेषेति विग्रहे पुंवद्भावो दुर्घट एव। । **ऊर्ध्वप्रवर्तिनी** ऊर्ध्ववाहिनी **गङ्गेव बभौ**। इत्युत्प्रेक्षा ॥

यदाह भगवांस्तदाह—

**जाने वो रक्षसाक्रान्तावनुभावपराक्रमौ।**
**अङ्गिनां तमसेवोभौ गुणौ प्रथममध्यमौ ॥ ३८ ॥**

हे देवाः **वः** युष्माकम् **अनुभावपराक्रमौ** महिमपुरुषकारौ **रक्षसा** रावणेन । **अङ्गिनां** शरीरिणां **प्रथममध्यमौ उभौ गुणौ** सत्त्वरजसी **तमसा इव** तमोगुणेनेव । **आक्रान्तौ जाने**। वाक्यार्थः कर्म ॥

**विदितं तप्यमानं च तेन मे भुवनत्रयम्।**
**अकामोपनतेनेव साधोर्हृदयमेनसा ॥ ३९ ॥**

किं च। [ **अकामोपनतेन** ] अकामेनानिच्छयोपनतेन प्रमादादागतेन **एनसा** पापेन **साधोः** सज्जनस्य **हृदयमिव** । **तेन** रक्षसा **तप्यमानं** संतप्यमानम् । तपेर्भौवादिकात्कर्मणि शानच् । **भुवनत्रयं च मे विदितम्**। मया ज्ञायत इत्यर्थः । 'मतिबुद्धि–' इत्यादिना वर्तमाने क्तः । 'क्तस्य च वर्तमाने' इति षष्ठी ॥

**कार्येषु चैककार्यत्वादभ्यर्थ्योऽस्मि न वज्रिणा।**
**स्वयमेव हि वातोऽग्नेः सारथ्यं प्रतिपद्यते ॥ ४० ॥**

---

१ आदौ वेदरूपस्य काव्यस्य स्रष्टृत्वाद्भगवतः पुराणकवित्वम् । तदुक्तम्–अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा। आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः ॥ २ वर्णस्थानानि शिक्षाकृदुक्तानि यथा—अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा। जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च ॥ ३ गङ्गाया हरिचरणोत्पत्तिः विष्णुपुराणे–एवमेतत्परं विष्णोस्तृतीयममलात्मकम्। आधारभूतं लोकानां त्रयाणां वृद्धिकारणम् ॥ ततः प्रवर्तते ब्रह्मन्सर्वपापहरा सरित्। वामपादाम्बुजाङ्गुष्ठनखस्रोतोविनिर्गता ॥ ४ उपमेयभूताया वाण्या उपमानभूताया गङ्गाया सहाभेदेन संभावनया उत्प्रेक्षालंकारः। स च इवप्रयोगाद्वाच्यः।

किं च । **एककार्यत्वाद्** आवयोरेककार्यकत्वाद्धेतोः । **कार्येषु** कर्तव्यार्थेषु विषयार्थेषु **वज्रिणा** इन्द्रेण **अभ्यर्थ्यः** इदं कुर्विति प्रार्थनीयः **नास्मि** । तथा हि । **वातः स्वयमेवाग्नेः सारथ्यं** साहाय्यं **प्रतिपद्यते** प्राप्नोति **हि** । न तु वह्निप्रार्थनया । इत्येवकारार्थः । प्रेक्षावतां हि स्वार्थेषु स्वत एव प्रवृत्तिः । न तु परप्रार्थनया । स्वार्थश्चायं ममापीत्यर्थः ॥

पुरा किल त्रिपुरारिप्रीणनाय स्वशिरांसि छिन्दता दशकंधरेण यद्दशमं शिरोऽवशेषितं तन्मच्चक्रार्थमित्याह—

**स्वासिधारापरिहृतः कामं चक्रस्य तेन मे ।**
**स्थापितो दशमो मूर्धा लभ्यांश इव रक्षसा ॥ ४१ ॥**

स्वासिधारया स्वखड्गधारया परिहृतः [ **स्वासिधारापरिहृतः** ] अच्छिन्न इत्यर्थः । **दशमो मूर्धा मे** मम **चक्रस्य कामं** पर्याप्तो **लभ्यांशः** प्राप्तव्यभागः **इव तेन रक्षसा स्थापितः** । तत्सर्वथा तमहं हनिष्यामीत्यर्थः ॥

तर्हि किं प्रागुपेक्षितमत आह—

**स्रष्टुर्वरातिसर्गात्तु मया तस्य दुरात्मनः ।**
**अत्यारूढं रिपोः सोढं चन्दनेनेव भोगिनः ॥ ४२ ॥**

किं **तु स्रष्टुः** ब्रह्मणः **वरातिसर्गाद्** वरदानाद्धेतोः । **मया तस्य दुरात्मनः रिपोः** रावणस्य **अत्यारूढम्** अत्यारोहणम् । अतिवृद्धिरित्यर्थः । 'नपुंसके भावे क्तः' । **भोगिनः** सर्पस्यात्यारूढं **चन्दनेन इव** । **सोढम्** । चन्दनद्रुमस्यापि तथा सहनं स्रष्टुर्नियतेरिति द्रष्टव्यम् ॥

संप्रति वरस्वरूपमाह—

**धातारं तपसा प्रीतं ययाचे स हि राक्षसः ।**
**दैवात्सर्गादवध्यत्वं मर्त्येष्वास्थापराङ्मुखः ॥ ४३ ॥**

**स राक्षसः तपसा प्रीतं** संतुष्टं **धातारं** ब्रह्माणम् । **मर्त्येषु** विषये **आस्थापराङ्मुखः** आदरविमुखः सन् । मर्त्याननादृत्येत्यर्थः । **दैवाद्** अष्टविधात् **सर्गाद्** देवसृष्टेः **अवध्यत्वं ययाचे हि** ॥

तर्हि का गतिरित्याशङ्क्य मनुष्यावतारेण हनिष्यामीत्याह—

---

१ विष्णोरिन्द्रसखित्वमृग्वेदेप्युक्तम्—'विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे । इन्द्रस्य युज्यः सखा ।' इ० मं० १ सू० २२. 'समीरणो नोदयिता भवेति व्यादिश्यते केन हुताशनस्य' इति समानार्थः श्लोकांशः कुमारसंभवे । २ 'लभ्यांशः छेद्यभाग इव' इति मूलटीकयोः पा०. ३ अत्र भागवतम्—'देवसर्गश्चाष्टविधो विबुधाः पितरोऽसुराः । गन्धर्वाप्सरसः सिद्धा यक्षरक्षांसि चारणाः ॥ भूतप्रेतपिशाचाश्च विद्याध्राः किन्नरादयः ॥' तत्र (१) विबुधाः, (२) पितरः, (३) असुराः, (४) गन्धर्वाप्सरसः, (५) यक्षरक्षांसि, (६) भूतप्रेतपिशाचाः, (७) सिद्धचारणाविद्याधराः (८) किन्नरादयः इति श्रीधरः । भारतेपि—गन्धर्वदेवासुरतो यक्षराक्षसतस्तथा । सर्पकिन्नरभूतेभ्यो न भूयान्मे पराभवः ॥ इति ।

सोऽहं दाशरथिर्भूत्वा रणभूमेर्बलिक्षमम् ।
करिष्यामि शरैस्तीक्ष्णैस्तच्छिरःकमलोच्चयम् ॥ ४४ ॥

**सोऽहम्** दशरथस्यापत्यं पुमान् **दाशरथिः** । 'अत इञ्' इति इञ्प्रत्ययः । रामः **भूत्वा तीक्ष्णैः शरैः** तस्य रावणस्य शिरांस्येव कमलानि तेषामुच्चयं राशिं [ **तच्छिरःकमलोच्चयम्** ] **रणभूमेर्बलिक्षमं** पूजार्हं **करिष्यामि** । पुष्पनिष्पाद्या हि पूजेति भावः ॥

अचिराद्यज्वभिर्भागं कल्पितं विधिवत्पुनः ।
मायाविभिरनालीढमादास्यध्वे निशाचरैः ॥ ४५ ॥

हे देवाः **यज्वभिः** याज्ञिकैः **विधिवत्कल्पितम्** उपहृतं **भागं** हविर्भागं **मायाविभिः** मायावद्भिः । 'अस्मायामेधास्रजो विनिः' इति विनिप्रत्ययः । **निशाचरैः** रक्षोभिः **अनालीढम्** अनास्वादितं यथा तथा **अचिरात् पुनः आदास्यध्वे** ग्रहीष्यध्वे ॥

वैमानिकाः पुण्यकृतस्त्यजन्तु मरुतां पथि ।
पुष्पकालोकसंक्षोभं मेघावरणतत्पराः ॥ ४६ ॥

**मरुतां** देवानां **पथि** व्योम्नि **वैमानिकाः** विमानैश्चरन्तः । 'चरति' इति ठक्प्रत्ययः । **मेघावरणतत्पराः** रावणभयान्मेघेष्वन्तर्धानतत्पराः **पुण्यकृतः** सुकृतिनः पुष्पकालोकेन यदृच्छया रावणविमानदर्शनेन यः संक्षोभो भयचकितं तं [ **पुष्पकालोकसंक्षोभं** ] **त्यजन्तु** । 'संक्षोभो भयचकितम्' इति शब्दार्णवः ॥

मोक्ष्यध्वे स्वर्गबन्दीनां वेणीबन्धानदूषितान् ।
शापयन्त्रितपौलस्त्यबलात्कारकचग्रहैः ॥ ४७ ॥

हे देवाः यूयं शापेन नलकूबरशापेन यन्त्रिताः प्रतिबद्धाः पौलस्त्यस्य रावणस्य बलात्कारेण ये कचग्रहाः केशाकर्षास्तैः [ **शापयन्त्रितपौलस्त्यबलात्कारकचग्रहैः** ] **अदूषितान्** अनुपहतान् **स्वर्गबन्दीनां** हृतस्वर्गाङ्गनानां **वेणीबन्धान्मोक्ष्यध्वे** । पुरा किल नलकूबरेणात्मानमभिसरन्त्या रम्भाया बलात्कारेण संभोगात्क्रुद्धेन दुरात्मा रावणः शप्तः–'स्त्रीणां बलाद् ग्रहणे मूर्धा ते शतधा भविष्यति' इति भारतीया कथानुसंधेया ॥

रावणावग्रहक्लान्तमिति वागमृतेन सः ।
अभिवृष्य मरुत्सस्यं कृष्णमेघस्तिरोदधे ॥ ४८ ॥

**स** कृष्णो विष्णुः स एव मेघो नीलमेघश्च [ **कृष्णमेघः** ] । विश्रवसोऽपत्यं पुमान् रावण इति विग्रहः । विश्रवःशब्दाच्छिवादित्वादणि 'विश्रवसः विश्रवणरवणौ' इत्यन्तर्गणसूत्रेण विश्रवःशब्दस्य प्रत्ययविषये रवणादेशे रावण इति सिद्धम् । स एवावग्रहो वर्षप्रति-

---

१ दिनकरोऽप्येवम् । 'अनुच्छिष्टम्' इ. वल्ल० । २ 'देवानां वायूनां वा' इ० हे० । 'वायूनाम् । देवानां पथीति व्याख्यायां मेघाच्छादनं न संभवति' इ० चा० दि० । ३ अत्र हारीतः–न प्रोषिते तु संस्कुर्यान्न वेणीं च प्रमोचयेत् । इ० । ४ 'यदि ह्यकामामासेवेत् स्त्रियमन्यामपि ध्रुवम् । शतधास्य फलन्मूर्धा इत्युक्तः सोऽभवत्पुरा ॥' इ० भारतीयः श्लोकः ।

न्धः । तेन क्रान्तं म्लानं [ **रावणावग्रहक्रान्तं** ] मरुतो देवा एव सस्यं तत् [ **मरुत्सस्यम्** ] **इति** एवंरूपेण **वागमृतेन** वाक्सलिलेन । ' अमृतं यज्ञशेषे स्यात्पीयूषे सलिलेऽमृतम् । ' इति विश्वः । **अभिवृष्य** अभिषिच्य **तिरोदधे** अन्तर्दधे ॥

**पुरुहूतप्रभृतयः सुरकार्योद्यतं सुराः ।**
**अंशैरनुययुर्विष्णुं पुष्पैर्वायुमिव द्रुमाः ॥ ४९ ॥**

**पुरुहूतप्रभृतयः** इन्द्राद्याः **सुराः** सुरकार्ये रावणवधरूपे उद्यतं [ **सुरकार्योद्यतं** ] **विष्णुमंशैः** मात्राभिः । **द्रुमाः पुष्पैः** स्वांशैः **वायुमिव** । **अनुययुः** । सुग्रीवादिरूपेण वानरयोनिषु जाता इत्यभिप्रायः ॥

**अथ तस्य विशां पत्युरन्ते काम्यस्य कर्मणः ।**
**पुरुषः प्रबभूवाग्नेर्विस्मयेन सहर्त्विजाम् ॥ ५० ॥**

अथ **तस्य विशां पत्युः** दशरथस्य संबन्धिनः **काम्यस्य कर्मणः** पुत्रकामेष्टेः **अन्ते** अवसाने **अग्नेः** पावकात् **पुरुषः** कश्चिद्दिव्यः पुमान् **ऋत्विजां विस्मयेन सह प्रबभूव** प्रादुर्बभूव । तदाविर्भावात्तेषामपि विस्मयोऽभूदित्यर्थः ॥

तमेव पुरुषं विशिनष्टि—

**हेमपात्रगतं दोर्भ्यामादधानः पयश्चरुम् ।**
**अनुप्रवेशादाद्यस्य पुंसस्तेनापि दुर्वहम् ॥ ५१ ॥**

**आद्यस्य पुंसः** विष्णोः **अनुप्रवेशाद्** अधिष्ठानाद्धेतोः **तेन** दिव्यपुरुषेण **अपि दुर्वहम्** । चतुर्दशभुवनोदरस्य भगवतो हरेरतिगरीयस्त्वाद्वोढुमशक्यम् । **हेमपात्रगतं** पयसि पक्वं चरुं **पयश्चरुं** पायसान्नं **दोर्भ्यामादधानः** वहन् । ' अनवस्रवितोऽन्तरूष्मपक्व ओदनश्चरुः ' इति याज्ञिकाः ॥

**प्राजापत्योपनीतं तदन्नं प्रत्यग्रहीन्नृपः ।**
**वृषेव पयसां सारमाविष्कृतमुदन्वता ॥ ५२ ॥**

**नृपः** दशरथः प्राजापत्येन प्रजापतिसंबन्धिना पुरुषेणोपनीतं [ **प्राजापत्योपनीतं** ] न तु वसिष्ठेन । ' प्राजापत्यं नरं विद्धि मामिहाभ्यागतं नृप । ' इति रामाय-

---

१ वेवेष्टि सर्वं जगत्तेजसा व्याप्नोतीति विष्णुः । केचित् विश प्रवेशने इत्यस्य ग्रहणमिच्छन्ति । यथा विष्णुपुराणे—यस्माद्विष्णुमयं सर्वं यच्चराचरमुच्यते । तस्मात्स गीयते विष्णुर्विशधातोः प्रवेशनात् ॥ २ पितामहस्ततस्तेषां संनिधौ शक्रमब्रवीत् । सर्वैर्देवगणैः सार्धं संभव त्वं महीतले ॥ विष्णोः सहायानृक्षीषु वानरीषु च सर्वशः । जनयध्वं सुतान्वीरान्कामरूपबलान्वितान् ॥ शक्रप्रभृतयश्चैव सर्वे ते सुरसत्तमाः । वानरर्क्षवरस्त्रीषु जनयामासुरात्मजान् ॥ महाभा० वनप. अ. २७५. ३ ततो वै यजमानस्य पावकादतुलप्रभम् । प्रादुर्भूतं महद्भूतं महावीर्यं महाबलम् ॥ इ० रामायणे । ४ ' आददानः ' इ. पा०. ५ चा०.दि० दयाँपि एवं व्याख्यान्ति । ६ प्राजापत्यं प्रजापतिना प्रेषितम् । अथ वा प्रजापतेः प्रजापालकाद्विष्णोः संभूतं तद्रूपमित्यर्थः। इ० रामायणटीकायां रामः ।

णात् । **तद् अन्नं** पायसान्नम् । **उदन्वता** उदधिना **आविष्कृतं** प्रकाशितं **पयसां सारम्** अमृतं **वृषा** वासवः **इव** । 'वासवो वृत्रहा वृषा' इत्यमरः । **प्रत्यग्रहीत** स्वीचकार ॥

**अनेन कथिता राज्ञो गुणास्तस्यान्यदुर्लभाः ।**
**प्रसूतिं चकमे तस्मिंस्त्रैलोक्यप्रभवोऽपि यत् ॥ ५३ ॥**

**तस्य राज्ञः** दशरथस्य **अन्यदुर्लभाः** असाधारणाः **गुणाः अनेन कथिताः** व्याख्याताः । **यद्** यस्मात् त्रयो लोकास्त्रैलोक्यम् । चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ् । तस्य प्रभवः कारणं [ **त्रैलोक्यप्रभवः** ] विष्णुः **अपि तस्मिन्** राज्ञि **प्रसूतिम्** उत्पत्तिं **चकमे** कामितवान् । त्रिभुवनकारणस्यापि कारणमिति परमावधिर्गुणसमाश्रय इत्यर्थः ॥

**स तेजो वैष्णवं पत्न्योर्विभेजे चरुसंज्ञितम् ।**
**द्यावापृथिव्योः प्रत्यग्रमहर्पतिरिवातपम् ॥ ५४ ॥**

**स** नृपः । चरुसंज्ञास्य संजाता **चरुसंज्ञितम्** । **वैष्णवं तेजः पत्न्योः** कौसल्या-कैकेय्योः । द्यौश्च पृथिवी च द्यावापृथिव्यौ । 'दिवसश्च पृथिव्याम्' इति चकाराद्दिव्-शब्दस्य द्यावादेशः । तयोः **द्यावापृथिव्योः** । अह्नः पतिः **अहर्पतिः** । 'अहरादीनां पत्यादिषु वा रेफः' इत्युपसंख्यानाद्वैकल्पिको रेफादेशो विसर्गापवादः । **प्रत्यग्रम् आतपं** बालातपम् **इव विभेजे** । विभज्य ददावित्यर्थः ॥

पत्नीत्रये सति द्वयोरेव विभागे कारणमाह—

**अर्चिता तस्य कौसल्या प्रिया केकयवंशजा ।**
**अतः संभावितां ताभ्यां सुमित्रामैच्छदीश्वरः ॥ ५५ ॥**

**तस्य** राज्ञः कौ पृथिव्यां सलति गच्छतीति कोसलः । 'सल गतौ' । पचाद्यच् । कुशब्दस्य पृषोदरादित्वाद्गुणः । कोसलस्य राज्ञोऽपत्यं स्त्री **कौसल्या** । 'वृद्धेत्कोसलाजादा-ञ्ञ्यङ्' इति ञ्यङ् । 'यङश्चाप्' इति चाप् । अत एव सूत्रे निर्देशात्कोसलशब्दो दन्त्य-सकारमध्यमः । **अर्चिता** ज्येष्ठा मान्या । **केकयवंशजा** कैकयी । **प्रिया** इष्टा । **अतः** हेतोः **ईश्वरः** भर्ता नृपः **सुमित्रां ताभ्यां** कौसल्याकैकेयीभ्यां **संभावितां** भागदानेन मानिताम् **ऐच्छत्** इच्छति स्म । एवं च सामान्यं तिसृणां च भागप्रापणमिति राज्ञ्युचितज्ञता कौशलं च लभ्यते ॥

**ते बहुज्ञस्य चित्तज्ञे पत्न्यौ पत्युर्महीक्षितः ।**
**चरोरर्धार्धभागाभ्यां तामयोजयतामुभे ॥ ५६ ॥**

**बहुज्ञस्य** सर्वज्ञस्य । उचितज्ञस्येत्यर्थः । **पत्युर्महीक्षितः** क्षितीश्वरस्य । विशे-षणत्रयेण राज्ञोऽनुसरणीयतामाह । **चित्तज्ञे** अभिप्रायज्ञे **ते उभे पत्न्यौ** कौसल्या-

---

१ गुणैर्वरं भुवनहितच्छलेन यं सनातनः पितरमुपागमत्स्वयम् । इ० भट्टिः । २ 'भागेन' इति पा० ।

कैकेय्यौ । **चरोः** यावर्धभागौ समभागौ तयोर्यावर्धौ तौ च तौ भागौ चेत्यर्धभागावेकदेशौ । ताभ्याम् **अर्धार्धभागाभ्याम्** । 'पुंस्यर्धोऽर्धं समेंऽशके' इत्यमरः । **तां** सुमित्राम् **अयोजयतां** युक्तां चक्रतुः । अयं च विभागो न रामायणसंवादी । तत्र चरोरर्धं कौसल्याया अवशिष्टार्धं कैकेय्यै शिष्टं पुनः सुमित्राया इत्यभिधानात् । किं तु पुराणान्तरसंवादो द्रष्टव्यः । उक्तं च नारसिंहे–'ते पिण्डप्राशने काले सुमित्रायै महीपतेः । पिण्डाभ्यामल्पमल्पं तु स्वभगिन्यै प्रयच्छतः ॥' इति । एवमन्यत्रापि विरोधे पुराणान्तरात्समाधातव्यम् ॥

न चैवं सत्यपीर्ष्या स्यादित्याह—

**सा हि प्रणयवत्यासीत्सपत्न्योरुभयोरपि ।**
**भ्रमरी वारणस्येव मदनिस्यन्दरेखयोः ॥ ५७ ॥**

**सा** सुमित्रा **उभयोरपि** समान एकः पतिर्ययोस्तयोः **सपत्न्योः** । 'नित्यं सपत्न्यादिषु' इति ङीप् । नकारादेशश्च । **भ्रमरी** भृङ्गाङ्गना **वारणस्य** गजस्य **मदनिस्यन्दरेखयोरिव** गण्डद्वयगतयोरिति भावः । **प्रणयवती** प्रेमवती **आसीत्** [ **हि** ] । सपत्न्योरित्यत्र समासान्तर्गतस्य पत्युरुपमानं वारणस्येति ॥

**ताभिर्गर्भः प्रजाभूत्यै दध्रे देवांशसंभवः ।**
**सौरीभिरिव नाडीभिरमृताख्याभिरम्मयः ॥ ५८ ॥**

**ताभिः** कौसल्यादिभिः प्रजानां भूत्या अभ्युदयाय [ **प्रजाभूत्यै** ] । देवस्य विष्णोरंशः संभवः कारणं यस्य सः [ **देवांशसंभवः** ] **गर्भः** । सूर्यस्येमाः सौर्यः ताभिः **सौरीभिः** । 'सूर्यतिष्य–' इत्युपधायकारस्य लोपः । अमृता इत्याख्या यासां ताभिः [ **अमृताख्याभिः** ] । जलवहनसाम्यान्नाडीभिरिव । **नाडीभिः** वृष्टिविसर्जनीभिर्दीधितिभिरपां विकारः **अम्मयः** जलमयो गर्भः इव । **दध्रे** धृतः । जातावेकवचनम् । गर्भा दधिर इत्यर्थः । अत्र यादवः–'तासां शतानि चत्वारि रश्मीनां वृष्टिसर्जने । शतत्रयं हिमोत्सर्गे तावद्घर्मस्य सर्जने ॥ आनन्दाश्च हि मेघ्याश्च नूतनाः पूतना इति । चतुःशतं वृष्टिवाहास्ताः सर्वा अमृताः स्त्रियः ॥' इति ॥

**सममापन्नसत्त्वास्ता रेजुरापाण्डुरत्विषः ।**
**अन्तर्गतफलारम्भाः सस्यानामिव संपदः ॥ ५९ ॥**

---

१ इदं मल्लिनाथोक्तं मुद्रितपुस्तकोपलब्धपाठविरुद्धमपि रामायणस्य पाठान्तरसंवादीति ज्ञायते । विद्यमानपाठानुरोधात्तु कौसल्या पायसार्धं सुमित्रा पादोनांशार्धं कैकेयी चाष्टमांशं प्रापेति प्राप्नोति । वस्तुतस्तु कौसल्या अर्धांशं कैकेयी चतुर्थांशं सुमित्रा च द्विधा विभक्तं चतुर्थांशं प्रापेत्येव वाल्मीकेरभिप्रायः । उक्तं च तेनान्यत्र–'कौसल्याऽजनयद्रामं दिव्यलक्षणसंयुतम् । विष्णोरर्धं महाभागं पुत्रमैक्ष्वाकुनन्दनम् ॥ भरतो नाम कैकेय्यां जज्ञे सत्यपराक्रमः । साक्षाद्विष्णोश्चतुर्भागः सर्वैः समुदितो गुणैः ॥' इति । रामायणपाठान्तरात्तु स्फुट एवायमर्थो यथा–'इत्युक्त्वा प्रददौ तस्यै हविषार्धं नराधिपः । स्वयमेव समं कृत्वा भागं भागवतां वरः ॥ अर्धादर्धं ददौ चापि कैकेय्यै स नराधिपः । चतुर्भागं द्विधा कृत्वा सुमित्रायै ददौ तदा ॥' इति ।

२ 'सापि' इति, निस्यन्द०–'निष्यन्दलेखयोः' इ. पा०

**समं** युगपदापन्ना गृहीताः सत्त्वाः प्राणिनो याभिस्ताः **आपन्नसत्त्वा** गर्भिण्यः। 'आपन्नसत्त्वा स्याद्गुर्विण्यन्तर्वत्नी च गर्भिणी।' इत्यमरः। अत एव **आपाण्डुरत्विषः** ईषत्पाण्डुरवर्णाः **ताः** राजपत्न्यः। अन्तर्गता गुप्ताः फलारम्भाः फलप्रादुर्भावा यासां ताः [ **अन्तर्गतफलारम्भाः** ]। **सस्यानां संपद इव**। **रेजुः** बभुः॥

**गुप्तं ददृशुरात्मानं सर्वाः स्वप्नेषु वामनैः।**
**जलजासिगदाशार्ङ्गचक्रलाञ्छितमूर्तिभिः॥ ६०॥**

**सर्वाः** ताः **स्वप्नेषु**। जलजः शङ्खः। जलजासिगदाशार्ङ्गचक्रैर्लाञ्छिता मूर्तयो येषां तैः [ **जलजासिगदाशार्ङ्गचक्रलाञ्छितमूर्तिभिः** ] **वामनैः** ह्रस्वैः पुरुषैः **गुप्तं** रक्षितम् **आत्मानं** स्वरूपं **ददृशुः**॥

**हेमपक्षप्रभाजालं गगने च वितन्वता।**
**उह्यन्ते स्म सुपर्णेन वेगाकृष्टपयोमुचा॥ ६१॥**

किं चेति चार्थः। हेम्नः सुवर्णस्य पक्षाणां प्रभाजालं कान्तिपुञ्जं [ **हेमपक्षप्रभाजालं** ] **वितन्वता** विस्तारयता। वेगेनाकृष्टाः पयोमुचो मेघा येन तेन [ **वेगाकृष्टपयोमुचा** ]। **सुपर्णेन** गरुत्मता गरुडेन [ **च** ] **गगने** ताः **उह्यन्ते स्म** ऊढाः॥

**बिभ्रत्या कौस्तुभन्यासं स्तनान्तरविलम्बिनम्।**
**पर्युपास्यन्त लक्ष्म्या च पद्मव्यजनहस्तया॥ ६२॥**

किं च। स्तनयोरन्तरे मध्ये विलम्बिनं लम्बमानं [ **स्तनान्तरविलम्बिनम्** ] न्यस्यत इति न्यासः। कौस्तुभ एव न्यासस्तम् [ **कौस्तुभन्यासं** ]। पत्या कौतुकान्न्यस्तं कौस्तुभमित्यर्थः। **बिभ्रत्या** पद्ममेव व्यजनं हस्ते यस्यास्तया [ **पद्मव्यजनहस्तया** ] **लक्ष्म्या पर्युपास्यन्त** उपासिताः [ **च** ]॥

**कृताभिषेकैर्दिव्यायां त्रिस्रोतसि च सप्तभिः।**
**ब्रह्मर्षिभिः परं ब्रह्म गृणद्भिरुपतस्थिरे॥ ६३॥**

किं **च**। दिवि भवायां **दिव्यायां त्रिस्रोतसि** आकाशगङ्गायां **कृताभिषेकैः** कृतावगाहैः। **परं ब्रह्म** वेदरहस्यं **गृणद्भिः** पठद्भिः **सप्तभिः ब्रह्मर्षिभिः** कश्यपप्रभृतिभिः **उपतस्थिरे** उपासांचक्रिरे॥

**ताभ्यस्तथाविधान्स्वप्नाञ्छ्रुत्वा प्रीतो हि पार्थिवः।**
**मेने परार्ध्यमात्मानं गुरुत्वेन जगद्गुरोः॥ ६४॥**

**पार्थिवः** दशरथः **ताभ्यः** पत्नीभ्यः। 'आख्यातोपयोगे' इत्यपादानत्वात्पञ्चमी। **तथाविधान्** उक्तप्रकारान् **स्वप्नान्** **श्रुत्वा प्रीतः** सन्। **आत्मानं जगद्गुरोः** विष्णोरपि **गुरुत्वेन** पितृत्वेन हेतुना **परार्ध्यं** सर्वोत्कृष्टं **मेने हि**॥

१ 'हेमपत्र' इ०, वितन्वता-'विचिन्वता,' उह्यन्ते स्म-'उह्यमानम्,' इ० पा० २ 'विलम्बितम्' इ० पा० ३ कौस्तुभमणेर्न्यासं विष्णोरालिङ्गनवशात्कौस्तुभमणिमुद्रां धारयन्त्या इति चारि०। ४ 'महर्षिभिः' इ० पा० ५ 'कृतार्थम्' इति पा०.

**विभक्तात्मा विभुस्तासामेकः कुक्षिष्वनेकधा ।**
**उवास प्रतिमाचन्द्रः प्रसन्नानामपामिव ॥ ६५ ॥**

**एकः** एकरूपः **विभुः** विष्णुः **तासां** राजपत्नीनां **कुक्षिषु** गर्भेषु **प्रसन्नानां** निर्मलानाम् **अपां** कुक्षिषु **प्रतिमाचन्द्रः** प्रतिबिम्बचन्द्रः **इव** । **अनेकधा विभक्तात्मा** सन् । **उवास** ॥

**अथाग्र्यमहिषी राज्ञः प्रसूतिसमये सती ।**
**पुत्रं तमोपहं लेभे नक्तं ज्योतिरिवौषधिः ॥ ६६ ॥**

**अथ राज्ञः** दशरथस्य **सती** पतिव्रता । अग्र्या चासौ महिषी च **अग्र्यमहिषी** कौसल्या । **प्रसूतिसमये** प्रसूतिकाले । **ओषधिर्नक्तं** रात्रिसमये तमोऽपहन्तीति **तमोपहम्** । ' अपे क्लेशतमसोः ' इति डप्रत्ययः । **ज्योतिरिव** । तमोपहं तमोनाशकरं **पुत्रं लेभे** प्राप ॥

**राम इत्यभिरामेण वपुषा तस्य चोदितः ।**
**नामधेयं गुरुश्चक्रे जगत्प्रथममङ्गलम् ॥ ६७ ॥**

अभिरमतेऽत्रेत्यभिरामं मनोहरम् । अधिकरणार्थे घञ्प्रत्ययः । तेन [ **अभिरामेण** ] **वपुषा चोदितः** प्रेरितः **गुरुः** पिता दशरथः **तस्य** पुत्रस्य जगतां प्रथमं मङ्गलं सुलक्षणम् [ **जगत्प्रथममङ्गलम्** ] **राम इति नामधेयं चक्रे** । अभिरामत्वमेव रामशब्दप्रवृत्तिनिमित्तमित्यर्थः ॥

**रघुवंशप्रदीपेन तेनाप्रतिमतेजसा ।**
**रक्षागृहगता दीपाः प्रत्यादिष्टा इवाभवन् ॥ ६८ ॥**

रघुवंशस्य प्रदीपेन प्रकाशकेन [ **रघुवंशप्रदीपेन** ] । **अप्रतिमतेजसा तेन** रामेण **रक्षागृहगताः** सूतिकागृहगताः **दीपाः प्रत्यादिष्टाः** प्रतिबद्धाः **इव अभवन्** । महादीपसमीपे नाल्पाः स्फुरन्तीति भावः ॥

**शय्यागतेन रामेण माता शातोदरी बभौ ।**
**सैकताम्भोजबलिना जाह्नवीव शरत्कृशा ॥ ६९ ॥**

**शातोदरी** गर्भमोचनात्कृशोदरी **माता शय्यागतेन रामेण** । सैकते पुलिने योऽम्भोजबलिः पद्मोपहारस्तेन [ **सैकताम्भोजबलिना** ] शरदि कृशा [ **शरत्कृशा** ] **जाह्नवी** गङ्गा **इव बभौ** ॥

---

१ तृणज्योतिराख्या लता । सा हि रात्रौ ज्वलतीति प्रसिद्धिः । २ ' नोदितः ' इ. पा० । ३ अस्य निरुक्तिः पद्मपुराणे–श्रियः कमलवासिन्या रमणोऽयं यतो हरिः । तस्मात् श्रीराम इत्यस्य नाम सिद्धं पुरातनम् ॥ इति । अत्र हेमाद्रिः–अन्वर्था चेयं संज्ञा । तथा शृङ्गारप्रकाशे–कर्मव्यवहारहेतुः संज्ञा । सा चतुर्विधा । आन्वर्थिकी पारिभाषिकी नैमित्तिकी यादृच्छिकी चेति । अर्थमनुगता आन्वर्थिकी यथा–परंतपो नाम यथार्थनामा इति । अनपेक्षितसंज्ञा पारिभाषिकी यथा–प्रतीप इत्यागमवृद्धसेवी इति । निमित्तापेक्षा नैमित्तिकी यथा–तां पार्वतीत्याभिजनेन नाम्ना इति । अविद्यमानव्युत्पत्तिर्यादृच्छिकी यथा–लाङ्गलाल्लिख्यमानाया यज्ञभूमेः समुद्गता । सीतेयमुर्मिलेयं तु द्वितीया जनकात्मजा ॥ इति । ४ ' शय्यागृह ' इति पा० ५ प्रदीपत्वेन दीपेभ्योऽस्य प्रकर्ष उक्तः ।

केकेय्यास्तनयो जज्ञे भरतो नाम शीलवान् ।
जनयित्रीमलंचक्रे यः प्रश्रय इव श्रियम् ॥ ७० ॥

केकयस्य राज्ञोऽपत्यं स्त्री कैकेयी । 'तस्यापत्यम्' इत्यणि कृते 'केकयमित्रयुप्रलयानां यादेरियः' इतीयादेशः । तस्याः [ **कैकेय्याः** ] **भरतो नाम शीलवान् तनयः जज्ञे** जातः । **यः** तनयः **प्रश्रयः** विनयः **श्रियमिव** । **जनयित्रीं** मातरं **अलंचक्रे** ॥

सुतौ लक्ष्मणशत्रुघ्नौ सुमित्रा सुषुवे यमौ ।
सम्यगाराधिता विद्या प्रबोधविनयाविव ॥ ७१ ॥

**सुमित्रा लक्ष्मणशत्रुघ्नौ** नाम **यमौ** युग्मजातौ **सुतौ** पुत्रौ **सम्यग् आराधिता** स्वभ्यस्ता **विद्या प्रबोधविनयौ** तत्त्वज्ञानेन्द्रियजयौ **इव सुषुवे** ॥

निर्दोषमभवत्सर्वमाविष्कृतगुणं जगत् ।
अन्वगादिव हि स्वर्गो गां गतं पुरुषोत्तमम् ॥ ७२ ॥

**सर्वं जगत्** भूलोको **निर्दोषं** दुर्भिक्षादिदोषरहितम् । **आविष्कृतगुणं** प्रकटीकृतारोग्यादिगुणं च **अभवत्** । अत्रोत्प्रेक्ष्यते—**गां** भुवं **गतम्** अवतीर्णं **पुरुषोत्तमं** विष्णुं **स्वर्गः** अपि **अन्वगादिव हि** । स्वर्गः हि गुणवान्निर्दोषश्चेत्यागमः । स्वर्गतुल्यमभूदित्यर्थः ॥

तस्योदये चतुर्मूर्तेः पौलस्त्यचकितेश्वराः ।
विरजस्कैर्नभस्वद्भिर्दिश उच्छ्वसिता इव ॥ ७३ ॥

**चतुर्मूर्तेः** रामादिरूपेण चतूरूपस्य सतः **तस्य** हरेः **उदये** सति । पौलस्त्याद्रावणाच्चकिता भीता ईश्वरा नाथा इन्द्रादयो यासां ताः [ **पौलस्त्यचकितेश्वराः** ] **दिशः** चतस्रः **विरजस्कैः** अपधूलिभिः **नभस्वद्भिः** वायुभिः । मिषेण । **उच्छ्वसिता इव** । इत्युत्प्रेक्षा । श्वसेः कर्तरि क्तः । स्वनाथशरणलाभसंतुष्टानां दिशामुच्छ्वासवाता इव वाता ववुरित्यर्थः । चतुर्दिगीशरक्षणं मूर्तिचतुष्टयप्रयोजनमिति भावः ॥

कृशानुरपधूमत्वात्प्रसन्नत्वात्प्रभाकरः ।
रक्षोविप्रकृतावास्तामपविद्धशुचाविव ॥ ७४ ॥

रक्षसा रावणेन विप्रकृतावपकृतौ [ **रक्षोविप्रकृतौ** ] । पीडितावित्यर्थः । **कृशानुः** अग्निः **प्रभाकरः** सूर्यश्च यथासंख्यं **अपधूमत्वात्प्रसन्नत्वात्** च **अपविद्धशुचौ** निरस्तदुःखौ **इव आस्ताम्** अभवताम् ॥

---

१ 'आगमिता' इ० पा० २ दिशः प्रसेदुर्मरुतो ववुः सुखाः प्रदक्षिणार्चिर्हविरग्निराददे । इ० तृ. स. १४ श्लो० । अत्र समानार्थाः श्लोकाः—वाता ववुः सौख्यकराः प्रसेदुराशा विधूमो हुतभुग् दिदीपे । जलान्यभूवन्विमलानि तत्रोत्सवेऽन्तरिक्षं प्रससाद सद्यः ॥ इति कुमारसं. ( ११.३७ ); वाता ववुः स्पर्शसुखा मनोज्ञा दिव्यानि वासांस्यवपातयन्तः । सूर्यः स एवाभ्यधिकं चकाशे जज्वाल सौम्यार्चिरनीरितोऽग्निः ॥ इति बुद्धचरिते ( १. ४१ ) । ३ 'नैनं सूर्यः प्रतपति पार्श्वे वाति न मारुतः' इति रामायणवचनात् ।

दशाननकिरीटेभ्यस्तत्क्षणं राक्षसश्रियः ।
मणिव्याजेन पर्यस्ताः पृथिव्यामश्रुबिन्दवः ॥ ७५ ॥

**तत्क्षणं** तस्मिन्क्षणे रामोत्पत्तिसमये **राक्षसश्रियः अश्रुबिन्दवः दशाननकिरीटेभ्यः** मणीनां व्याजेन मिषेण [ **मणिव्याजेन** ] **पृथिव्यां पर्यस्ताः** पतिताः । रामोदये सति तद्वध्यस्य रावणस्य किरीटमणिभ्रंशलक्षणं दुर्निमित्तमभूदित्यर्थः ॥

पुत्रजन्मप्रवेश्यानां तूर्याणां तस्य पुत्रिणः ।
आरम्भं प्रथमं चक्रुर्देवदुन्दुभयो दिवि ॥ ७६ ॥

**पुत्रिणः** जातपुत्रस्य **तस्य** दशरथस्य [ **पुत्रजन्मप्रवेश्यानां** ] पुत्रजन्मनि प्रवेश्यानां प्रवेशयितव्यानां वादनीयानामित्यर्थः । **तूर्याणां** वाद्यानां **आरम्भं** उपक्रमं **प्रथमं दिवि देवदुन्दुभयः चक्रुः** । साक्षात्पितुर्दशरथादपि देवा अधिकं प्रहृष्टा इत्यर्थः ॥

संतानकमयी वृष्टिर्भवने चास्य पेतुषी ।
सन्मङ्गलोपचाराणां सैवादिरचनाऽभवत् ॥ ७७ ॥

**अस्य** राज्ञः **भवने** संतानकानां कल्पवृक्षकुसुमानां विकारः **संतानकमयी वृष्टिश्च पेतुषी** पपात । ' क्वसुश्च ' इति क्वसुप्रत्ययः । ' उगितश्च ' इति ङीप् । **सा** वृष्टिः **एव** सन्तः पुत्रजन्मन्यावश्यका ये मङ्गलोपचारास्तेषाम् [ **सन्मङ्गलोपचाराणाम्** ] **आदिरचना** प्रथमक्रिया **अभवत्** ॥

कुमाराः कृतसंस्कारास्ते धात्रीस्तन्यपायिनः ।
आनन्देनाग्रजेनेव समं ववृधिरे पितुः ॥ ७८ ॥

कृताः संस्कारा जातकर्मादयो येषां ते [ **कृतसंस्काराः** ]। धात्रीणामुपमातॄणां स्तन्यानि पयांसि पिबन्तीति तथोक्ताः [ **धात्रीस्तन्यपायिनः** ] **ते कुमाराः** अग्रे जातेन **अग्रजेन** ज्येष्ठेन **इव** स्थितेन **पितुः आनन्देन समं ववृधिरे** । कुमारवृद्ध्या पिता महान्तमानन्दमवापेत्यर्थः । कुमारजन्मनः प्रागेव जातत्वादग्रजत्वोक्तिरानन्दस्य ॥

स्वाभाविकं विनीतत्वं तेषां विनयकर्मणा ।
मुमूर्च्छ सहजं तेजो हविषेव हविर्भुजाम् ॥ ७९ ॥

**तेषां** कुमाराणां संबन्धि **स्वाभाविकं** सहजं **विनीतत्वं विनयकर्मणा** शिक्षया । **हविर्भुजाम्** अग्नीनां **सहजं तेजो हविषा** आज्यादिकेन **इव** । **मुमूर्च्छ** ववृधे । निसर्गसंस्काराभ्यां विनीता इत्यर्थः ॥

---

१ ' तस्य ' इ० २ ' शोभा द्वैगुण्यमादधे ' इ. पा० । ३ जगुः कलं च गन्धर्वा ननृतुश्चाप्सरोगणाः । देवदुन्दुभयो नेदुः पुष्पवृष्टिश्च खात्पतत् ॥ इ. रामा० । ४ ' अमूर्च्छत् ' इ, पा०

**परस्पराविरुद्धास्ते तद्रघोरनघं कुलम् ।**
**अलमुद्द्योतयामासुर्देवारण्यमिवर्तवः ॥ ८० ॥**

परस्परमविरुद्धा अविद्विष्टाः [ **परस्पराविरुद्धाः** ]। सौभ्रात्रगुणवन्त इत्यर्थः । **ते** कुमाराः **तत्** प्रसिद्धम् **अनघं** निष्पापं **रघोः कुलम्** । **ऋतवः** वसन्तादयः **देवारण्यं** नन्दनम् **इव** । सहजविरोधानामप्यृतूनां सहावस्थानसंभावनार्थं देवविशेषणम् । **अलम्** अत्यन्तम् **उद्द्योतयामासुः** प्रकाशयामासुः । सौभ्रात्रवन्तः कुलभूषणायन्त इति भावः ॥

**समानेऽपि हि सौभ्रात्रे यथोभौ रामलक्ष्मणौ ।**
**तथा भरतशत्रुघ्नौ प्रीत्या द्वन्द्वं बभूवतुः ॥ ८१ ॥**

शोभनाः स्निग्धा भ्रातरो येषां ते सुभ्रातरः । 'नद्यृतश्च' इति कप् न भवति 'वन्दिते भ्रातुः' इति निषेधात् । तेषां भावः सौभ्रात्रम् । युवादित्वादण् । तस्मिन् [ **सौभ्रात्रे** ] **समाने** चतुर्णां तुल्ये **अपि हि यथा उभौ रामलक्ष्मणौ प्रीत्या द्वन्द्वं बभूवतुः । तथा भरतशत्रुघ्नौ** प्रीत्या द्वन्द्वं द्वौ द्वौ साहचर्येणाभिव्यक्तौ बभूवतुः । 'द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रयोगाभिव्यक्तिषु' इत्यभिव्यक्तार्थे निपातः । क्वचित्कस्यचित्स्नेहो नातिरिच्यत इति भावः ॥

**तेषां द्वयोर्द्वयोरैक्यं बिभिदे न कदाचन ।**
**यथा वायुविभावस्वोर्यथा चन्द्रसमुद्रयोः ॥ ८२ ॥**

**तेषां** चतुर्णां मध्ये **द्वयोर्द्वयोः** । रामलक्ष्मणयोर्भरतशत्रुघ्नयोश्चेत्यर्थः । **यथा वायुविभावस्वोः** वातवह्न्योरिव । [ **यथा** ] **चन्द्रसमुद्रयोः** इव च । **ऐक्यम्** ऐकमत्यं **कदाचन न बिभिदे** । एककार्यत्वं समानसुखदुःखत्वं च क्रमादुपमाद्वयाल्लभ्यते । सहजः सहकारी हि वह्नेर्वायुः । चन्द्रवृद्धौ हि वर्धते सिन्धुस्तत्क्षये च क्षीयत इति ॥

**ते प्रजानां प्रजानाथास्तेजसा प्रश्रयेण च ।**
**मनो जह्रुर्निदाघान्ते श्यामाभ्रा दिवसा इव ॥ ८३ ॥**

**प्रजानाथाः ते** कुमाराः **तेजसा** प्रभावेण **प्रश्रयेण** विनयेन **च** । **निदाघान्ते** ग्रीष्मान्ते । श्यामान्यभ्राणि मेघा येषां ते **श्यामाभ्राः** । नातिशीतोष्णा इत्यर्थः । **दिवसा इव प्रजानां मनो जह्रुः** ॥

---

१ केनाप्यान्तरेण प्रेम्णेति भावः । तथा चोत्तरचरिते–'व्यतिषजति पदार्थानान्तरः कोपि हेतुः' इति, अन्यत्र च–'भूयसा जीविधर्म एष यद्रसमयी कस्यचित्क्वचित्प्रवृत्तिः ।' इ० । केचित् कौसल्यापायसांशेन लक्ष्मणस्य कैकेयीपायसांशेन च शत्रुघ्नस्य जातत्वाद्रामलक्ष्मणयोः भरतशत्रुघ्नयोः द्वंद्वचरत्वमाहुः । यथा पद्मपु०–युगं बभूवतुस्तत्र सुस्निग्धौ रामलक्ष्मणौ । तथा भरतशत्रुघ्नौ पायसांशवशात्स्वतः ॥ इति ।

**स चतुर्धा बभौ व्यस्तः प्रसवः पृथिवीपतेः ।**
**धर्मार्थकाममोक्षाणामवतार इवाङ्गवान् ॥ ८४ ॥**

**स चतुर्धा** । ' संख्याया विधार्थे धा ' इत्यनेन धाप्रत्ययः । **व्यस्तः** विभक्तः **पृथिवीपतेः** दशरथस्य **प्रसवः** संतानः । चतुर्धा **अङ्गवान्** मूर्तिमान् **धर्मार्थकाममोक्षाणाम् अवतार इव बभौ** ॥

**गुणैराराधयामासुस्ते गुरुं गुरुवत्सलाः ।**
**तमेव चतुरन्तेशं रत्नैरिव महार्णवाः ॥ ८५ ॥**

**गुरुवत्सलाः** पितृभक्ताः **ते** कुमाराः **गुणैः** विनयादिभिः **गुरुं** पितरम् । चतुर्णामन्तानां दिगन्तानामीशं **चतुरन्तेशम्** । ' तद्धितार्थ– ' इत्यादिनोत्तरपदसमासः । **तं** दशरथम् **एव महार्णवाः** चत्वारः **रत्नैरिव** । **आराधयामासुः** आनन्दयामासुः ॥

**सुरगज इव दन्तैर्भग्नदैत्यासिधारै-**
**र्नय इव पणबन्धव्यक्तयोगैरुपायैः ।**
**हरिरिव युगदीर्घैर्दोर्भिरंशैस्तदीयैः**
**पतिरवनिपतीनां तैश्चकाशे चतुर्भिः ॥ ८६ ॥**

भग्ना दैत्यानामसिधारा यैस्तैः [ **भग्नदैत्यासिधारैः** ] **चतुर्भिर्दन्तैः सुरगजः** ऐरावतः **इव** । पणबन्धेन फलसिद्ध्या व्यक्तयोगैः अनुमितप्रयोगैः [ **पणबन्धव्यक्तयोगैः** ] । **उपायैः** चतुर्भिः सामादिभिः **नय** नीतिः **इव** । युगवद्दीर्घैः [ **युगदीर्घैः** ] चतुर्भिः **दोर्भिः** भुजैः **हरिः** विष्णुः **इव तदीयैः** हरिसंबन्धिभिः **अंशैः** अंशभूतैः चतुर्भिः **तैः** पुत्रैः **अवनिपतीनां पतिः** राजराजो दशरथः **चकाशे** विदिद्युते ॥

**इति महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया संजीविनीसमाख्यया व्याख्यया समेतो महाकविश्रीकालिदासकृतौ रघुवंशे महाकाव्ये रामावतारः नाम दशमः सर्गः ।**

---

१ ' अङ्गभाक् इ० पा० । २ ऐरावतश्चतुर्दन्त इति प्रसिद्धिः । तथा च भारतम्–श्वेतदन्तैश्चतुर्भिस्तु महाकायस्ततः परम् । ऐरावतो महाभागोऽभवद्वज्रभृता धृतः॥ इति । ३ आदावुपमानान्युक्त्वा पश्चाद्राज्ञां पतिरित्यादि वक्तव्यम् । नो चेत्तच्छब्दस्य पूर्वपरामार्शित्वात्तदीयैरिति न घटते । ऐरावतोपमया राज्ञो वक्तव्यत्वं दन्तोपमया तेषामभग्नत्वम् । इ. हे.

# TRANSLATION.



## CANTO I.

1. For the right comprehension of words and their senses, I salute Pârvatî (the mountain's daughter) and Parames'vara (the supreme lord) the parents of the universe, who are (perpetually) united like words and their meanings.

2. The (exalted) race sprung from the sun, and my intellect of limited scope (to describe it),—how unequal the two! It is under a delusion that I am desirous of crossing, by means of a raft, the ocean, so difficult to be crossed.

3. Dull (of intellect) and yet aspiring after a poet's fame, I shall expose myself to ridicule, like a dwarf, who, through greed, uplifts his hands for a fruit accessible (only) to the tall.

4. Or rather, I shall find entrance into this race (I may enter upon the task of describing this line of kings), to which the door of description has already been opened by poets of yore, as does a thread into a gem previously perforated by a diamond-pin.

5-6. I, who am such, will describe the line of the Raghus, though my powers of expression are scanty, being impelled to this inconsiderate act by their (transcendental) virtues coming to my ears:—the Raghus, who were pure from birth, who persevered in works until they bore fruit, who were lords of the earth bounded by the ocean, and the track of whose cars lay as far as the celestial regions (9, 5); who offered oblations to the holy fires in accordance with the prescribed rules, who honoured supplicants (by gifts) according to their desires, who inflicted punishment in proportion to the crime, and who (woke up, or) were on the alert at the proper time (6); who amassed wealth for giving it away in charity, who spoke sparingly for the sake of truthfulness, who were desirous of conquest for fame (alone), and who consorted with their wives solely for the sake of offspring (7); who (again) spent their boyhood in the study of letters, who enjoyed pleasures in their youth, who led an anchorite's life in their old age, and who finally resigned their bodies by means of *yoga* (*i. e.* fixing their minds in meditation upon the supreme spirit). (8).

10. It behoves the learned who alone can discriminate what is good from what is bad (*lit.* who are the causes of the distinction

between good and bad) to listen to this (poem); for it is in fire alone that the purity or alloy of gold is tested.

11. There was a king, by name Manu, the son of Vivasvat, esteemed by the wise, who was the first of kings, as the sacred syllble *Om* is of the Vedas.

12. In this pure race was born a purer king, Dilîpa by name, a supremely eminent monarch, just as the purer moon arose from the pure milky ocean.

13. Broad-chested, stout-shouldered ( *lit.* having shoulders like those of a bull), tall as the *s'a'la* tree, and massive-armed, he looked like the military virtue (heroism) appearing in a corporeal frame fitted for the discharge of its duties.

14. Like the mountain Meru, he stood occupying (dominating) the whole earth, with a frame that exceeded all in strength, outshone all in lustre and transcended all in majesty.

15. His intellect was commensurate with his bodily form, his knowledge with his intelligence, his undertakings with his knowledge, and his success with his undertakings.

16. By his kingly virtues which were both awe-inspiring and amiable he was to his subjects, at once unapproachable and inviting, just as the ocean is on account of its monsters and gems.

17. Acting like the rim of a wheel under a skilful driver, the subjects of him, their guide, swerved not even to the width of a line from the path that had been trodden from the days of Manu.

18. He received taxes from his subjects only for the promotion of their welfare: for the sun sucks up water simply to give it back a thousand-fold (in the shape of rain).

19. His army was but an appendage to him; his means of accomplishing his objects were only twofold–an intelligence that was unfoiled in ( penetrated ) the branches of learning, and the string stretched out on the bow.

20. His counsels being secret and his countenance and designs inscrutable, his measures, like the impressions (left on the mind by the good or evil deeds) of a prior existence, were to be inferred only from their results.

21. (Though) without fear, he protected his body; unafflicted with disease he performed religious rites; unavaricious he amassed wealth; and unaddicted he enjoyed pleasures.

22. His modest reserve, notwithstanding his knowledge; forbearance, in spite of power; and absence of boasting, in the presence of beneficence; thus virtues, from their association in him with others (of opposite nature), were, as it were, like brothers born of the same womb (linked in a tie of brotherhood),

23. He, who was not attracted by carnal pleasures, who had seen the very end of (mastered) the branches of knowledge, and who took delight in the discharge of his duty, had all the perfection of old age without being (actually) aged.

24. By reason of his educating, Protecting, and maintaining his subjects, he was (virtually) their father; their (real) fathers were merely the source of their birth.

25. He punished criminals for the preservation of order, and had married only for progeny, so that, even his pursuit of wealth and sensual pleasures was simply the (pursuit of) *Dharma* ( the performance of duty).

26. He drained (collected tributes from ) the earth for the performance of sacrifices, and Indra drained the heavens for (the growth of) crops; thus by an exchange of their wealth the two sustained the twin worlds.

27. Other kings, indeed, could not attain his fame for protecting people; for (the crime of) theft having turned away from men's property, survived only in the term (expressive of theft ).

28. A good man, though unfriendly, was acceptable to him, just as (though distasteful) medicine is to the sick; and even a friend, if wicked, was to be discarded, like a finger bitten by a cobra.

29. Verily the Creator fashioned him with the ingredients of the five great elements; for all his qualities had solely the good of others (for their object).

30. He governed the earth as if it were a single city, having the shores of the seas for its line of ramparts; and the seas themselves for its moats, and owning no other rule.

31. He had a wife, like Dakshiṇâ of Yajña, a princess of the royal line of the Magadhas, by name Sudakshiṇâ, a name grown out of her amiability (or generosity, benignity).

32. He, the lord of the earth, though he had a large harem, regarded himself as having a wife by her, a high-minded lady, and by the goddess of royal fortune.

33. (Ever) longing for the birth of a son from her, his worthy consort, he passed his days in hopes, the realization of which was long delayed.

34. With a view to perform some religious rite that he might obtain a son, he took down from his arms the heavy yoke of the world (withdrew himself from the heavy task of governing the world) and entrusted it to his ministers.

35. Then being purified, the two, husband and wife, worshipped the Creator of the world with the desire of obtaining a son, and then started for the hermitage of Vasishṭha, their spiritual guide.

36. They drove in a single chariot which made a deep but agreeable sound, and (therefore) looked like lightning and Airàvata riding a cloud of the rainy season.

37. That there should be no disturbance to the hermitage, they took a limited retinue with them; but on account of their peculiar majesty they looked as if they were surrounded by an army.

38. They were fanned (as they passed on) by breezes of a pleasant touch, wafting the odour of the exudations of the *S'a'la* trees, scattering about the pollen of flowers, and gently shaking the rows of the forest trees.

39. They listened to the notes, delightful to the mind, of peacocks that raised their necks at (on hearing) the rumbling of the wheels of the chariot, notes of a double kind and corresponding (in pitch) to the *Shaḍja* air.

40. They observed the similarity of each other's eyes in those of the couples of deer, that moved a little out of the way and had their eyes riveted on the gliding car.

41. Occasionally they raised their heads (attracted) by the cranes uttering sweet notes, and forming, as it were, as they flew in a row, a gateway-garland unsupported by posts.

42. On account of the favourableness of the wind betokening the fulfilment of their wish, the tresses of the queen and the turban of the king were not touched by the dust raised by the horses.

43. They smelt the highly-pleasing fragrance of the lotuses in the tanks, cool by its coming in close contact with the ripples and imitating (the fragrance of) their breath.

44. In the villages granted by themselves and marked with the sacrificial posts, they accepted, after they had received the

offerings of honour, the unfailing benedictions of the sacrificers (Bráhmaṇas who properly performed the sacrificial rites.)

45. They inquired of the aged cowherds, that came to them with fresh butter, the names of the wild trees by the road-side.

46. As they journeyed on, clad in bright apparel, an indescribable beauty was visible in them, like that in the conjunction of the constellation *Chitrá* with the moon, when freed from the mists of winter.

47. Engaged in showing this thing and that thing (*i. e.* the various curiosities of the road) to his spouse, the lord of the earth, of amiable appearance and worthy to be compared with Budha, was not even aware of the whole distance travelled over.

48. He (the king,) of a fame unattainable (by any one else) and having the queen for his companion, reached, at dusk, with his steeds fatigued, the hermitage of the mighty sage who always practised self-control.

49. (The hermitage) which was (then) being filled by anchorites returning from other forests bringing with them sacrificial sticks, holy grass, and fruits, and welcomed back by the sacred fires advancing forward in an invisible form;

50.—which was being crowded with deer accustomed to receive a share of the *nívára* corn (wild rice) and blocking up the doors of the huts, as if they were the children of the wives of the hermits;

51.—wherein the saplings were quitted by the hermits' daughters immediately after the watering was over, in order to inspire confidence in the birds accustomed to drink water from the basins round the roots of the trees;

52.—where the antelopes were chewing the cud, squatting in the courtyards of the huts in which wild rice had been collected into heaps, at the decline of the evening sunshine.

53.—which was purifying the casual visitors coming towards it by the columns of smoke, indicating the blazing of fires, shaken up by the wind and charged with the odour of the offerings.

54. Then having ordered the charioteer to give rest to the horses, the king assisted his wife to alight from the car and himself also got down.

55. The hospitable saints, with their senses perfectly controlled, gave an honourable welcome to him, their worthy protector,

who was guided by the principles of justice, and to his royal consort.

56. When the evening rites were over, the King saw the treasure of penance (Vasishṭha) with Arundhatî seated behind him, like the god of fire with the goddess *Sva'ha'* sitting behind.

57. The king and the queen, the princess of Magadha, seized (touched) their feet in adoration, and the spiritual guide and his wedded spouse greeted (blessed) them with affection in return.

58. The sage asked him, who was a hermit in the hermitage of a kingdom, and whose fatigue cansed by the jolting of the car had been removed by the act of hospitality, whether all was right with his kingdom.

59. Then, before the sage, the repository of the Atharva-lore, he, the lord of wealth, who had conquered the cities of the enemies, and was foremost among eloquent men, began (entered upon) a speech full of sense.

60. "Proper, indeed, it is that welfare should reign in all the seven elements of my state, of whose God-sent and man-caused calamities you are the averter.

61. My arrows which can hit only a visible mark, are, as it were, rendered futile by the spells, which discomfit enemies from a distance (even before they are seen), of you the author of incantations.

62. O sacrificer, the oblation duly offered by you to the holy fires turns itself into rain for nourishing the crops, which, else, would wither by drought.

63. That my subjects live the full period of human life, that they are free from fears, and are never visited by public calamities, is all due to (the virtue of) your spiritual power.

64. When I am thus taken care of by you, my preceptor, the son of Brahman, and so am free from calamities, why should not my prosperity be uninterrupted?

65. But, even the (sovereignty of the whole) earth, with all its islands, though the yielder of the precious products, does not please me, who have not seen a worthy offspring born of this your daughter-in-law.

66. Surely my departed ancestors, foreseeing the cessation of exequial offerings, after my death must not have been eating their fill at the S'ràddha ceremony, being intent upon storing up the obsequial offerings (for future use).

67. Verily the libation of water, offered by me, is drunk, rendered lukewarm with their sighs, by my forefathers, thinking that it would be difficult to be obtained after my death.

68. I, therefore, with my soul purified by the performance of sacrifices, but obscured by want of issue, am both shining and not shining like the mountain *Loka'loka* (which is lighted on one side and dark on the other).

69. Religious merit, resulting from the performance of penance and acts of charity, produces happiness in the next world ; but offspring, of pure extraction, leads to bliss in the next, as also in this world.

70. How is it, O mighty sage, that you are not grieved to see me destitute of the same, like a sapling of the hermitage, watered personally through affection, bearing no fruit ?

71. Know then, O mighty one, that the last debt has been causing me unendurable pain, as the tie-post piercing the vitals, does to an elephant, deprived of the bath.

72. It behoves you, O father, to do that by which I may be released from it; for when an object is difficult of attainment to the descendants of Ikshváku, the success depends upon you."

73. Thus respectfully informed by the king, the saint remained for a moment, with his eyes fixed in meditation, like a tank, with its fish asleep.

74. He whose soul was purified by ascetic exercises, discovered by meditation the cause of the stoppoge of issue to the lord of the earth and then informed him thus:—

75. "On a former occasion, when you were returning to the earth, having waited upon Indra, *Surabhi* ( the divine cow ) was reposing under the shade of a *Kalpa*-(desire-granting) tree on your way.

76. Full of thoughts of this your queen, bathed after menstruation, being afraid to violate a sacred obligation ( to her ), you did not act properly towards her who deserved the honour (*lit.* act) of circumambulation.

77. (And) she cursed you thus :—'Since you have shown disrespect to me, no progeny shall be born to you unless you propitiate my daughter.'

78. Neither by you, nor by your charioteer, was the imprecation heard (being pronounced), as the stream of the Celestial

Ganges was then in tumultuous uproar on account of the elephants of the quarters sporting wantonly in it.

79. Know, then, that the attainment of your desire is barred by (that disrespect towards the cow); for omisssion of honour to those worthy of honour obstructs one's welfare.

80. That heavenly cow, however, is at present dwelling in the nether regions, the gates of which are blocked up (guarded) by serpents, for the supply of oblations in the prolonged sacrificial session which Varuṇa has instituted.

81. Do you then take the daughter of *Surabhi* as her representative, and with your wife, propitiate her in a state of purity; for she, when pleased, is a milker of (gratifies) desires."

82. Just as he was speaking thus there came back from the forest the cow, Nandinī by name, blameless and the source (provider) of oblations to that habitual sacrificer.

83. Of a soft pink colour, like a (new) leaf, and bearing a slightly-curved mark of white hair (appearing on her forehead), just as the evening-sky (pale-red like the young shoot), bears the crescent of the new moon.

84. With a large udder, and drenching the earth with a stream of tepid milk, which flowed at the sight of her calf and which was more sanctifying than even the ablution performed at the conclusion of a sacrifice.

85. Imparting to the king the sanctity that arises from ablutions in a holy stream, by means of the particles of dust raised by her hoofs and coming from near in contact with his body.

86. Seeing her of holy appearance, the receptacle of ascetism (the sage), versed in reading omens, again addressed him (the king), whose officiating priest he was, and whose desire to gain his object was not to be barren (was sure to be fulfilled).

87. "Know for certain, O king, that the fulfilment of your wish is not far distant, since this blessed one has turned up the very moment her name was mentioned.

88. It behoves you (therefore) to propitiate this cow by unceasing attendance upon her, and living npon the products of the forest, just as one does (gains) knowledge by close application.

89. You should move on when she moves on, stand when she stands, sit down when she does so, and drink water when she has done the same.

90. And let this our daughter-in-law too, being pure and full of devotion, follow her, after she is worshipped, in the morning, as far as the bounds of the penance-grove, and also advance thither in the evening to receive her.

91. Thus be devoted to her service, until she is propitiated ; may no obstruction overtake you ; may you stand, like your father, at the head of those who are blessed with worthy sons !"

92. The disciple ( of the sage, ) who knew the proper place and time, bowing accepted, in a pleased mood, with his queen, the command of his spiritual instructor, saying, "I will do so. "

93. Then at night, the learned son of the Creator, who always spoke agreeable and truthful words, dismissed the king, of distinguished fortune (or of blazing radiance ) to retire to bed.

94. Although possessed of the superhuman power due to ripe asceticism, the sage, learned in ritual, having regard for the vow ( undertaken by the king ), provided him with such accommodation as was suited to a forest life.

95. The king, accompanied by his wife free from pollution, occupied a hut pointed out by the *kulapati*, and ( there ) lying on a bed of *Kuśa* grass passed the night, the close of which was announced by the sage's disciples, chanting (aloud ) the Veda.

---

## CANTO II.

1. Then at dawn, the lord of men, to whom his fame was a treasure, set free for ( going out to ) the forest the cow of the sage whose calf had been tied up after it had its suck and who was made to accept sandal, garlands of flowers &c. ( by him ) through his wife.

2. The lawful wife of the lord of men, worthy of being named at the head of chaste ladies, followed the path of the cow, the dust whereof was consecrated by the plantings of her hoofs, as ( closely as ) Smṛiti ( remembered law) follows the sense of S'ruti.

3. The kind-hearted monarch, lovely with glory, having asked his beloved spouse to return, (himself) began to guard the daughter of *Surabhi*, whose milk exceeded in quantity the waters of the four seas, as if he was protecting the earth itself, tranformed into a cow, with the four oceans turned into four teats.

4. By him following the cow as a vow, the rest of his retinue too was sent back; the protection of his body was not due to an

external source: for Manu's descendants were ever protected by their own valour.

5. By (giving her) savoury mouthfuls of grass, by scratchings, by keeping off flies, and by unobstructed rovings at will, thus did the supreme monarch become diligently engaged in her propitiation.

6. The lord of the earth followed her like a shadow—standing still whenever she stopped, proceeding on when she went on, patiently sitting down when she sat down, and drinking water when she drank it.

7. Possessing kingly fortune (or royalty) which, with its insignia cast aside, could be inferred from the super-eminence of majesty, he resembled a royal elephant, inwardly in condition of rut but without the lines of ichor manifested externally.

8. Marked with hair tied up with the tendrils of creepers, he, with his bow strung, wandered in the wood, as if wishing to discipline the ferocious beasts of the forest, under the pretext of guarding the sacrificial cow of the sage.

9. The trees on either side of the king, mighty like the god with the noose (Varuṇa), (as he passed on) unattended by servants, uttered, as it were, the exclamations of "Victory to the king; here he comes," by means of the notes of impassioned birds.

10. On him, bright as fire and worthy of adoration, the young creepers, agitated (urged) by the wind, showered their flowers, as he passed by their side, as the maidens of the city (*lit.* the daughters of citizens) would the customary *la'ja's* (fried paddy).

11. The female deer, gazing on his person declared to be full of feelings, tender with compassion, by their hearts remaining unaffected with fear though he wielded a bow, obtained the fruit of the great expanse of their eyes.

12. He heard (as he went on) his own lofty glory, loudly carolled from the bowers by the sylvan nymphs, in a manner in which the purpose of (the accompaniment of the music of) flutes was served by singing bamboos, having their holes filled with wind.

13. The wind charged with the spray of the mountain streams, and bearing the fragrance of the gently shaken flowers of the trees, served (refreshed) him, who, purified by his righteous conduct, was oppressed by heat as he had no umbrella with him.

14. As he, the protector, entered the wood, the forest-conflagration became extinguished even without a shower (of rain), exuberant was the growth of fruits and flowers, and among animals, the strong did not oppress the weak.

15. Having purified the spaces between the directions by their courses, at the close of the day the light of the sun, and the cow of the sage, both red like the tint of a (fresh) leaf, began each to return to their abode.

16. He, the protector of the middle world, followed her, who supplied to the sage the necessary articles for the rites due to gods, manes and guests; and attended by him, esteemed by the good, she, too, looked like (as graceful as) faith incarnate, when accompanied by observance (also embodied).

17. He passed (returned), beholding the woods which were darkening up, in which herds of wild boars were emerging from the pools, in which peacocks were flying towards their roosting trees and where antelopes were squatting on the swards.

18. The cow (that had calved but once) on account of her exertion to bear the burden of her full udder, and the king by reason of his massive body, both decorated with their charming gaits the way back to the penance-grove.

19. His wife drank him in, from the skirt of the forest, as he returned following the cow of Vasishṭha, with winkless eyes, that had fasted long, as it were.

20. Placed in front, on the way, by the lord of the earth, and received by the king's wife ( his associate in religious rites ) advancing towards her, the cow shone between them, like twilight situated between day and night.

21. Sudakshiṇâ, with a pot of whole rice in her hands went round that milch-cow, keeping her on the right side, and, bowing, worshipped the broad space between her horns (the forehead,) the very door as it were to the fulfilment of her wish.

22. They both ( the king and queen ) were delighted to see that the cow, though eager to meet her calf, patiently accepted the worship offered to her: for, verily the signs of pleasure of (venerable) beings of her type, manifested towards those full of ( or, who approach them with ) devotion, indicate the near fulfilment ( of their wishes ).

23. After having shampooed the feet of his preceptor and his wife and having finished his evening devotions, Dilípa, who had

uprooted his foes by ( the might of ) his arms, again waited upon the milch-cow, as she sat down after the milking was over.

24. He, the protector, accompained by his wife, sat close after the cow, near whom were placed a lighted lamp and offerings of worship ; and as gradually she slept he slept too, following her example, and rose in the morning when she awoke from sleep.

25. Three times seven days passed away, while he, of adorable fame and accustomed to deliver persons in distress, was thus engaged, with his royal consort, in keeping the vow for the birth of a son.

26. On the following day, the cow that supplied to the sage materials for sacrificial offerings, desirous of testing the devotion of her follower, entered a cave of the mountain Himâlaya ( lit. Gaurî's father ) where tender grass had grown in ( or, owing to ) the vicinity of the fall of the Ganges.

27. A lion, it appeared, unobserved in his attack by the king, who had directed his eyes to the beauty of the mountain, confident that the cow was not assailable even in thought, by the beasts of prey, forcibly pulled her.

28. Her cry, deepened (or, prolonged) by its reverberations in the cave, drew back, by catching as it were in a noose of ropes, the sight of the king, the protector of the distressed, that was riveted on the King of mountains.

29. That eminent archer saw a lion, seated upon the rosy cow, like a full-blossomed *lodhra* tree, situated on the table-land of a mountain full of red minerals.

30. Then the king, who walked as undauntedy (or, proudly) as a lion ( lord of brutes ), who was the protector of the distressed, and who had by force extirpated his enemies, being thus affronted, wished to take out an arrow from his quiver to slay the lion, who merited death.

31. As he wished to strike, his right hand, with its fingers stuck fast to the haft of the arrow, the heron's feathers whereof were beautifully tinted by the lustre of its nails, remained with its action committed, as it were, to a picture.

32. With his rage increased by the paralysis of his arm, the king burnt within himself by the fire of his own energy, which could not touch the offender though very near, like a cobra with its power restrained by charms and herbs.

